# गङ्गातरङ्गिणी

पण्डितराज–न्यायतिलक

श्री मान्तिट्ट 'शास्त्रशर्म' (कुञ्ञुनम्पूतिरि) महाशयैः

विरचिता

मूलकारविरचितया व्याख्यया

समन्विता

श्री तरकल् शङ्करनुण्णिपारशवेन

प्रकाशिता

---



राजाप्रस्, पूर्णवेदपुरी

१९७६

महामहिमश्री

दर्शनकलानिधिरामवर्म्मपरीक्षिद्रोश्रीमहाराजानाम्

# अभिप्रायः ।

---

इह जगति तनुमतां निखिलसुखसाधनं धर्म एव समार्जनीय इति वेद स्मृतिपुराणादिषु बहुशः समुद्घुष्यते। सर्ववर्णाश्रमसाधारणश्च धर्मस्तीर्थाटनपुण्य क्षेत्रवासादिरूप इति तत्रैव प्रतिपादितम्। तादृशेषु च तीर्थेषु गङ्गैव महत्तमा, क्षेत्रेषु श्रीवाराणस्येव मुख्यतमा इत्ययमपि सर्वाभ्युपगतो विषयः। प्रकृतग्रन्थ निर्मातॄणां गोश्रीमहाराजवितीर्ण'तार्किकतिलक''पण्डितराज'बिरुदविभूषितानामस्मत्सती र्थ्यानां मान्तिट्ट शास्त्रशर्म (कुन्ह्युनम्पूतिरि) महाशयानां जन्मान्तरीयसुकृतविशेषपरि पाकवशात् कञ्चन कालं श्रीकाशीक्षेत्रवासस्समजायत। तदा प्रभृत्येतेषामनन्य साधारणमहिमवस्तु श्रीविश्वनाथ-तत्प्रियतमक्षेत्र-तदन्तिकस्थगङ्गाप्रवाहेषु निरति शया भक्तिः क्रमेण परिपुष्टा गङ्गातरङ्गिणीनामकमहास्तोत्ररूपेण बहिर्निर्गता लाल सीति। अहो, एतेषां धन्यतमता, यदेतैरेतत्स्तोत्ररत्नद्वारेण बहूनामपि परेषा मनल्पं सुकृतमार्जयितुं सुलभ उपायस्समपादि ॥

स्तवोऽयं स्वयं रमणीयत्वात्, रमणीयार्थप्रतिपादकत्वाच्च सत्काव्यरसिकाना मत्यन्तमाह्लादमुत्पादयतीत्यत्र न विशयलेशः। मूले तत्र तत्रोपन्यस्तविषयाणां दुरूह तया किमपि चारुतरं व्याख्यानमप्येतैर्विरचितं पठितॄणां महते भवत्युपकाराय। स्तोत्ररत्नस्यास्य प्रचुरः प्रचारः, निर्मातॄणां निश्रेयसान्तास्समग्रास्समृद्धयश्च यथा भवेयुः, तथा अनुगृह्णातु पूर्णत्रयीशः करुणानिधिर्भगवान् नारायण इति प्रार्थ्यते ॥

एतेषां सतीर्थ्यलाभधन्यः

परीक्षित्पराख्य.

रामवर्मा।

# अवतारिका।

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

प्रकृप्यते हि तीर्थेषु मूर्तित्रयेणापि मानिता गङ्गा, पुण्यस्थलेषु श्रीकाशी, भगवदर्चामूर्तिषु श्रीविश्वनाथश्च। श्रुतिभिरपि मुक्तकण्ठं प्रशस्यमानप्रभावेष्वमीषु त्रिषु भगवत्या भागीरथ्या नुतिरूपमिदं प्रबन्धरत्नम्। अनुषङ्गतस्तदन्ययोरुभयोर्महिमा प्यसकृदत्र वर्णितो भागवताग्रणीभिर्ग्रन्थकारैः। पर्याप्तं खल्वेतावदेव वचनं सता मत्र प्रवृत्त्युत्पादे। ततोऽधिकं ग्रन्थाधिकारिकं वचो नूनमनावश्यकम्, मादृशा मल्पधियामयुक्तञ्च। ग्रन्थकर्तृचरित्रन्तूच्यमानं कालान्तरे कदाचन कस्यचिच्चरि त्रान्वेषिणस्स्यान्नामोपयोगीति तन्मात्रं मनागिह वक्तुमुत्सहे ॥

अस्ति केरळेषु सुप्रसिद्धमत्यन्तपावनं श्रीगुरुवायुपुरं दक्षिणेन 'वन्निट्टड्' इति व्यपदिश्यमानो देशविशेषः। षट्कर्मनिरतानां श्रोत्रियाणां सन्निवेशैर्धर्मक्षेत्रा यमाणस्य तस्य तिलकवल्लालसीति 'मान्तिट्ट'पदेन सुप्रतीतं भूदेवायतनम्। ब्रह्मनिष्ठानां तापसोपमवृत्तीनामग्रजन्माग्रगण्यानां परम्परयाऽध्युषिते तस्मीन् महा च्छान्दसात्सुब्रह्मण्याभिधानाद्विदुषस्तद्धर्मपत्न्या पार्वतीनाम्न्यामपरारुन्धत्यामुदपद्यन्त सहस्रोत्तरद्विपञ्चाशे वत्सरे(1052 M. E.)पूज्यपादा बन्धुरतरनुतिप्रबन्धस्यास्य प्रणेतारः श्रीशास्तृशर्माणः (कुञ्जुनम्पूतिरि) ॥

आरूढेषु वृषं बुधार्कदनुजाचार्येषु, मान्दौ तुलां,
सिंहं राजनि, मङ्गळे च मकरं चापं गुरावाश्रिते।
कुम्भे सौरितमोयुते च मिथुने लग्ने मघासङ्गते
श्रीमानाप समः कणादमुनिना श्रीशास्तृशर्मा जनिम् ॥

पञ्चमे वयसि पित्रा सुशिक्षितमातृकाक्षरराशयस्सप्तमे चोपनीता एते समनन्त रान् सप्त वत्सरान् ज्येष्ठभ्रातुरन्तिके सपदाग्रसंहितामध्यगीषत। पञ्चदशे वयसि निर्वृत

समावर्तनात् वर्षद्वयं श्रीशिवपुर (Trichur) मध्यास्य पदपाठं दृढीकुर्वन्त एव काव्याध्वसु स्वैरचारे चातुरीमप्यलभन्त। अथ च परमाद्भुतप्रभावयोगीश्वर सान्निध्यविशुद्धसमृद्धं 'किराङ्गाट्' इति सुप्रसिद्धं सविलीसदनं कञ्चन कालमधिवसन्तः श्रीमद्रामशास्त्रिभ्यः न्यायसिद्धान्तमुक्तावल्यां शिक्षामविन्दन्त। अष्टादशे वयसि समासाद्य शास्त्रकलाकुलसदनमिति चिरादार्जितप्रशस्तिं कोटिलिङ्गपुरीं महामहोपाध्यायानां भट्टश्रीगोदवर्मराजानामन्तेवसन्तः रामस्वामिशास्त्रिप्रभृतिभिस्सवयोभिस्सह दिनकरीयमधीत्य गादाधरीं पठितुमारभन्त। शिष्याणामेषामनन्यसामान्यया विनयश्रद्धामेधादिगुणसम्पदा सुतरां प्रीता गुरवो वात्सल्यातिशयवशंवदा विद्यामिव निजां भागिनेयीमपि विनयादिशस्तशीलशालिनीं 'कोचिक्काव्' नाम्नीमन्योन्येनान्योन्यस्य धन्यतावाप्तिं निश्चिन्वाना एतेभ्यस्सहधर्मिणीं प्रत्यपादयन्। या पुनरनारतोद्यमा न्यायनये ज्योतिश्शास्त्रे च वैदुषीमुपेयुषी विद्ययापि भर्तुस्सधर्मिणीत्वमायत्तमतनुत। कृतदारपरिग्रहा अपि विद्यायामनूनानुरागा एते पञ्चभिर्वर्षैर्बाधान्तां गादाधरीं व्युत्पत्तिवादं वैयाकरणसिद्धान्तकौमुदीञ्च निस्तन्द्राध्ययननिष्कृष्टचिन्तनाभ्यासैर्निरूढसंस्कारान् कुर्वन्त॥

तस्मिन् काले गोश्रीभूमण्डलमाखण्डलातिशायिप्रभावैस्सुरक्ष्यमाणमासीदसीमशेमुषीनिर्जितनिर्जरगुरुभिश्श्रीरामवर्ममहाराजैः। ये हि वार्धके राज्याधिकारान्निवृत्ता मुनिवृत्त्या वर्तमाना राजर्षितामविन्दन्त। प्रतिवर्षन्तैर्महाराजैरात्मीयायामास्थान्यां विद्वत्सदांसि प्रावर्त्यन्त। यत्र प्रादेशिका वैदेशिकाश्च संख्यातिगास्संख्यावन्तः समगिळन्। त्रयोविंशे वयस्येतेऽपि तत्र महाराजैस्साध्यक्षे सदसीदम्प्रथमतया सन्निधाय साधारणादित्रयसामान्यलक्षणमसाधारणया नैपुण्या निरवोचन्। तत्र परीक्षकैरान्वीक्षिकीविचक्षणैरुपक्षिप्तानप्रतीक्षितपूर्वपक्षानपि व्युत्पत्तिदार्ढ्यात् प्रत्युत्पन्नमतित्वाच्चाक्षीणमुत्तरयन्तस्सभासदां हृदयानि प्रमोदमेदुराण्यकार्षुश्च। अत्यन्तोदारप्रकृतिना विशेषज्ञेन महीपतिना प्रीत्याश्चर्ययोरन्तरपर्याप्तावकाशयोर्बहिःपरीवाहरूपाभिः श्लाघाभिरुत्तमसम्भावनाभिश्च सविशेषं समाजिता अभवन्। तथैवानन्तशायिना श्रीपद्मनाभेन सनधिष्ठितायां श्रीवञ्चिभूपनगर्यां नवरात्रविद्वत्सभायां कृतसम्बन्धा यथार्हमर्हणामलभन्त॥

अत्रान्तरे जनयिता जीवितकृतकृत्यतया जडमुत्सृज्य सञ्चितसुकृतोचिरं धाम जगामेति, विद्यया समानाभ्यां जन्मना परं पूर्वापराभ्यां सोदराभ्यां सहिता एते विधिवदाहतवत्सरदीक्षा नित्यश्राद्धादिभिस्सुपुत्रधर्मं सम्यक्तरां निरवहन्। ज्यायानात्मनो भ्राता वैयाकरणः स्वयञ्च नैयायिक इत्युभौ तस्मिन् काले विद्याभ्यां व्यतिभाते स्म। १०७८ (M. E) तमे वर्षे समवसितपैतृकदीक्षानेतान्, पार्थिवानां रत्नहारित्वप्रथां समर्थयन्त इव ते श्रीरामवर्ममहाराजा निजपुरीमानाय्य स्वगुरुवरस्मारकतया स्थापितायां श्रीशेषाचार्यसंस्कृतविद्याशालायामध्यापने नियोजयामासुः। कदाचित्त्राजगुरवच्छेदकतासराल्यक्रोडपत्रस्य खण्डनकारा दिगन्तविश्रान्तयशसः प्रवयसः श्रीकाञ्चीपुरावासाश्श्रीनिवासाचार्याः (शिङ्गळाचार्याः)। विद्यावतामभिनवा विक्रमसभा ह्यासीचेषां महाराजानामास्थानी। महीपतेरीहितमनुसृत्य तैराचार्यैरपूर्वं वादविषयमवतार्य निपुणं निरूपणे प्रक्रान्ते, विज्ञानेन वृद्धा अपि वयसा युवान एते राजाज्ञया प्रातिपक्ष्येण प्रत्यवातिष्ठन्त। सदृशप्रतियोगिलाभादभूतपूर्वं प्रमदमुरसा ह्यप्रपेदुषोस्तयोरुभयोर्भीष्मपितामहकिरीटिनोरिव साभिनिवेशमच्छलमभियुञ्जानयोः सभाजुषां पुळकोद्गमकारी वादाहवस्सप्ताहं प्रववृते। यः किल परिसमाप्तिमनायि प्रतिपक्षदक्षतायास्साक्षादनुभूत्या सन्धुक्षिताभ्यामद्भुतहर्षाभ्यां विष्टम्भितचेतसामाचार्याणां तत्प्रशंसापूर्वकेणाञ्जलिबन्धेन। अन्यदा च, नवीनवादप्रस्थानमहाटवीवीरकेसरिणामनेकक्रोडपत्रनिर्मातॄणां श्रीकृष्णताताचार्याणां (अप्पावय्यङ्गार्) तनयो जनककल्पस्तर्कनये राजसभां स्वसान्निध्येन पर्यष्करोत्। तेन सममतिमहति प्रवृत्ते वादेपि नैवाभूद्विजयश्रियश्चारित्रविभ्रंशः। एवं तदा तदा प्रवृत्तासु संसत्सु समन्वितानां विदुषान्निवर्हैरस्तोकबहुमानमभिष्टुतमेतेषां विनयविशेषविभूषितं वैदुष्यम् अहन्यहनि महाराजानां प्रीतिं समेधयामास। अचिरादेव ते तार्किकतिलकबिरुदेनैतानलमकार्षुश्च। अथ कदाचिदेते राजानुमत्या कतिपयमासान् मातृगृहमधिष्ठाय 'पव्वार्नेरि'देशीयेभ्यश्श्रीमद्रामस्वामिशास्त्रिभ्यस्सुगृहीतश्रीभाष्योपदेशाः पुनरुक्तमकर्षमकुर्वन्त ब्राह्मण्यं ब्रह्मविद्यायास्सम्पत्त्या॥

गतेषु कतिपयेषु हायनेषु महाराजैरात्मनष्षष्ट्यब्दपूर्तिमङ्गल्यावसरे पूर्णवेदपुर्यां राजधानीसन्निकर्षा सुस्थापितायां शास्त्रमहापाठशालायामेते न्यायाचार्यपदे न्ययुज्यन्त।

तत्पदं विभूषयतामेतेषामभूत् प्रभूता शिष्यसम्पदपि। यस्यां पूर्वजन्मार्जितसुकृतविशेषाणां परिपाकादन्तर्भावभागधेयभागयं जनोपि जन्मनस्साफल्यं भजति। अन्तेवासिषु पुत्रेष्विवावारयन्तवत्सलानां नित्यप्रसादिनामेतेषां सा हृदयङ्गमा शिक्षणशैली अहो यतानुभूतवद्भिरेवास्वाद्यरसा स्मरणरोमन्थैः। न तु भूमिर्वाग्विभवानां कस्यापि। प्रदानेन विद्याया वृद्धिं शुद्धिञ्च यथैवामी व्यतन्वत, तथैव पुनः पुनरादानेप्यनारतमुदयुञ्जत। तस्यामेव महापाठशालायां वैयासिकं दर्शनमध्यापयद्भ्यः श्रीमत्पञ्चापगेशशास्त्रिपादेभ्यस्समाप्याणामुपनिषदामुपदेशं प्रत्यपद्यन्त। अनध्यायविरामावसरादिषु कोटिलिङ्गपुरं गत्वा गुरुवरनिषेवया प्रामाण्यवादादिषु प्रौढग्रन्थान्तरेषु, अद्वैतसिद्धिब्रह्मानन्दीयादिषु च गाढावगाढं धियमाधायाचार्या अमी नित्यविद्यार्थितामिवात्मनो व्यञ्जयन्ति स्म। ज्ञानानन्दमनुभवन्तो महान्तः न हि कदापि तृप्यन्ति ज्ञानानामेधानामग्निरिव। येषाञ्चाधिकस्सुहृत् पण्डितेभ्यः, नापरो विनोदश्शास्त्रार्थविचारात्, नान्यः पुमर्थश्च तत्त्वनिर्णयात्, बहुश्रुतानां राजबहुमतानां तेषां राजगुरुश्रीशेषाचार्यपौत्रश्रीमत्सेतुमाधवदीक्षिताचार्याणां समागमसातत्यममीषामपूर्वग्रन्थावलोकनादौ सौकर्यसम्पादकं सद्विज्ञानाभिवृद्धावुभयोरुपकारकार्यासीच्च। एवं वीतविश्रमेण परिश्रमेण विद्याम् राजप्रसादेन श्रियञ्चान्वहमुचिन्वन्तः, प्रकृत्या शान्ताः, वृत्त्या प्रयताः, कीर्त्या तुलारहिताश्च गुरुपादाः परमेश्वरप्रसादलभ्यानामभ्युदयानां पूर्णपात्रतां प्राप्ता अपि नित्यं तन्निषेवानिरतकरणतया एवावर्तन्त। महामहोपाध्यायपदप्रदानेन अमी माननीया इति महाराजैर्यथावदावेदितापि तद्दानाधिकृता भारतसार्वभौमसचिवसमा, निवेदयितॄणां पात्रज्ञतामाप्ततां च विस्मरन्तीव, हन्त गोश्रीमण्डलस्य परिमितिमल्पामुद्भाव्य अपरिमितस्यैतेषां पाण्डित्यस्य बहुमानने वैमनस्यं किल भजते स्म। वयसां पञ्चाधिकपञ्चाशतः परस्तादध्यापकपदान्निवृत्तास्समासाद्य कोटिलिङ्गपुरं प्रवयसां गुरुवर्याणां परिचर्यायां परायणा न्यवसन्, यावत्ते ब्रह्मभूयं प्रपेदिरे॥

उपाध्यायपदस्यैतैस्त्यागेपि सा महापाठशाला पूर्णत्रयीपुरी वा नैवासहतात्यन्तिकं स्वत्यागम्। अन्तरा तिरोहितं वार्षिकं राजविद्वत्सदः तस्यां महापाठशालायां सानुबन्धं पदमतानीत्। यत्र परीक्षकसदस्येषु प्रवरा व्यराजन्त गुरुचरणाः। अनतिचिरात्तस्या मरणकार्योपदेष्टॄणां समितावङ्गभावमभजन्तच। राजर्षीणामनुजन्मभि

रनुक्रमप्राप्तं भुवो भरमुद्वहद्भिः 'धार्मिकचक्रवर्ती'ति सार्थेन बिरुदेनालङ्कृतैर्महाराजैः पदे पदे राजधानीमानाय्य सप्रणयबहुमानातिशयं सत्कृताः तेषामभिलाषमानयन्तस्सन्ततं तैरनुष्ठितेषु श्रौतस्मार्तकर्मकदम्बेषु इतिकर्तव्यताविधायकाश्चाभूवन्। पण्डितराजबिरुदेन वारत्रयं वीरशृङ्खलया च विभूषिता अप्यभवन्। ११११तमे वर्षे (M. E.) व्युपरतासुरभूत् प्रसूरिति स्वीकृतसांवत्सरिकदीक्षास्स्वगृहे न्यवसन्। यदैवैतेषामपूरि वयसां षष्ट्यापि। धार्मिकचक्रवर्तिनामनुगामिनोपि सर्वे गोश्रीक्षितिरक्षिणः धर्मकार्येषु संशयनिवृत्तौ प्रमाणमेतानमन्यन्त॥

११२३तमे वत्सरे(M. E.)गोश्रीराज्यश्रीरशिश्रियत् प्राज्ययशसश्श्रीपरीक्षिदपराभिख्यया विख्यातान् श्रीरामवर्ममहाराजान्। यानमानयन्, श्रीकामकोटिपीठाधिपतयश्श्रीशङ्कराचार्यपूज्यपादाः 'दर्शनकलानिधिः' इति, श्रीशृङ्गगिरिस्थशारदापीठाधिपतयः 'अभिनवतर्कवागीशः' इति च सादरानुग्रहविनीर्णाभ्यां बिरुदाभ्याम्। यान् प्रति—

> 'विद्यानामेकपतिस्सर्वासां सागरो यथा सरिताम्।
> सद्वृत्तानां शरणं सस्यव्रातस्य नीलमेघ इव॥
>
> उत्तमधाम गुणानां प्रवराणामर्यमा यथा भासाम्।
> स्वैरनिषेव्यं सुधियां सप्रसवो भूरुहो यथालीनाम्॥
>
> स्थिरतायां कुलशैलः स्थितिरक्षायां विवस्वतस्तनयः।
> अम्भोधिर्गाम्भीर्ये धिषणो नीतौ युधिष्ठिरो धर्मे॥'

इत्यादयः स्तुत्यभिमानिनां कवीनामुक्तयो भूतार्थलेशव्याहृतय एव भवन्ति। सवयसां सतीर्थ्यानां सुचिरसाहचर्यनिरूढामात्मनि सविशेषां प्रीतिमनुग्रहतत्परताञ्च गणयन्तः, स्वस्य च तत्सेवारसं पूरयन्तः तदाज्ञया पुनरपि पूर्णवेदपुरीमध्यवसन् गुरुचरणाः। विदुषां तोषणे, विद्यानां पोषणे च नित्यमेकतानमनोभिर्महाराजैरदरादरेण सन्ततं सञ्चिन्त्यमानयोगक्षेमास्सम्प्रत्यपि तेषां प्रत्यासन्ना एव वर्तन्ते च। एवं दैवसिद्धैः पौरुषसाधितैश्च कुल–शील–सदाचार–विद्या–विख्याति–विभूत्यादिभिरशेषैरुत्कर्षहेतुभिरुपहितफलसम्पदस्सम्प्रति प्रतिपन्नवार्धकाश्श्रीगुरवः पतिदेवतया पत्न्या,

पितृदेवेन पुत्रेण, श्वशुरेश्वरया स्नुषया च सभक्त्यादरातिरेकं वरिवस्यमाना वरीवृतति ॥

सुधियां सहृदयानां समक्षमुपह्रियमाणेयं गङ्गातरङ्गिणी, प्रस्तुतैर्धार्मिकचक्रवर्तिभिर्महाराजैरात्मना समं श्रीकाशीं नीतानां तत्र कतिपयान्यहान्याहितवासानां गुरुपादानां विश्वातिशायिमहिम्नोऽश्रीविश्वनाथविष्णुपद्योस्तावत्पर्यन्तं श्रुतिमात्रगोचरयोरपरोक्षानुभूतावन्तरङ्गे परमुत्तरङ्गतां गताया भक्तितरङ्गिण्या एव परीवाहः श्लोकरूपः। प्रतितरङ्गं गङ्गां प्रस्तुत्य महादेवोत्कर्षसमर्थनपर्यवसायिन्यस्मिन् स्तवराजे तत्र तत्र निगूढानां श्रुतिपुराणाद्यर्थविशेषाणां सुप्रतीत्यर्थं मूलकृद्भिरेव कृतमल्पयोजितञ्च व्याख्यानमनल्पाय कल्पेतैव पठितॄणामुपकाराय। एतद्ग्रन्थकृद्भिरेव कृतं व्याख्यातञ्च श्रीविश्वनाथाष्टकं ग्रन्थाधिक्याभावात् पृथक् पुस्तकरूपेण प्रकाशनं नापेक्षत इति तस्याप्येतदन्ते योजनं कृतमुचितं भाति। उत्कर्षपारम्यं परमेश्वरस्य समर्थयत्तदष्टकं परिशिष्टतामर्हत्येव ह्यस्य स्तोत्रस्य। बहुभ्यो हायनेभ्यः पूर्वमेव निर्मितयोरप्यनयोरेतावत्पर्यन्तमप्रकाशने निर्मातॄणां कवियशःप्रार्थिताराहित्यान्नापरो हेतुः। सम्प्रति तु तदीयप्रियशिष्येणाढ्यकुलीनेन शमविनयाभरणेन 'तरकत् शङ्करनुण्णि' महाशयेन सप्रार्थनं गुरूननुज्ञाप्य स्तोत्ररत्नमिदं धारयतां भद्रङ्करं कृतमुद्रणसंस्कारं प्रकाशमानीयते। बाढं प्रशस्योऽयमुद्यमो महाशयस्यास्य। येन कृतमुचितमभ्यस्तविद्यतायाः; अनुरूपमनुष्ठितं लोकोपकारतत्परतायाः; अर्पिता चानुगुणा दक्षिणा गुरुभक्तिप्रकर्षस्य। सौन्दळोपाध्यायमतमवलम्ब्य निरुक्तेषु चतुर्दशसु व्याप्तिलक्षणेषु प्रगद्भोक्तस्य लक्षणस्य नचरत्नमालिकेति कापि विस्तृता व्याख्याप्यस्ति टिप्पण्या सह निर्मिता गुरुपादैः। क्वचित् क्रोडपत्रशैलीमप्याश्रयन्त्यां यस्यां प्रतिपादितास्सन्त्यपूर्वा बहवो विषयाः। सापि यदि प्रकाशमानेष्यते, महदुपकृतं भविष्यति पण्डितलोकस्य, विशेषतस्सदस्सु वाक्यार्थवक्तॄणाम् ॥

इदमप्यस्ति किञ्चिदत्र विशेषतो वक्तव्यम्, यदस्य ग्रन्थस्यावतारिकालेखने ज्येष्ठभ्रातृकल्पस्य तस्य सतीर्थ्यवरस्य दुर्निरोधनिर्बन्धो नियोग एव जनमिममेवं यत्किञ्चनवादिनमद्य करोतीति। न खलु ज्ञायते कं प्रत्यवतारिका स्यात् सफलनिबन्धना प्रबन्धस्यास्येति। ये नाम सुधियः पठेयुर्विमर्दसुरभिमिमां कृतिमवधानेन, ते नूनं स्वयमेव जानीयुरवतारकेण शक्त्याविष्करणाद्बहुगुणाधिकामस्य

गुणवत्ताम्। अविदुषामवधानविहीनानाञ्च न हि काञ्चन विशेषप्रतिपत्तिं कर्तु मलम्भवन्त्यवतारिका भूयस्यपि। तस्मात्सामुद्रजलाञ्जलिना समुद्रस्यार्घ्यं कुर्वाण इव अहमपि कारुणिकेभ्यश्श्रीगुरुभ्य एवाधिगतैरमीभिः कतिपयाक्षरैस्तच्चरितलेश स्पर्शसङ्क्रान्तपरिमळैस्तदाराधनमात्रमेतावता कृत्वा धन्यधन्यतां प्रपन्नः, कृतमभि मन्यमानश्च सतीर्थ्यसुहृन्मणेर्वचनम्, उपहरामि गङ्गातरङ्गिर्णी विदुषां गुणग्राहिणा मग्रभुवि। प्रार्थये च गङ्गावत्स्वादुरसामघापहामिमामवगाह्य श्रद्धालवो लोकद्वय निर्वृतिं यथा विन्देरन्, तथा प्रचुरप्रचारायानुगृह्णातु श्रीशङ्करनारायणतनुर्देव इति॥

इति, भक्तिमात्रमवलम्ब्य वक्ति यत् सुविनीतशिष्यपरमाणुरच्युतः।
अपि शब्दतो विकलमर्थतोपि तद्गुरुरूपदैवतमुदे भवेद्ध्रुवम्॥

ERNAKULAM,
5-11-1956.

*K. Achyutha Poduval,*
Professor of Nyaya,
SANSKRIT COLLEGE, TRIPUNITHURA.



PANDITHARAJA-NYAYATHILAKA

SRI MANTHITTA KUNJU NAMBOODIRI

श्री

# गङ्गातरङ्गिणी

## प्रथमस्तरङ्गः ।

श्रीमद्विष्णुपदे प्रभावमिह ते को वाऽवगन्तुं प्रभु-
दुर्बोधं त्रिदिवौकसामपि शिवो यस्मात्किलाभूच्छिवः ।
भक्त्या केवलया तथापि भवतीं स्तोतुं प्रवृत्तोऽस्म्यहं
कारुण्यान्मम साहसं महदिदं मातस्त्वया क्षम्यताम् ॥ १ ॥

श्रीमदिति ॥ अत्र श्रीमत्त्वं न केवलं कान्तिमत्त्वादिरूपम्, किन्तु अत्यन्त पूज्यत्वादिरूपम् । यथा 'श्रीमतः शितिकण्ठस्य कृत्यं हि दुरतिक्रमम्' इत्यादौ । तत्र भगवदाज्ञाया दुरतिक्रमत्वोपपादकं तत् । अत्र वक्ष्यमाणप्रभावोपपाद्यमिति विशेषो बोध्यः । विष्णुपदीति । गौरादित्वात् ङीष् । 'निर्गता विष्णुपादाब्जात्तेन विष्णुपदी स्मृता' इति ब्रह्मवैवर्ते । प्रभावम् परिपावकत्वसमस्ततीर्थान्तरसेव्यत्वादि रूपम् । इह पृथिव्याम् । को वेति । किंशब्द आक्षेपे । न कोपीत्यर्थः । अव गन्तुं साकल्येन विशेषतो ज्ञातुम् । का कथा पुनस्तद्वर्णन इति भावः । प्रभुः शक्तः । त्रिदिवौकसामपि अप्रतिहतज्ञानशक्तीनां हरिहरादिदेवश्रेष्ठानामपि । दुर्बोधमिति । तदुक्तम्—'तव परमहिमानं चित्तवाचाममानं हरिहरविधिशक्रा नापि गङ्गे विदन्ति' इति, 'महात्मतां यद्यपि ते महापगे न वेद वेदा न हरिर्न शङ्करः । तथापि पौरा णिकसङ्कथामुखात् कियत् कियद्देवि गृहीतवानहम् ॥' इति च । शिवः महेश्वरः । यस्मात् प्रभावात् । किलेति प्रसिद्धौ । शिवः शिवमस्यास्तीति शिवः । अर्शाद्यच् । निखिलकल्याणगुणालयः । अपिच शिवं करोतीति शिवः । शिवशब्दात् तत्करोतीति ण्यन्तात् पचाद्यचि रूपम् । जगन्मङ्गलकारी । अपिच शिवः शुद्धः, 'शुद्धत्वात्तु

युक्तस्यास्य सदा व्यवस्थितदिशावेलानिमित्तक्रिया-
भाव्यैः कर्त्रुपभोक्तृभिश्च विविधैर्नाम्ना च रूपेण च।
संवीक्ष्यैव हृदाप्यचिन्त्यरचनारूपस्य लीलामयी
चिच्छक्तेर्जननि व्यनक्ति जगतः सृष्टिस्तव प्राभवम् ॥ २ ॥

---

शिवः प्रोक्तः' इति वातूलशुद्धोक्तेः। ब्रह्मणः पञ्चमशिरश्छेदनसमुद्भूतब्रह्महत्यायाः करतलदृढलग्नतत्कपालस्य च मोचनादिति भावः। तदुक्तं वामनपुराणे तृतीयाध्याये—'गत्वा सुपुण्यां नगरीं सुतीर्थां दृष्ट्वा च लोलं स दशाश्वमेधम्। स्नात्वा च तीर्थेषु विमुक्तपापः स केशवं द्रष्टुमुपाजगाम॥ केशवं शङ्करो दृष्ट्वा प्रणिपत्येदमब्रवीत्। त्वत्प्रसादाद्धृषीकेश ब्रह्महत्या क्षयं गता॥' इति, 'एवमुक्तस्सुरेशेन केशवेन महेश्वरः। कपालमोचने सस्नौ वेदोक्तविधिना मुने॥ स्नातस्य तीर्थे त्रिपुरान्तकस्य परिच्युतं हस्ततलात्कपालम्। नाम्ना बभूवाथ कपालमोचनं तत्तीर्थवर्यं भगवत्प्रसादात्॥' इति च। अपिच, श्यति नाशयति जगताममङ्गळानीति शिवः। अपिच शेरते अस्मिन् जगत् परमैश्वर्यादीनीति शिवः। तथाच त्वद्धारणेनैव महेश्वरोप्येतादृशनिखिलमहिमातिशयसम्पन्न इति त्वत्प्रभावस्सर्वोत्कृष्ट एवेति भावः। यथाच श्रीमद्भागवते—'यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवश्शिवोऽभूत्' इति। आनन्दमन्दाकिन्याञ्च, 'यत्पादाम्बु निधाय मूर्धनि चितावामश्शिवत्वं हठात् प्राप्तो भक्षितकाळकूटनिकरो मृत्युञ्जयत्वं ययौ। दिग्वासा नृकपालमालविभवश्चाविन्ददीशानताम्॥' इति। केवलयेति। शक्त्यादिकाव्यसामग्रीरहितयेत्यर्थः। अत एव साहसमिति वक्ष्यते। इदम् अशक्यारब्धस्तुतिरूपम्। तथाच प्रकृतसाहसस्यापराधपर्यवसायित्वात् क्षन्तुमभ्यर्थना। मातरिति सम्बुद्ध्या कारुण्याविनाभावः, क्षमनयोग्यता, प्रार्थने क्षमा नियतेति विस्रम्भश्च द्योत्यते ॥ १ ॥

विचित्रजगत्सृष्टिरपि प्रभावस्यापरिच्छेद्यताया व्यञ्जिका भवतीत्याह—**युक्तस्येति** ॥ युक्तस्य घटितस्य। अस्य प्रत्यक्षादिसन्निहितस्य। उपस्थितस्येति यावत्। व्यवस्थितेति। व्यवस्थितैः प्रतिनियतैः दिशावेलानिमित्तक्रियाभाव्यैः दिशा देशः वेला समयः निमित्तानि कारणानि क्रिया यागादयः भाव्यानि सुखदुःखानि तैरित्यर्थः। कर्त्रुपभोक्तृभिः कर्तृभिः उपभोक्तृभिश्च। अत्र जगति केचिद्व्यवस्थितदेशोत्पादाः,

यथा कृष्णमृगादयः। केचिद्व्यवस्थितकालोत्पादाः, यथा कोकिलारावादयः। केचिद्व्यवस्थितनिमित्ताः, यथा नवाम्बुदध्वानादिनिमित्ता बलाकागर्भादयः। केचिद्व्यवस्थितक्रियाः, यथा ब्राह्मणाः। तेषामेव याजनादयः, नेतरेषाम्। व्यवस्थितभाव्याः, धर्मस्य सुखम्, अधर्मस्य दुःखम्। एवं केचित् कर्तार एव भवन्ति, यथा सूदर्त्विगादयः। केचित् भोक्तारः। श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयः, न कर्तारः। तस्मादुभयग्रहणम्। यद्वा, व्यवस्थितानि दिशावेलानिमित्तानि येषां तानि व्यवस्थितदिशावेलानिमित्तानि, तादृशैः क्रियाभाव्यैः क्रियया भव्यैरित्यर्थः। स्वर्गस्य क्रियाफलस्य मेरुपृष्ठं देशः। देहपतनादूर्ध्वं कालः। उत्तरायणमरणादि निमित्तम्। एतानि व्यवस्थितानि। एवं राजसेवाफलस्य ग्रामादेः भूमण्डलं देशः। प्रसादोत्तरः कालः। निमित्तं सेवा। शेषं पूर्ववत्। नाम्ना घटादिनाम्ना। रूपेण पृथुबुध्नोदराद्याकारेण। संवीक्ष्यैवेति। अस्य सृष्ट्वावन्वयः। संवीक्षणमत्र सिसृक्षापूर्वकस्रष्टव्यवस्तुपर्यालोचनमेव। तथाचाम्नायते—'सोऽकामयत बहु स्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा इदं सर्वमसृजत' इति। अस्यास्तैत्तिरीयश्रुतेरयमर्थः—ब्रह्मपुरं प्रतिष्ठेत्यादिना योऽयं पञ्चकोशविलक्षणः परमात्मा उक्तः सोऽयमद्वितीय आत्मा स्वशक्तियोगात् कामितवान्, आत्मन्याश्रिता मायाशक्तिः कामनाकारेण विक्रियामापद्यत इत्यर्थः। नह्यविक्रियस्य चिदेकरसस्य मायामन्तरेण कामः सम्भवति। कामनाप्रकार एव निर्दिश्यते—बहु स्यां प्रभूतं भवेयम्। नन्वाकाशस्य घटादिपदार्थान्तरोपाधिकृतं बहुभवनं दृष्टम्, अद्वितीयस्य तु कथं बहुतेत्याशङ्क्योच्यते—प्रजायेय प्रकर्षेण पूर्वावस्थितात् स्वरूपादाधिक्येन उत्पद्येय। सः परमात्मा उक्तप्रकारेण कामयमानः तपोऽतप्यत। तपश्शब्देन ज्ञानमुच्यते। 'यस्य ज्ञानमयं तपः' इति श्रुत्यन्तरात्। सृज्यमानजगद्रचनालोचनमकरोदित्यर्थः। सः परमेश्वरः स्रष्टव्यवस्तुपर्यालोचनं कृत्वा प्राणिकर्मनिमित्तानुरूपमिदं सर्वं जगत् देशतः कालतो नाम्ना रूपेण च सर्वप्राणिभिरनुभूयमानं सृष्टवानिति। अनेन प्रधानाद्यचेतनं जगत् सृजतीत्याशङ्का निरस्ता। यो नाम्ना रूपेण च सृजति, स नाम्ना रूपेण च स्रष्टव्यं वस्तु बुद्धावालिखति, यथा घटस्रष्टा कुलालः इत्यनुमानेन अनेकश्रुत्यनुभवाद्यनुगृहीतेनान्तस्सङ्कल्पस्य सृष्टिहेतुत्वे सिद्धे प्रधानाद्यचेतनं बुद्धावनालिखितं करोतीति सम्भावनाया अप्यशक्यत्वात्। हृदापि मनसापि। अचिन्त्य

ओतप्रोतमिदं गुणेष्विव पटो वैराजरूपे गिरि-
ग्रामारण्यपुरीनदाब्धिनृपतत्पश्वादिरूपं जगत्।
कोणे क्वापि विहायसस्तदपि तत् प्राहुर्यदंशे शिवे
तत्त्वं तत्त्वमसीत्युदाहरति कस्तावन्महत्त्वन्तव ॥ ३ ॥

---

रचनारूपस्य इदमित्थं कर्तव्यमिति चिन्तयितुमप्यशक्यस्य। अचिन्त्यत्वञ्च पूर्वविशेषणैरेवोपपादितम्। अत्र जीवानां सृज्यत्वेन निर्देशाज्जगद्रचनाया अचिन्त्यत्वप्रतिपादनाच्च तेषां जगत्कर्तृत्वायोग्यता उक्ता। लीलामयी लीला रूपिणी। जगद्रचनायाः प्रयोजनान्तराभिसन्धिपूर्वकत्वाभावात् केवललीलारूपत्वम्। तथा च ब्रह्मसूत्रम्—'लोकवत्तु लीला कैवल्यम्' इति। गौडपादीयवचनञ्च, 'भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे' इति। चिच्छक्तेरिति। चितः मायोपहितचितः परमेश्वरस्य शक्तिः जगत्कारणत्वादिनिर्वाहिका या शक्तिः तद्रूपिण्या इत्यर्थः। 'द्रवरूपेण काप्येषा शक्तिस्सादाशिवी परा' इति काशीखण्डे स्मरणात्। ननु परमेश्वरस्यैव जगत्कारणत्वं 'यतो वा' इत्यादिश्रुतिसिद्धम्, न तु तच्छक्तेर्गङ्गाया इति कथमेतदुपपद्यत इति चेन्न, शक्तिशक्तिमतोरभेदेन तदुपपत्तेः। तथाच सूतसंहिता—'सा शिवा परमा देवी शिवाऽभिन्ना शिवङ्करी। जगत्कारणमापन्नश्शिवो यो मुनिसत्तमाः॥ सा तस्यापि भवेच्छक्तिः तया हीनो निरर्थकः' इति, काशीखण्डेपि गङ्गां प्रस्तुत्य, 'ममैव सा परा मूर्तिः तोयरूपा शिवात्मिका। ब्रह्माण्डानामनेकानामाधारः प्रकृतिः परा॥ शुद्धविद्यास्वरूपा च त्रिशक्तिः करुणात्मिका। आनन्दामृतरूपा च शुद्धधर्मस्वरूपिणी॥ यामेतां जगतां धात्रीं धारयामि स्वलीलया। विश्वस्य रक्षणार्थाय परब्रह्मस्वरूपिणीम्॥' इत्युक्तम्। जगतः कार्यवर्गस्य सृष्टिः पूर्वं ब्रह्मशक्तौ मायायामनभिव्यक्तरूपेणावस्थितयोर्नामरूपयोः स्पष्टीकरणलक्षणा। प्राभवं सर्वज्ञत्वसर्वशक्तिमत्त्वादिरूपम्। श्रूयते च, 'यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतत् ब्रह्मनामरूपमन्नञ्च जायते॥' इति, 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति च ॥ २ ॥

ओतप्रोतमिति॥ ओतम् ऊर्ध्वतया स्थितम्। प्रोतं तिर्यक्तया स्थितम्। गुणेष्विति। गुणेषु तन्तुषु। पटः ऊर्ध्वतन्तुषु ओतः, तिर्यक्तन्तुषु प्रोतः तद्वदित्यर्थः।

स्पर्शो हाटकतां नयन्नपि मणिः स्पर्शेन कालायसं
तस्मै तां निजशक्तिमद्भुततरां गङ्गे न दातुं क्षमः।
त्वन्तु स्पर्शनदर्शनादिभिरमेयं ते पवित्रीकृति-
प्रागल्भ्यं प्रददाति जीवनिवहायाहो तवोदारता ॥ ४ ॥

---

वैराजरूपे विविधं राजते, विविधानि राजन्ते वस्तून्यत्रेति वा विराट् हिरण्यगर्भः पञ्चीकृतभूतकार्यसमष्टिस्थूलशरीरोपाधिकः। तदुक्तं पञ्चदश्याम्— 'स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः। सूत्रात्मा स्थूलसृष्ट्यैव विराडित्युच्यते परः॥' इति। तत्सम्बन्धी वैराजं ब्रह्माण्डः तदात्मके रूपे हिरण्यगर्भविग्रहे। ग्रामो वीथी। पुरी पट्टणम्। पतत् पक्षी। जगत् विश्वम्। कोणे एकदेशे। अत्र ओतप्रोतमित्यनुपज्यते। तदपि वैराजरूपमपि। तत् विहायः अपि। प्राहुः, श्रुतय इति शेषः। ताश्च बृहदारण्यके जनकसभायां याज्ञवल्क्यवाचक्नवी प्रश्नोत्तररूपाः। यदंशे परब्रह्मण अंशे कोणे। अत्रापि ओतप्रोतमित्यस्यानुषङ्गः। तथाच श्रुतिः—'पादोऽस्य विश्वा भुवनानि' इति। 'यस्यायुतायुतांशांशे विश्वशक्तिरवस्थिता। परब्रह्मस्वरूपस्य प्रणमामि तमव्ययम्॥' 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्यादिस्मृतेश्च। ननु निरवयवस्य ब्रह्मणः अंशाभावात् कथमिदं घटत इति चेन्न, श्रुतेः द्वैतवासनाविशिष्टश्रोतृप्रतिबोधनार्थत्वात्। तदुक्तं पञ्चदश्याम्—'निरंशेप्यंशमारोप्य कृत्स्नेंशे वेति पृच्छतः। तद्भाषयोत्तरं ब्रूते श्रुतिः श्रोतृहितैषिणी॥ चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया। अद्वैतभाषया चोद्यं नास्ति नापि तदुत्तरम्' इति। शिवे इति सम्बुद्धिः। तत् तत्त्वं ब्रह्म त्वमसीति योजना। इति इति हेतोः। उदाहरति दृष्टान्तमुखेन बोधयति। तावत् साकल्येन। महत्त्वं प्रभावम्। महत्परिणाममिति च। अत्र दृष्टान्तेन यथा तन्तुषु ओतप्रोतः पटः तन्तुभ्योऽव्यतिरिक्तः प्रतिभासमात्रः, तथा ब्रह्मणि परम्परया ओतप्रोतं विश्वमपि ब्रह्मणोऽव्यतिरिक्तं प्रतिभासमात्रम्, तत्स्वरूपं ब्रह्मैव पारमार्थिकमिति सूच्यते ॥ ३ ॥

एवं प्रभावमुपपाद्य। 'कारुण्यान्मम साहसम्' इत्युक्तं कारुण्यमेव विशदयति—स्पर्श इति॥ स्पर्शो मणिरित्यन्वयः। हाटकतां स्वर्णताम्। नयन् प्रापयन्। कालायसं लोहम्। स्पर्शाख्योऽश्मविशेषः स्पर्शनेन लोहं स्वर्णतां

यच्छन्त्येव पदं परात् परतरं देवा हरीशादयः
सत्यं दीर्घतरेण कृच्छ्रतपसा ध्यानेन योगेन वा।
अल्पे चायुषि दुर्बले च वपुषि स्वान्ते च लोले नृणां
स्नानेनैव विमुक्तिदासि शरणं गङ्गे कलौ केवलम् ॥ ५ ॥

---

नयतीति प्रसिद्धिः। तस्मै काळायसाय। तां निजशक्तिम् सुवर्णताप्रापणरूपं सामर्थ्यम्। स्पर्शनदर्शनादिभिरिति। न केवलं स्पर्शनेत्यर्थः। आदिना स्मरणकीर्तनादीनां ग्रहणम्। तदुक्तं गारुडपुराणे—'नद्यो जलावगाहेन पावयन्तीतरान् जनान्। दर्शनात् स्पर्शनात् पानात् तथा गङ्गेति कीर्तनात्॥ पुनात्यपुण्यान् पुरुषान् शतशोऽथ सहस्रशः। गङ्गा तस्मात्पिबेत्तस्या जलं संसारतारकम्॥ गङ्गा गङ्गेति यो ब्रूयात् प्राणैः कण्ठगतैरपि। मृतो विष्णुपुरं याति न पुनर्जायते भुवि॥ उत्क्रामद्भिश्च यः प्राणैः पुरुषः श्रद्धयाऽन्वितः। चिन्तयेन्मनसा गङ्गां सोपि याति परां गतिम्॥ एवं गङ्गाजलस्पर्शनादिना पावितः परानपि पवित्री कर्तुं समर्थो भवति, पावनदर्शनादेः पापहरत्वस्मरणात्। अत एवोक्तं माघेन श्रीनारददर्शनं प्रस्तुत्य—'हरत्यघं सम्प्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः। शरीरभाजां भवदीयदर्शनं व्यनक्ति काललितयेपि योग्यताम्॥' इति। एतदभिप्रायेणाह—अमेयं ते पवित्रीकृतिप्रागल्भ्यमिति। न केवलं पवित्रतारूपं पूर्वापेक्षया उत्कर्षम्, अपि तु परेषां तत्करणरूपां निजामपरिमेयशक्तिञ्चेत्यर्थः॥ प्रददातीति। दाने प्रकर्षश्चान्ते मुक्तिरूपपरमपुरुषार्थप्रयोजकत्वम्। जीवनिवहाय न केवलं काळायसरूपैकजातीयाय, अपितु चराचरात्मकानेकजातीयनिरवधिप्राणिभ्य इत्यर्थः। एतदर्थस्फोरणार्थं निवहशब्द उपात्तः ॥ ४ ॥

ननु 'मोक्षमिच्छेज्जनार्दनात्,' 'मोक्षश्च शिवपूजाफलम्' इत्यादिप्रमाणेन हरिशङ्करादीनामपि मोक्षदातृत्वे किं गङ्गां सेवितुं प्रवृत्त इत्याशङ्कायामाह—यच्छन्त्येवेति॥ सत्यमित्यर्धाङ्गीकारे। अल्पे चायुषीत्यादि। एवञ्च बहुकालप्रबलशरीरनिश्चलचित्तसाध्याः तपोध्यानयोगाः कलौ दुस्साधा इति तेषां प्रसादेन मुक्तिर्लब्धुमशक्येत्यर्थः। स्नानेनैवेति। अत्र एकत्वं विवक्षितम्। तेनावृत्तिनिरपेक्षत्वमुक्तम्। एवकारेण साधनान्तरसापेक्षत्वं व्यवच्छिनत्ति। यथाच ब्रह्मवैवर्ते

आदौ पङ्कजयोनिना स्वनियमव्यापारपात्रे शुभे
संगुप्ताथ शुचौ महाबलिजितः पादारविन्देर्पिता।
पश्चात्त्वं परिपावनेन शिरसा सम्भाविता शम्भुना
शैलेन्द्रेण च भाग्यतः पुनरिळां प्राप्तासि भागीरथि ॥ ६ ॥

---

राधां प्रति गोकुलकृष्णस्य वचनम्—'शरीरजा सुराणां सा बभूव सुरनिम्नगा। मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा॥ तिथिनक्षत्रपर्वादि नापेक्ष्यं जाह्नवी जले। स्नानमात्रेण गङ्गायां सञ्चिताघं विनश्यति॥' इति। काशीखण्डे च—'भक्त्या गङ्गावगाहस्य किमन्यत् फलमुच्यते। अक्षयः स्वर्गवासोपि निर्वाणमथवा हरे॥' इति। गङ्गावगाहस्य एकस्य गङ्गावगाहस्येत्यर्थः। असीति त्वमर्थे अव्ययम्। असि केवलं शरणमित्यन्वयः। त्वमेव शरणमित्यर्थः ॥ ५ ॥

आदाविति॥ आदौ प्रथमम्। पङ्कजयोनिनेति अर्पितेत्यनेनाप्यन्वेति। नियम व्यापारपात्रे नियम्यते विधीयत इति नियमः स्वाध्यायादिः तस्य व्यापारः अनुष्ठानं तस्मै तस्य वा यत् पात्रं तस्मिन् नियमव्यापारोपयोगिकमण्डलावित्यर्थः। शुभे इत्यादिविशेषणत्रयेण स्वभावतः परिशुद्धाया गङ्गायास्संसर्गतो विशुद्धिर्दर्शिता। संगुप्ता सादरं गुप्ता। अर्पितेति। पाद्यतयेति शेषः। परिपावनेनेति। तदुक्तं रामायणे—'शिवे शिवशिरस्सुत' इति। 'पुण्ये रुद्रस्य मूर्धनि' इति च। सम्भाविता सदा धारणेन सम्मानिता। शम्भुना शमित्यव्ययं सुखवाचि। भवतिश्चान्तर्भावितण्यर्थः। शं सुखं भावयत्युत्पादयतीति शम्भुः तेन परमेश्वरेण। अहो त्वन्माहात्म्यप्रकर्ष इति भावः। शैलेन्द्रेण हिमवता। भाग्यत इति। क्षितिभुवामनायासेन महापापनिवृत्त्यादेस्सुकरत्वादिति भावः। इळां प्राप्तेति। अत्रेदं बोध्यम्—'ज्येष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां हस्ते शैलादवतरदसौ जाह्नवी मर्त्यलोकम्। पापान्यस्यां हरति हि तिथौ सा दशैषाद्य गङ्गा पुण्यं दद्यादपि दशगुणं वाजिमेधक्रतोश्च। इति नारदीयवचनम्। भागीरथीति। भगीरथस्येयं भागीरथी। तस्येदमित्यण्। भगीरथेनावतारितेत्यर्थः। भगीरथेन निर्वृत्ता आनीता भागीरथीत्यपि केचित्। सम्बुद्धया महादेवशिरःपतनहेतुस्सूच्यते। महाबलिजित इत्यनेन पाद्यत्वे नार्पणहेतुश्च ॥ ६ ॥

तार्तीयिकविलोचनानलघनज्वालातितप्तं शिरः
स्वीयं देवि भिषग्वरश्शिशिरयन् शीतांशुचूडामणिः ।
प्रालेयाचलसम्भवे त्रिजगतां सन्तापहस्त्वां महा-
पापव्रातदवाग्नितापहरणक्रीडां वहत्यन्वहम् ॥ ७ ॥

विख्याता विजरेव भाति भवती सम्प्राप्य यां साधवो
निर्धूताखिलकिल्बिषा भजनदामीशस्य भागीरथि ।
नित्यं त्वत्पदमागताः परतरं तस्य स्वदन्तेतरां
लग्नौ गन्धरसौ तदीयचरणद्वन्द्वप्रसूनाम्बुषु ॥ ८ ॥

---

तार्तीयीकेति ॥ तृतीयमेव तार्तीयीकम् 'तीयादीकक् स्वार्थे वा वाच्य' इति वार्तिकात् । भिषग्वरः बिभ्यत्येभ्यो रोगा इति भिषजः वैद्याः तेषां वरः परमेश्वरः । पापामयदारिद्र्यसंसारादिसकलरोगचिकित्सकत्वादाद्यत्वाच्च । 'भिष क्तमं त्वां भिषजं शृणोमि' इति श्रुतेः । 'त्वमाद्यो भिषग्भेषजं भस्म शम्भो' इति भगवत्पादवचनाच्च । तथाच निखिलौषधप्रभावज्ञस्स तापशान्तये त्वामेव स्वीकृत वानिति निरतिशयं ते शिशिरीकरणसामर्थ्यमिति भावः । शिशिरयन् वहतीत्य न्वयः । शिशिरीकरणार्थं धत्त इत्यर्थः । शीतांशुचूडामणिरिति । तथाच तेनाप्य शाम्यत्वेन तापस्य निरतिशयत्वं ध्वन्यते । त्रिजगतां तापापह इति । इदञ्च भिषग्वरत्वोपपादकम् । यद्वा, त्वद्वहनेनैव लब्धप्रभावस्सोपि त्रिजगतां तापापहोऽ भूदिति भावः । दर्शिततापनिर्वापणसामर्थ्यं दर्शयति—महापापेत्यादि । महापाप व्रात एव यो दवाग्निः तत्तापस्य हरणमेव क्रीडा यस्यास्तामित्यर्थः । अनेन क्रीडया दवाग्नितापहन्त्र्याः किन्नाम लोचनाग्निज्वालातापहरणमिति ध्वन्यते । अन्वह मिति । अनेन ज्वालायास्सातत्यं द्योत्यते ॥ ७ ॥

विख्यातामिति ॥ विख्याता प्रसिद्धा । विजरा विगता जरा यया यस्या दर्शनादिना सा तन्नाम्नी ब्रह्मलोकोपकण्ठस्थिता नदी । सा च कौषीत कानामुपनिषदि पर्यङ्कविद्यायां प्रसिद्धा । यद्यप्युपनिषदि विरजेति नदीनाम श्रुतम् । तथैव तत्र निरुक्तञ्च । तथापि लोकप्रवादानुसाराद्विजरेति प्रयुक्तम् । विरजामिति वा पाठः । तत्पक्षे विगतं रजः पापं यया यस्या दर्शनादिना इत्यर्थः । यद्वा,

विगतं रजः रजोगुणः यस्यास्सा शुद्धसत्त्वेत्यर्थः। रजःपदसमानार्थकाकारान्त रजःपदेन समं समासः। अकारान्तमपि रजपदं कोशादिसिद्धम्। सम्प्राप्य उप गत्य। अस्य निर्धूनने अन्वयः। पक्षे अर्चिरादिमार्गेण गच्छतामुपासकानां मध्ये चन्द्रलोकप्राप्त्याद्यर्थं तावत्पर्यन्तमनुवृतस्य सूक्ष्मदेहस्य सुकृतदुष्कृतैस्साकं विजरा निमज्जनानन्तरमेव विलयात्। पूर्वं स्थूलशरीरपातावसरे उपासनाबलेन सुकृतदुष्कृतयोः स्वाधिकरणे फलोपभोगानुपधायकत्वरूपं विधूननमेव। स्वरूपस्य तु तन्नि मज्जनानन्तरमेव नाशः। ततस्तेजोमयं दिव्यशरीरं परिगृह्यैव ब्रह्मलोकप्राप्तिः। तथा श्रूयते च त्रिपाद्विभूत्युपनिषदि—'उपरि गत्वा विरजानदीं प्राप्य तत्र स्नात्वा भगवद्ध्यानपूर्वकं पुनर्निमज्य तत्रापञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनं सूक्ष्मशरीर मुत्सृज्य केवलमन्त्रमयदिव्यतेजोमयनिरतिशयानन्दमयमहाविष्णुसारूप्यविग्रहं परिगृह्य तत उन्मज्यात्मपूजां विधाय प्रदक्षिणनमस्कारपूर्वकं ब्रह्ममयवैकुण्ठमाविश्य' इति। यां गङ्गां विजराञ्च। सुकृतविशेषम् उपासनाविशेषं वा साधयन्तीति साधवः। पक्षे पर्यङ्कविद्योपासकाः। निर्धूतेति। दर्शनस्पर्शनादिना विनष्टनिखिलपापा इत्यर्थः। ईशस्य भजनदां विश्वनाथे भक्तिप्रदाम्, पक्षे भगवत्प्राप्तिप्रदाम्। नित्यमिति। काश्या नित्यत्वमुक्तं काशीखण्डे। 'अहो जनानां जडता विहाय काशीं यदन्यत्र नयन्ति चेतः। परिस्फुरद्गाङ्गजलाभिरामां काशीं त्रिशूलाग्रधृतां लयेपि ॥' इति। तत्पदं तस्य विश्वनाथस्य पदम् आलयम्, पक्षे ब्रह्मलोकम्। आगताः प्राप्ताः सन्तः। परतरम् अत्युत्कृष्टम्। तस्य विश्वनाथस्य सम्बन्धिनौ, पक्षे ब्रह्मसम्बन्धिनौ। स्वदन्तेतराम् अतिशयेनानुभवन्ति। लग्नावित्यादि। तदीयस्य विश्वनाथ सम्बन्धिनः चरणद्वन्द्वस्य प्रसूनाम्बुषु पादार्चनकुसुमेषु तत्क्षालनजलेषु च भगवत्सेवावसरलब्धेषु लग्नौ संक्रान्तौ गन्धरसौ भगवदङ्घ्रिकमलयोः कर्पूराद्यनुलेपन प्रयुक्तं सहजञ्च दिव्यं गन्धं रसञ्च। उपासकास्तु ब्रह्मलोकं प्रविष्टा भगवतस्सहजाव संक्रान्तावेव तावनुभवन्तीति भगवद्गन्धरसानुभव एव साधारणधर्मघटकः। तदीयेत्यादिविशेषणन्तु तदुपपादकमिति बोध्यम्। तथाच श्रुतिः—'तं ब्रह्मगन्धः प्रविशति, तं ब्रह्मरसः प्रविशति' इति ॥ ८ ॥

मन्त्यन्याश्शतशोऽत्र पूर्णसलिलाः स्रोतोवहा यद्यपि
　क्षुद्राघप्रतिघातमात्रपटुताप्रोद्यन्मदास्तास्समाः ।
प्रायश्चित्तपथातिगामिदुरितप्रक्षाळनप्रक्षमा
　नित्यं सत्यपदप्रयाणपदवी जागर्षि सर्वोत्तरा　॥ ९ ॥

---

सन्तीति ॥ अत्र जगतीतले। यद्यपीत्यकामानुमतौ। क्षुद्राघेत्यादि। तन्मात्रपटुतयापि ताः प्रोद्यन्मदाः। त्वन्तु निष्प्रतीकारदुरितक्षाळनप्रक्षमापि न मदेन विजृम्भसे। अल्पा एव माद्यन्ति, न परिपूर्णा इति भावः। समाः सर्वा.। प्रायश्चित्तेत्यादि। प्रायश्चित्तशब्द. पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढः इति मिताक्षरायाम्। प्रायश्चित्तानां पन्थानो विषयः ताननिक्रम्य गच्छन्तीति तदतिगामीनि तदविषया इत्यर्थः। मरणान्तिकप्रायश्चित्तव्यतिरिक्तप्रायश्चित्त रहितानीति यावत्। तथाभूतानां दुरितानां ब्रह्महत्यादीनामपि। 'कामतो ब्राह्मण वधे निष्कृतिर्न विधीयते' इति मरणान्तप्रायश्चित्तविषयेषु स्मर्तॄणां निष्कृत्यभाव

ब्रह्मघ्नैर्गुरुतल्पगैरपहृतस्वर्णैस्सुरापायिभि-
र्यंपि तत्सहसंयासिभिश्च सहसा निर्भत्स्य दूरीकृताः।
ये वा सन्ति तदीयपापनिवहानुन्मूलयन्ती सदा-
प्यश्रान्ता जयसि त्वमेव भुवनेष्वेका भवद्वेपिणि ॥ १० ॥

यत्र श्रीहरिशङ्करौ निवसतः सायुज्यदौ वादिना-
वन्योन्यं सुकृतेन केनचिदहो प्राप्तस्तवैतत्तटम्।
स्नानं श्रीमणिकर्णिके पितृगणैः स्वीयैस्त्वयि प्रार्थितं
कुर्वे तत्र वितीर्यतामनुमतिर्दासाय मह्यं त्वया ॥ ११ ॥

---

तथैषा नानुमन्तव्या सद्भिस्त्रिपथगामिनी॥' इति। अयमर्थः—अद्भुतः अद्भुतकरः। द्रवेत्यादि। द्रवरूपा जनार्दनात्मिका कापि शक्तिरित्यर्थः। जनार्दनात्मता च नारदीये स्मर्यते। 'योऽसौ सर्वगतो विष्णुः चित्स्वरूपी जनार्दनः। स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः॥' इति। अत एवैषा नान्यसमेत्याह—यथान्या इति। 'कियन्त्यो न स्रवन्त्योऽत्र रत्नाकरमुदावहाः। परं स्वर्गतरङ्गिण्याः काश्यां का साम्यमुद्वहेत्॥' इति। 'गङ्गासमं त्रिभुवने नास्ति निस्तारकारणम्। यथा भागीरथीतुल्या नदी नास्ति श्रुतौ स्मृतौ॥ नास्ति गङ्गासमं तीर्थं कलिकल्मपनाशनम्' इत्यादिवचनजातान्यप्यत्रानुसन्धेयानि ॥ ९ ॥

ब्रह्मघ्नैरिति॥ गुरुतल्पगैः गुरुदारगामिभिः। 'तल्पं शय्याट्टदारेषु' इत्यमरः। अपहृतस्वर्णैः स्वर्णापहारिभिः। स्वर्णशब्देनात्र ब्राह्मणस्वर्णस्यैव ग्रहणम्, ब्राह्मणस्वर्णापहरणं महापातकमित्यापस्तम्बवचनात्। सुरापायिभिरिति। अत्र सुराशब्देन निषिद्धसुराया एव ग्रहणम्, 'मद्यपो निषिद्धसुरापाता' इति विज्ञानेश्वरवचनात्। ये अत्यन्तमहापापिनः। भुवनेषु ऊर्ध्वाधोमध्यलोकेषु। त्वमेव अश्रान्ता तदीयपापनिवहान् उन्मूलयन्ती जयसीति योजना ॥ १० ॥

यत्रेति॥ वादिनाविति। 'अत्र मृतो मनुजो मद्रूपोऽस्तु' इति विवदमानावित्यर्थः। एतदुक्तं भगवत्पादैः—'त्वत्तीरे मणिकर्णिके हरिहरौ सायुज्यमुक्तिप्रदौ वादं तौ कुरुतः परस्परमुभौ जन्तोः प्रयाणोत्सवे। मद्रूपो मनुजोऽय

मत्स्यानां प्लवनं क्वचित् क्वचिदपां घोरप्रवाहः क्वचित्
कल्लोलोल्लसितं क्वचित् स्तिमितता क्वाप्यम्भसां सम्भ्रमः।
कालुष्यं क्वचन क्वचिद्विमलता मातः क्वचिन्मज्जने
सज्जा सज्जनता कदा पुनरहं सौभाग्यमीक्षेय ते ॥ १२ ॥

---

मस्तु ॥' इति। अहो इति। अहो मम धन्यता, यद्वाराणसी प्राप्तेति भावः। उक्तञ्च काशीखण्डे—'अयमेव परो लाभः इदमेव परं तपः। एतदेव परं पुण्यं लब्धा वाराणसीति यत् ॥' इति। मणिकर्णिके इति। अस्य सर्वतीर्थोत्तमत्वमुक्तं काशीखण्डे। यथा देवीं प्रति परमेश्वरवचनम्—'सत्यं सत्यं पुनस्सत्यं सत्यपूर्वमिदं वचः। मणिकर्णीसमं तीर्थं नास्ति ब्रह्माण्डगोळके ॥' इति। इदं नाम निरुक्तं तत्रैव। 'त्वदीयस्यास्य तपसो महोपचयदर्शनात्। यन्मयान्दोळितो मौलिरहि श्रवणभूषणः ॥ तदान्दोळनतः कर्णात् पपात मणिकर्णिका। मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका ॥ चक्रपुष्करिणीतीर्थं पुरा ख्यातमिदं शुभम्। त्वया चक्रेण खननात् शङ्ख चक्रगदाधर ॥ मम कर्णात् पपातेयं यदा च मणिकर्णिका। तदा प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका ॥' इति। पितृगणैरिति। यथा च स्कान्दवचनम्—'नानारूपाश्च पितरो गाथां कुर्वन्ति सर्वदा। अपि कश्चित्कुलेऽस्माकं गङ्गास्नायी भविष्यति ॥ देवर्षीन् परिसन्तर्प्य दीनानाथांश्च दुःखितान्। श्रद्धया विधिना स्नात्वा दास्यते सलिलाञ्जलिम् ॥' इति। तत्र स्नाने ॥ ॥ ११ ॥

मत्स्यानामिति ॥ इदञ्च कूर्मादीनामप्युपलक्षणम्। प्लवनम् उत्पतनम्। स्तिमितता निश्चलता। अम्भसां सम्भ्रमः महानावर्तः। मज्जने स्नाने। सज्जा सन्नद्धा। सज्जनता सज्जनसमूहः। अहमिति अज्ञानित्वपराधीनत्वाद्यर्थान्तरसंक्रमितम्। सौभाग्यमुक्तरूपमनुक्तरूपञ्च। अत्राद्भुतरसस्य कदेतिपदसूचितचिन्ताख्यव्यभिचारिभावोऽङ्गमिति प्रेयोऽलङ्कारः ॥ १२ ॥

अथ वेदसारभूता गायत्री परमेश्वरविषया। तथाचादित्यपुराणे श्रूयते—'ततो दर्भासने स्थित्वा गायत्रीं प्रजपेद्द्विजः। त्रैवर्णिकानां सर्वेषां गायत्री परमा गतिः ॥ यद्गायत्र्याः परं तत्त्वं देवदेवो महेश्वरः। इति ज्ञात्वा जपेद्विद्वान् गायत्र्याः फलमश्नुते ॥ यो मन्यतेऽन्यथयितुं गायत्रीं शिवरूपिणीम्। स पच्यते महाघोरे

स्फुरदिनवरणीयं ज्योतिषे ब्रह्म भर्गं
सदनमखिलधाम्नां चिन्तयेमाविमुक्ते।
हृदयकुहरसंस्थः पूर्वकर्मानुरोधात्
सततमपि धियो यः प्रेरयत्यस्मदीयाः ॥ १३ ॥

इति गङ्गातरङ्गिण्यां प्रथमस्तरङ्गः ॥

---

नरके कल्पसंख्यया॥ पादाश्चत्वारो गायत्र्या वेदाश्चत्वार एव ते। रविश्च विष्णु रुद्रेशाः पादानां देवताः क्रमात्॥ एवं ज्ञात्वा विधानेन गायत्रीं वेदमातरम्। जपेन्माहेश्वरीं ज्योतिर्नित्यमेव प्रकाशते॥' इति इत्यभिप्रायेण विश्वनाथं स्तौति—**स्फुरदिति**॥ एवं प्रतितरङ्गमन्ते विश्वनाथस्तुतिरिति क्रमो द्रष्टव्यः। स्फुरदिनवरणीयं स्फुरता द्योतमानेन इनेन सूर्येण वरणीयं भजनीयम्। ज्योतिषे इति पूर्वान्वयि। ज्योतिर्लब्धुमित्यर्थः। तथाच स्वस्य तेजःप्रदत्वेन सवित्रापि समाश्रयणीयम्। ब्रह्मेति तत्पदविवरणम्। भर्गं भर्जयति वृजिनमिति भर्गः, 'भर्गो वृजिनभर्जनात्' इति निर्वचनदर्शनात्। परमेश्वरस्तम्। 'हरः स्मरहरो भर्गः' इति कोशः॥

अत्रेदमनुसन्धेयं गायत्रीस्थो महेश्वरम्।
भर्गशब्दस्समाचष्टे श्रितसंसारभर्जकम् ॥ १ ॥

गायत्रीवल्लभश्शम्भुरित्यादिस्यपुराणगात्।
विष्णुवाक्यादिहेशस्य स्फुटा तत्पदवाच्यता ॥ २ ॥

अजन्तोऽयत्र सान्तस्स्यात्तेजोवाची तथा सति।
कथञ्चिदपि नैवेह पुंस्त्वं युज्येत यत्पदे ॥ ३ ॥

यदेष रुद्रो भर्गाख्यो ब्रह्मवादिन इत्यदः।
वाक्यं मैत्रायणीयानां गायत्र्यर्थनिरूपणे ॥ ४ ॥

या च भर्गमयत्वोक्तिः श्रुतौ तलवकारिणाम्।
ताभ्यां भर्गपदस्यात्र सान्तत्वं दूरतः स्थितम् ॥ ५ ॥

प्रथमात्र द्वितीयार्थे छन्दसि व्यत्ययस्मृतेः।
'भूयः स्पृष्ट्वा तु पतय' इत्यादौ प्रथमा यथा ॥ ६ ॥

यद्वा सुपां सुलुक्सूत्रादमस्स्यादेशकल्पना।
तथाचायं द्वितीयान्तः प्रथमान्तो न हीष्यते ॥ ७ ॥

एवं सत्यत्र तच्छब्दे न घटेत नपुंसकम्।
इति शङ्का न कर्तव्या यतोऽयं ब्रह्मवाचकः ॥ ८ ॥

यच्छब्दप्रतिनिर्देशो नायं तच्छब्द इष्यते।
तच्छब्दस्य भवेद्येन यच्छब्दसमलिङ्गता ॥ ९ ॥

यच्छब्दः श्रूयते यत्र वाक्ये चोत्तरवर्तिनि।
तत्र नो तत्पदापेक्षा तथा भूरिप्रयोगतः ॥ १० ॥

किन्तु ध्यानक्रियाकर्मभूतस्य परमात्मनः।
नामैतत्तच्च गीतायां सुप्रसिद्धं नपुंसकम् ॥ ११ ॥

स्ववाक्ये प्रतिनिर्देशवाक्ये वाऽन्वयबोधकम्।
भर्गशब्दमपेक्ष्यैव यच्छब्दोऽत्र पुमानिति ॥ १२ ॥

नन्वेवं मन्त्रवाच्यार्थो देवतेति नैरुक्तवचनाद्गायत्र्या भर्गदेवताकतया कथं सावित्रीत्वव्यपदेश इति चेन्न, उक्तरीत्या भर्गदेवताकत्वेपि सवितृपदसम्बन्धवशेन तदुपपत्तेः। यथा 'विश्वोदेवस्य नेतुर्मर्तो वुरीत सख्यम्' इत्यादेकैवर्क्‌ नाना दैवत्या। तथाहि—आत्रेयस्वस्त्यात्रेयो नाम ऋषिः। अनुष्टप् छन्दः। विश्वे देवा देवतेति ऋग्विधानोक्तेः वैश्वदेवी। एवं मन्त्रवाच्यार्थो देवतेति सावित्री। एवं मर्त इति पदसम्बन्धेन पित्र्या। तथा पुष्यस इति पदसम्बन्धेन पौष्णी। तथाच यजुर्वेदे ब्राह्मणवाक्यम्—'विश्वोदेवस्य नेतुरित्याह सावित्र्येतेन' इत्यादि। तथा सवितृपदसम्बन्धात् गायत्र्यपि सावित्री भवतीति। सदनमखिलधाम्नामिति। अनेन तेजःप्रदाने योग्यता प्रदर्शिता। चिन्तयेम ध्यायेम। धीमहीत्यस्य विवरण मिदम्, 'ध्यायेमहीति शब्दोक्तौ धीमहीत्येतदुच्यते' इति पूर्वव्याख्यादर्शनात्। सर्ववाहमस्मीति जानीमेत्यर्थः। तथाच धीमहीत्यत्र सम्प्रसारणम् आत्मनेपदञ्च छान्दसमिति भावः। प्रार्थनायां लिङ्। बहुवचनं शिष्याभिप्रायकम्। सशिष्या वयं चिन्तयेमेत्यर्थः। ध्याननैरन्तर्यविवक्षया वा बहुवचनम्। अविमुक्ते काश्याम्। यथाचोक्तं काशीखण्डे—'मुने प्रळयकालेपि न तत्क्षेत्रं कदाचन। विमुक्तं हि शिवाभ्यां यदविमुक्तं ततो विदुः॥ अविमुक्तं तदारभ्य क्षेत्रमेतदुदीर्यते।' इति। मात्स्येपि, 'विमुक्तन्न मया यस्मान्मोक्ष्यते न कदाचन। महत् क्षेत्रमिदं तस्मा दविमुक्तमिति स्मृतम्॥' इति च। प्रशब्दमहिमलब्धमर्थं प्रकटयति— हृदयकुहरेत्यादि।

श्रीमज्जाह्नवि या प्रणम्रनिखिलाभीष्टप्रदानव्रत-
प्रख्याता विगतस्पृहैरपि मुनिव्रातैरत्रासेविता ।
कल्पद्रूनपि धिक्करोति लहरी पापापनोदाक्षमा-
नेषा शम्भुशिरःस्थिता दिशतु नः कल्याणहल्लोहलम् ॥ १ ॥

---

अन्तर्यामितया सकलप्राणिनामन्तः स्थित इत्यर्थः। जीवात्मना अनुप्रविश्येति यावत्। तथाच तैत्तिरीयके श्रूयते—'यदिदं किञ्च तत्सृष्ट्वा तदेवानुप्राविशत्' इति। अयमर्थः—हिरण्यगर्भादिस्थावरान्तं शरीरजातं यत्किञ्चिदस्ति, तत्सर्वं सृष्ट्वा तदेव सृष्टं शरीरजातं प्रविश्याभ्यन्तरे स्थित उपलभ्यते। एवं ब्रह्माप्या काशादिकार्यं सृष्ट्वा तस्यान्तःप्रविष्टमिव हृदयपुण्डरीके अवस्थितायां बुद्धौ द्रष्टृश्रोतृ विज्ञातृ. इत्येवं विशेषवदुपलभ्यते। सोऽयमस्य प्रवेश इत्युपचर्यते इति। सर्वदा बुद्धिप्रेरणात् प्रेरयतीत्युक्तम् ॥ १३ ॥

श्रीमदिति ॥ जाह्नवीति। जह्नोरपत्यं स्त्री जाह्नवी। तदुक्तं हरिवंशे—'राजर्षिणा ततः पीतां गङ्गां दृष्ट्वा महर्षयः। उपनिन्युर्महाभागां दुहितृत्वेन जाह्नवीम्॥' इति। जानुद्वारा पुरा दत्ता जह्नुनापीय कोपतः। तस्य कन्यास्वरूपा सा जाह्नवी तेन कीर्तिता॥' इति ब्रह्मवैवर्ते। 'ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत् प्रभुः। तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च॥' इति रामायणे च। धिक्कार हेतून् प्रदर्शयति—विगतस्पृहैरित्यादि। सस्पृहैरेव कल्पवृक्षास्सेव्यन्त इति भावः। तवेति लहरीत्यनेनान्वेति। लहरी वीचिः। कल्पद्रूनपीति। इदञ्च चिन्तामण्यादेरुप लक्षणम्। 'चिन्तामणिगुणाश्चापि गङ्गायास्तोयबिन्दवः। विशिष्टा यत् प्रयच्छन्ति भक्तेभ्यो वाञ्छितं फलम्' इति नारदीयपुराणे। पापापनोदाक्षमानिति। लहरी तु पापापनोदक्षमेति भावः। शम्भुशिर.स्थितेत्यनेन भगवन्मान्यत्वरूपोत्कर्षो ध्वन्यते। कल्याणहल्लोहलं कल्याणानां मङ्गलानां हल्लोहलम् अहं पूर्वमहं पूर्वमिति त्वरा जनकमहङ्कारम्। प्राप्तौ त्वराजनकाहङ्कारयुक्तानि मङ्गलानीत्यर्थः। अहङ्कारेण प्राप्तौ त्वरमाणानि मङ्गलानीति यावत् ॥ १ ॥

यो वा धन्यतमः कथञ्चन तत्र स्नात्यम्ब तीर्थोदके
यो वाऽऽचामति केवलं जलकणं यो वा तनोत्यानतिम् ।
यो वा नाम गृणाति किञ्चन सकृद्यो वा स्मरत्यङ्घ्रिक
पांसु पावनि तस्य तस्य पदयोर्मूर्ध्ना वहान्यादरात् ॥ २ ॥

पापिष्ठा हि दशात्यये दशहरे स्पृष्ट्वा कदर्थीकृत-
प्रायश्चित्तवितानविस्तरविधिं भावत्कमम्भःकणम् ।
विध्वस्ताखिलकिल्बिषाः प्रमुदिता वैमानिकैर्मानिताः
स्वर्लोकं प्रविशन्ति दिव्यवपुषः स्वीये पुनानाः कुले ॥ ३ ॥

---

यो वेति ॥ धन्यतम इति सर्वत्र यच्छब्दैस्सम्बध्यते । य स्नाति स एव धन्यतम इति भाव । एवमुत्तरत्रापि । कथञ्चन केनापि प्रकारेण । इदमपि सर्वत्र तत्तत्क्रियापदैस्सम्बध्नाति । तत्रेत्यस्य जलकणादिष्वपि सम्बन्ध । केवलम् एकमपि । गृणाति उच्चरति । किञ्चन एकम् । सकृत् अस्य स्नात्यादिष्वपि सम्बन्ध । पावनीति । 'पावनी च पयस्विनी' इति स्मरणात् । वहानीति प्रार्थनाया लोट् ॥ २ ॥

पापिष्ठा इति ॥ पापिष्ठा महापापिनोपि । हीति प्रसिद्धौ । दशात्यये चरमसमये । दशहरे इति । दशविधपापहरे इत्यर्थ । 'दशपापहरा यस्मात्तस्मा द्दशहरा स्मृता' इति धर्मोऽधिस्थगङ्गास्तुत्युक्ते । दशविधपापानि 'अदत्तानामुपादान हिंसा चैवाविधानत । परदारोपसेवा च कायिक त्रिविध स्मृतम् ॥ पारुष्य मनृतञ्चैव पैशून्यञ्चापि सर्वश ॥ असम्बद्धप्रलापश्च वाङ्मय स्याच्चतुर्विधम् । पर द्रव्येष्वभिध्यान मनसाऽनिष्टचिन्तनम् ॥ वितथाभिनिवेशश्च मानस त्रिविध स्मृतम् । एतानि दशपापानि' इति तत्रैव परिगणितानि वेदितव्यानि । कदर्थीकृतेति । कद र्थीकृत व्यर्थीकृत प्रायश्चित्ताना वितानाना यागानाञ्च विस्तरस्य प्रपञ्चस्य विधि विधान येन तमित्यर्थ । तत्तत्कार्यकारित्वादिति भाव । तदुक्तम्—'प्रायश्चित्त निवारिणी जलकण पुण्यौघविस्तारिणी' इति । विध्वस्ताखिलकिल्बिषा इति । 'यत्तोय कणिकास्पर्शे पापिनाञ्च पितामह । ब्रह्महत्यादिक पाप कोटिजन्मार्जित दहेत् ॥' इति वचनात् । वैमानिके विमानयानैर्देवै । स्वर्लोक प्रविशन्तीति । 'प्राणेषू त्सृज्यमानेषु यो गङ्गा सस्मरेन्नर । स्पष्टोद्वा पापशीलोपि स वै याति परा गतिम् ॥' इति नारदीयवचनात् । कुले पितृकुल मातृकुलञ्च । 'शताभिरपिता

दुर्वारामयपीडिता गदहरैस्त्यक्तास्तथा बन्धुभि--
निर्वेदोपहताशया बहिरिव स्वान्ते तपन्तो भृशम्।
त्वामेकां शरणं प्रपद्य बहवो यान्ति स्थिरोल्लाघता--
मन्ते चाप्यमृतं विमुक्तिनगरीमुक्तालते दुर्लभम् ॥ ४ ॥

स्नानं केवलमामयप्रशमनं मुख्यं महापातक--
प्रायश्चित्तमभीप्सिताधिकफलं तीर्थे त्वदीये कलौ।
हित्वैतद्बहुलश्रमेषु मनुजा यत्नं वतातन्वते
कर्मस्वल्पफलेष्वतः किमपरं मौढ्यं महत्स्वर्धुनि ॥ ५ ॥

---

दृष्टा स्पृष्टा पीताऽवगाहिता। पुंसां वंशद्वयं गङ्गा तारयेन्नात्र संशयः॥' इति॥ ३॥

दुर्वारेति॥ गदहरैर्भिषग्भिः। निर्वेदेति। भिषक्परित्यागात् बन्धुनिष्कासनाच्च यो निर्वेदः निराशता तेन उपहताशयाः विध्वस्तचित्ताः। अत एव बहिरिव शरीरे इव स्वान्ते चित्तेपि तपन्तः तापं खेदमनुभवन्तः। शरणं प्रपद्य शरणत्वेताम्भ्युपगम्य। गङ्गैव मे शरणमिति बुद्ध्या त्वामुपगत्येति यावत्। स्थिरोल्लाघताम् स्थिरां शाश्वतीम् उल्लाघतां नीरोगताम्। यान्तीति। गङ्गाया रोगहरत्वं स्मर्यते—'श्रद्धावतां स्वभक्तानामुपसर्गे महत्यपि। नोपायान्तरमस्त्येव विनेशचरणोदकम्॥ ये व्याधयोपि दुःसाध्या बहिरन्तश्शरीरगाः। श्रद्धयेशोदकस्पर्शात्ते नश्यन्त्येव नान्यथा॥ सेवितं येन सततं भगवच्चरणोदकम्। तं बाह्याभ्यन्तरशुचिं नोपसर्पति दुर्गतिः॥ आधिभौतिकतापञ्च तापं वाप्याधिदैविकम्। आध्यात्मिकं तथा तापं हरेच्छ्रीचरणोदकथम्॥' इति। 'वाराणस्यां विशेषेण गङ्गा सद्यस्तु मोक्षदा। सिद्धा हि सिद्धयस्तस्य स्वर्गस्तस्य गृहाजिरे॥ करस्था तस्य कैवल्यं यो गङ्गां सेवते सदा।' इत्यादिवचनजातमनुसृत्याह—अमृतमिति। अमृतं मोक्षम्। विमुक्तिनगरीति। विमुक्तिनगर्याः श्रीकाश्याः मुक्तालते अत्यन्तमुत्कर्षाधायकत्वान्मुख्यालङ्कारभूते॥ ॥ ४॥

स्नानमिति॥ केवलं स्नानम् स्नानमात्रम्। देशकालाद्यङ्गकलापनिरपेक्षं स्नानमित्यर्थः। यथाचोक्तं स्कान्दे—'तिथिनक्षत्रपर्वादि नावेक्ष्यं जाह्नवीजले। स्नानमात्रेण गङ्गायां सञ्चिताघं विनश्यति' इति॥ अनिच्छयापि संस्पृष्टो दहनोपि यथा दहेत्। अनिच्छयापि संस्नाता गङ्गा पापं तथा दहेत्॥' इति च।

संसारातिगभीरकूपपतितानुद्धृत्य विष्णोः पदं
लोकान् प्रापयितुं सवित्रि कृपया नूनं त्वया पातिताम्।
रज्जुं तत्र दृढाग्रभागघटितां ग्राह्यां सुखेनाखिलै-
रालम्बेऽहमिमामभङ्गुरगुणां वेणीं मनोहारिणीम् ॥ ६ ॥

ब्रह्मवैवर्ते, 'मौसलस्नानमात्रेण सामान्यदिवसे नृणाम्। कोटिजन्मार्जितं पापं नश्यतीति श्रुतौ श्रुतम्। यानि कानि च पापानि ब्रह्महत्यादिकानि च। नाना जन्मार्जितान्येव कामतोपि कृतानि च॥ तानि सर्वाणि नश्यन्ति मौसलस्नानतो नृणाम्।' इति। महाभारतवचनञ्च—'गङ्गास्नानं सर्वविधं सर्वपापप्रणाशकम्। चान्द्रायणसहस्रन्तु यश्चरेत् कायशोधनम्॥ पिबेद्यश्चापि गङ्गाम्भः समौ स्यातान्न वा समौ। भवन्ति निर्विषास्सर्पा यथा तार्क्ष्यस्य दर्शनात्॥ गङ्गाया दर्शनात्त द्वत् सर्वपापैः प्रमुच्यते।' इति। नचैतान्यर्थवादाः, 'स्नानमात्रेण गङ्गायां पापं ब्रह्मवधोद्भवम्। दुराधर्षं कथं याति चिन्तयेद्यो वदेदपि॥ तस्याहं प्रददे पापं ब्रह्मकोटिवधोद्भवम्। स्तुतिवादमिमं मत्वा कुम्भीपाकेषु जायते॥ आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः।' इति भविष्यत्कौर्मादिवचनात्। स्नानमित्यनेन मर्त्यानामपरिहार्यता सूच्यते। आमयेति। आमयश्चात्र शारीरो मानसश्च विवक्षितः। तस्य प्रशमनं निरवशेषं प्रशामकम्। गङ्गाया भेषजरूपत्वात् भिषक्श्रेष्ठ्याचेति भावः। यथाच स्कान्दे—'सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये। सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते॥' इति। महापातकप्रायश्चित्तमिति। महापातकानि च 'ब्रह्महत्या सुरापानस्वर्णस्तेयगुरुतल्पगमनतत्संसर्गाख्यानि च महापातकानि' इति वसिष्ठस्मृत्युक्तानि वेदितव्यानि। कलाविति। सर्वं कृतयुगे तीर्थं त्रेतायां पुष्करं स्मृतम्। द्वापरे तु कुरुक्षेत्रं कलौ गङ्गैव केवलम्॥ 'गङ्गा कलियुगे स्मृतेति पाठान्तरम्। 'येनाकार्यशतं कृत्वा कृतं गङ्गैकसेवनम्। तत्सर्वं तस्य गङ्गाम्भो दहत्यग्निरिवेन्धनम्॥' इति। अनेन कलिकाले इतरकर्मणां सापायता च द्योत्यते।तथाच स्मर्यते—'अग्निहोत्रादिकर्माणि सापायानि कलौ युगे। गङ्गास्नानं हरेर्नाम निरपायमिदं द्वयम्॥' इति। एतत् स्नानम्। बहुळश्रमेति। इदमुपलक्षणम्, वित्तव्ययादेरपि ग्राह्यत्वात्। कर्मसु चिकित्साप्रायश्चित्तयागादिषु। अल्पफलेषु अल्पमेव फलं येषाम्, तेषु ॥ ५॥

संसारेति॥ नूनमित्युत्प्रेक्षायाम्। तत्र विष्णोः पदे। दृढेति। दृढं यथा तथा अग्रभागेन घटितामित्यर्थः। गङ्गाया विष्णुपादप्रभवत्वादिति भावः।

भक्तव्रातसमर्पितप्रतिकान्तपङ्केरुहप्रोल्लस-
त्तुङ्गाभङ्गतरङ्गभङ्गरुचिरां लीलाविशेषश्रियम्।
ये त्वा दृक्चषकैः पिबन्ति न सकृद्बालार्करश्मिच्छटा-
काश्मीरद्रवरञ्जितां जननि ते व्यर्थेव तेषां जनिः ॥ ७ ॥

श्रीमद्दैवतसार्वभौमदयिते धर्मद्रवे तावके
प्रातर्मन्दमरुत्प्रणुन्नलहरीलास्यैकरङ्गे जले।
स्नानं मे घटयेद्ध्रुवं पुनरपि स्नानान्यनेकान्यनु-
स्यूतान्येतदमर्त्यजन्मचरितैः पुण्यैस्समापादितम् ॥ ८ ॥

---

सुखेन ग्राह्याम् रज्जुपक्षे मृदुस्पर्शत्वादिना सुखेनालम्बनीयाम्, वेणीपक्षे अङ्कलापादि राहित्येन सुसेव्याम्। अखिलैरिति। अनेन अधिकारिविशेषाभाव सूच्यते। अभङ्गुरगुणाम् अभङ्गुरा अनश्वरा गुणा रज्जुपक्षे तन्तव, वेणीपक्षे पापहर त्वादयो यस्यास्ताम्। वेणीं प्रवाहम् ॥ ६ ॥

भक्तेति॥ समर्पिता अर्चनारूपेण समर्पिता। अभङ्गेति। अविच्छिन्ने त्यर्थ। लीलाविशेषश्रियमिति। लीला प्रवहणरूपा तस्या विशेष बहुप्रकारता तस्या श्रियमित्यर्थ। 'शोभासम्पत्तिपद्मासु लक्ष्मी श्रीरिति कथ्यते' इति शाश्वत। दृगिति। चषक पानपात्रम्। पिबन्तीति। दर्शनस्य नयनासेचनता द्योत्यते। बालेत्यादि। बालार्कस्य रश्मिच्छटा किरणसमूह एव काश्मीरद्रव कुङ्कुमम्, तेन रञ्जितामित्यर्थ ॥ ७ ॥

प्रस्थास्यमानो विरहमसहिष्णुस्तस्यात्यन्तिकत्वाभाव समर्थयन् कथञ्चिदात्मान समाश्वासयति—श्रीमदिति॥ दैवतेति। देवशब्दात् स्वार्थे तलि देवताशब्द, तत स्वार्थे प्रज्ञाद्यणि दैवतशब्द, तथाच दैवताना हरिविधिमुखानामपि सार्वभौमो महेश्वर, तस्य दयिते इत्यर्थ। तथाच—'तमीश्वराणा परम महेश्वर त दैवताना परमञ्च दैवम्। पतिं पतीना परम परस्ताद्विदाम देव भुवनेशमीड्यम्॥' इति श्वेताश्वतरमन्त्र। धर्मद्रवे इति। धर्म एव द्रव यस्यास्तस्यास्सम्बुद्धि, 'धर्मद्रवा धर्मधुरा' इति स्कान्दे स्मरणात्। वाराहेपि, 'धर्मस्तु द्रवरूपेण ब्रह्मणा निर्मित पुरा। तद्वै गङ्गेति विख्याता' इति। घटयेत् सम्पादयेत्। ध्रुवमिति

तीरेऽस्मिन् शिवलिङ्गकोटिनिचिते बोधिद्रुमालङ्कृते
दैवादाप्तफलोपभोगमुदिता येऽमी सदैवासते।
स्वच्छं ते शिशिरं सुधाधिकरसं स्वेच्छं पिबन्तो जलं
तेषामेव तु जन्म धन्यमधिकं मन्ये निलिम्पापगे ॥ ९ ॥

निर्विघ्नं निखिलार्थसार्थघटनाकृत्यापि मार्जारिकी
भक्तिस्त्वय्यचिरेण जह्नुतनये कर्मर्धिसन्दायके।
कूले देवतपःस्थले स्थिरतरं मामत्र संवासयेत्
प्रत्यानाय्य यतोऽर्चयानि भवतीं साक्षाद्भवोच्छित्तये ॥ १० ॥

---

निश्चये। गङ्गास्नानस्य सकलाभीष्टप्रदत्वात् अनुस्यूतस्नानानाञ्चाभीष्टत्वादिति भावः। चरितैः अनुष्ठितैः। पुण्यैः पुण्यकर्मभिः ॥ ८ ॥

तीर इति॥ तीरं नाम प्रवाहसन्निकृष्टा भूः। तल्लक्षणं तु पाद्मे पाताळखण्डे द्व्युत्तरशततमाध्याये उक्तम्—'प्रवाहाच्छतदण्डान्तं तीरमित्युच्यते बुधैः' इति। शिवलिङ्गकोटिनिचिते त्रिमूर्त्याद्यनेकदेवादिप्रतिष्ठितमहनीयनिरवधिशिवलिङ्गव्याप्ते। उक्तञ्च काशीखण्डे—'तिलान्तरापि नो काश्यां भूमिर्लिङ्गं विना क्वचित्' इति, 'चतुर्दशसु लोकेषु कृतिनो ये वसन्ति हि। तैः स्वनाम्नेह लिङ्गानि कृत्वापि कृतकृत्यताम्॥' इति, 'असंख्यातानि लिङ्गानि पार्वत्यानन्दकानने' इत्युपक्रम्य 'परार्धशतसंख्यानि गणितान्येकदा मया' इति च। बोधीति। बोधिद्रुमाः अश्वत्थवृक्षाः तैरलङ्कृते इत्यर्थः। अनेनापि पापहरत्वादिकं सूच्यते, 'अश्वत्थरूपी भगवान् विष्णुरेव न संशयः। रुद्ररूपो वटस्तद्वत् पलाशो ब्रह्मरूपधृक्॥ दर्शनं पूजनं सेवा तेषां पापहरं स्मृतम्। दुःखापद्व्याधिदुष्टानां विनाशकरणं ध्रुवम्॥ अश्वत्थमूलमाश्रित्य जपहोमसुरार्चनात्। अक्षयं फलमाप्नोति ब्रह्मणो वचनं यथा॥' इत्यादिवचनात्। दैवादाप्तेति। पूर्वजन्मकृतं कर्म दैवम्, तस्मादाप्तेत्यर्थः, 'पूर्वजन्मकृतं कर्म दैवं पौरुषमैहिकम्' इति चरकोक्तेः। अयाचितलब्धेति यावत्, 'उपवासाद्वरं भैक्ष्यं भैक्ष्याद्वरमयाचितम्' इति नारदीयवचनात्। अत्र उपवासः परसेवा। अमी प्रत्यक्षभूताः। अधिकं धन्यम् अत्यन्तं सफलम्। ॥ ९ ॥

ममापीदृशसफलजन्मतां त्वद्भक्तिरेव साधयेदिति साश्वासमाह—**निर्विघ्नमिति ॥** अस्य घटनायां प्रत्यानयने संवासने च सम्बन्धः।

विघ्नाश्चात्र पापकृता गङ्गापालककृताश्च बोध्याः। यथा च काशीखण्डे पापवचनम्—'यथा न गङ्गां यात्येष तथा विघ्नं प्रकुर्महे। गङ्गां गतो यथा चैष न उच्छित्तिं विधास्यति॥' इति। पालकानामपि विघ्नकारित्वं तत्रैवोक्तम्—'षष्टिर्गण सहस्राणि गङ्गां रक्षति सर्वदा। अभक्तानाञ्च पापानां वासे विघ्नं प्रकुर्वते॥ कामक्रोधमहामोहलोभादिनिशितैः शरैः। घ्नन्ति तेषां मनस्तत्र स्थितिञ्चापनयन्ति च॥' इति। निखिलेति। निखिलार्थसार्थघटनैव कृत्यं यस्यास्सेत्यर्थ.। मार्जारिकीति। मार्जारिकी अपीति सम्बन्धः। अपिर्निकर्षद्योतकः। 'क्वचित् कृताऽकृता कापि मार्जारी भक्तिरुच्यते' इति तल्लक्षणम्। क्वचिद्देशकालादिविशेषकृता काप्यकृता या भक्तिः, सा मार्जारी भक्तिरुच्यते इत्यर्थः। यथा मार्जारी मूषकग्रहणवेलायामेव मनो निश्चलं कुरुते, तथा अस्यामपि भक्ताविति सा अधमेति भावः। उत्तमा तु मार्कटी बोध्या। तल्लक्षणन्तु शिवभक्तविलासे—'आक्रामन्तीं नगादन्यं नगं मातरमात्मनः। न सङ्कटेपि त्यजति संश्लिष्यन्मर्कटात्मज॥ तथैवापत्सहस्रेपि यः शिवं शरणं व्रजेत्। सा भक्तिरुत्तमा ज्ञेया सर्वबन्धविमोचिनी॥' इति। अचिरेण अविलम्बेन। अस्य प्रत्यानयने सम्बन्धः। जह्नुतनये इति। अनेन भगीरथानयनकथां सूचयता भक्तिवश्यता द्योत्यते। कर्मर्द्धिसन्दायके इति। कर्मणामृद्धिं प्रवृद्धिं फलाधिक्यं सन्ददातीति कर्मर्धिसन्दायकं तस्मिन्नित्यर्थः। कर्मेति व्रतदानादेरप्युपलक्षणम्। 'अन्यत्र यत् कृतं कर्म व्रतं दानं जपस्तपः। गङ्गातटे तु तत्सर्वं हरे कोटिगुणं भवेत्॥' इति काशीखण्डे। देवतपःस्थले इति। देवेति ऋष्यादेरुपलक्षणम्। तेषां तपसः स्थाने इत्यर्थः, ब्रह्मादिभिरत्रैव तपश्चरणात्। स्पष्टञ्चैतत्तत्रैव। स्थिरतरमिति वासनक्रियाविशेषणम्। यतो येन। वासनेनेत्यर्थः। साक्षात् प्रत्यक्षम्, अर्चनक्रियाविशेषणम्। भवोच्छित्तये इति। ननु परमेश्वरार्चनमेव संसारोच्छेदकम्, 'शिवाराधनतो नान्यदिति संसारभेषजम्। यदि सत्यं तथा वाक्यं तेन शम्भुः प्रसीदतु॥' इति तीर्थगिरिमाहात्म्ये, 'देवदेवो महादेवः सदा संसारभीरुभिः। ध्येयः पूज्यश्च वन्द्यश्च ज्ञेयो लिङ्गे महेश्वरः॥' इति कूर्मे, 'यो न पूजयते मोहाल्लिङ्गं त्रिभुवनेश्वरम्। स तु स्वर्गस्य मोक्षस्य न च राज्यस्य भाजनम्॥' इति महाभारते, एवमन्यत्र च स्पष्टं प्रतिपादनादिति चेत्सत्यम्, सर्वदेवस्वरूपिण्या गङ्गाया आराधने परमेश्वरस्याप्याराधितत्वात्, 'पूजितायान्तु गङ्गायां पूजितास्सर्वदेवताः', 'सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये' इत्यादिवचनात् ॥ १० ॥

तीरेऽस्मिन् भवभञ्जने क्वचन चेद्भूयो भवत्वेव मे
भावो देवि मनुष्यविष्किरमृगक्षोणीरुहाद्यात्मना।
नत्वन्यत्र धराधिनायककुले स्वच्छन्दभोगास्पदे
संसारार्त्यनुवर्तकाघपटलीहल्लीसकोल्लासिते॥ ॥ ११ ॥

सायं जाह्नवि रोधसीह निवसन् सार्थैः सुधीनां समं
माहात्म्यं कथयन् मिथस्तव मुहुः काश्याश्च लोकोत्तरम्।
संसेवेय कदानिलं पुनरपि क्षुभ्यत्प्रवाहाहति-
प्रेजत्पङ्कजवीथिकाकृतवनैःसंश्लेषणं पावनम्॥ ॥ १२ ॥

---

तीरे इति॥ मे भूयो भावश्चेदित्यन्वयः। भावो जन्म। मनुष्येत्यादि। विष्किरः पक्षी। चरात्मना जनने पापाचरणान्यदेशगमनादिकं प्रसज्येतेत्यत आह—क्षोणीरुहेति। आदिपदात् तृणलतादयो ग्राह्याः। तदुक्तम्—'वरं हि काश्यां तृणवृक्षगुल्मकाश्चरन्ति पापं न चरन्ति नन्यतः। वयं चराणां प्रथमा धिगस्तु नो वाराणसी ह्यद्य विहाय गच्छतः॥' इति। गङ्गार्चनादिफलतया अखण्डमण्डलाधिपत्यादिकं बहुशः स्मृतमपि न काम्यत इत्याह—नत्विति। स्वच्छन्दभोगास्पदे यथेष्टसुखानुभवक्षमेपि। इदञ्च काम्यत्वप्रसञ्जकम्। संसारेति। संसारार्त्याः अनुवर्तकानाम् आवृत्तिजनकानाम् अघानां पापानां पटल्याः हल्लीसकेन मण्डलाकारनृत्येन उल्लासिते। इदञ्च धराधिनायककुले भावाभावप्रार्थनायां हेतुगर्भम्। 'मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकन्तु तत्' इति हेमचन्द्रः ॥ ११ ॥

सायमिति॥ रोधसि तीरे। सार्थैः समूहैः। कथयन्निति। वर्णनन्तु दूरापास्तमित्याशयः। काश्याश्चेति। स्तवनरूपस्य काशीमाहात्म्यकथनस्य गङ्गास्तवनादिवत् श्रेयस्करत्वादिति भावः। स्मर्यते च काशीखण्डे—'यः काशीं स्तौति मेधावी यः काशीं हृदि धारयेत्। तेन तप्तं तपस्तीव्रं तेनेष्टं क्रतुकोटिभिः॥' इत्यादि। तथाच तदपि सफलमेवेत्याशय.। लोकोत्तरमिति। ब्रह्महत्यापुलीगमनादिनिखिलपापनिवर्तकत्वादिनेति भाव.। ब्रह्महत्यानिवर्तकत्वञ्च स्मर्यते—'वृत्रं निहत्य वृत्रारिः ब्रह्महत्यामवाप्तवान्। अनुतप्तो ह पप्रच्छ प्रायश्चित्तं पुरोहितम्॥' बृहस्पतिरुवाच—'यदि त्वं देवराजेमां ब्रह्महत्यां सुदुस्त्यजाम्।

आकृष्टैरवगाहमानजनतामृत्युद्भवानां बला-
दावर्तैः परिभासुरे श्रुतिरसस्रोतःप्रवाहेऽत्र ते।
कृत्वा सान्ध्यविधिं वसन् भवपिशाचोच्चाटमन्त्रायित-
प्रक्षुब्धोर्मिगणारवैर्मुखरिते कूले कृती स्यां कदा ॥ १३ ॥

---

अपानुदित्सुस्तथाहि काशीं विश्वेशपालिताम्॥ नान्यत् किञ्चित् क्वचिद्दृष्टं ब्रह्महत्या महौषधम्। राजधानीं परित्यज्य शक्र विश्वेशितुः पराम्॥ भैरवस्यापि हस्ताग्राद पतद्वैधसं शिरः। यत्रानन्दवने तत्र वृत्रशत्रो व्रज द्रुतम्॥' इति। यद्धार पुरा ब्रह्मा व्यापारकलशे विभुः। पुत्रीगमनजं पापं धौतं तेनैव वारिणा॥' इति गङ्गोत्तिमाहात्म्यवचनसिद्धं गङ्गायाः पुत्रीगमनपापनिवर्तकत्वम्। क्षुभ्य दिति। क्षुभ्यतः प्रवाहस्याहत्या प्रैजन्त्यां कम्पमानायां पङ्कजवीथिकायां पद्मश्रेण्यां कृतं शनैस्संश्लेषणं येन तथाभूतमित्यर्थः। अनेन अनिलस्य शैत्यमान्द्यसौरभ्याणि सूचितानि। पावनमिति। 'गङ्गाम्भःकणदिग्धस्य वायोः संस्पर्शनादपि। पापशीला अपि नराः परां गतिमवाप्नुयुः॥' इति नारदीयवचनसिद्धं तादृशवायोः पावनत्वम्॥ १२॥

आकृष्टैरिति॥ आकृष्टैः त्वया आकृष्टैः। बलादित्यस्यात्र सम्बन्धः। अव गाहेति। अवगाहमानायाः स्नान्त्याः जनतायाः जनसमूहस्य मृत्युद्भवानां जननमर णानाम् आवर्तैः आवर्तैरावृत्तिभिः एवावर्तैरम्भसां भ्रमैरिति रूपकम्। आङ्पूर्वक वृत्धातोर्भावे घञ्। परिभासुरे भासमाने। अनेन गङ्गायाः स्नायतां संसार बन्धापहारित्वं प्रतीयते। श्रुतिरसस्रोत इति। श्रुतेर्वेदान्तस्य रसः ब्रह्मानन्द एव स्रोतो यस्यास्तस्यास्सम्बुद्धिः, 'वेदाक्षररसस्रवा' इति स्मरणात्। अत्र ते इत्यनयोः कूलेपि सम्बन्धः। भवेति। भवः संसार एव पिशाचः तस्य उच्चाटमन्त्रः निष्का सनमन्त्र इवाचरन् यः प्रक्षुब्धोर्मिगणस्यारवः तैरित्यर्थः ॥ १३ ॥

अथ 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुः हिरण्य केशः आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्यो दिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' इति आदित्यमण्डलस्थस्यादित्या न्तर्यामिणः परमेश्वरस्याप्राकृतं रूपमुक्तं छान्दोग्ये, तद्रूपेण विश्वनाथमुपास्ते—

अरुणनळिननेत्रं मण्डलान्तः स्फुरन्तं
सवितुरनघमीशं नाकिनामानखाग्रम् ।
कनकरुचिमुपासे कामदं वालखिल्य-
प्रमुखपरिवृतं श्रीविश्वनाथं त्रयीड्यम् ॥ १४ ॥

इति गङ्गातरङ्गिण्यां द्वितीयस्तरङ्गः ॥

---

अरुणेति । श्रुत्यर्थस्तु, दृश्यत इति योग्यभिप्रायकम् । प्रणवः नखाग्रम् । सुवर्णः सुवर्ण वदुज्वलः । कप्यासं कम् उदकं रश्मिभिः पिबतीति कपिः सूर्यः तस्यासम् । असु क्षेपणे इति धातोः कर्मणि घञ् । रविविकासितमित्यर्थः । कप्यासं मर्कटपृष्ठम्, तद्व ल्लोहितमित्यर्थः इति भगवत्पादीयव्याख्यानं कपिशब्दरूढ्यनुग्रहाय । एवमक्षिणीति । तथाच सद्योविकसितरक्ताम्भोजनयन इत्यर्थ इति । मण्डलान्तरिति । सवितु र्मण्डलान्तरित्यन्वयः । स्फुरन्तं भासमानम् । योगिभिर्दृश्यमिति यावत् । अनघम् । श्रुतिनिरुक्तोदितिनामार्थप्रदर्शनमिदम् । ईशं नियन्तारम् । कामदमिति । अत्रापि नाकिनामित्यस्य सम्बन्धः । तेषामपीत्यर्थः । ईशमिति कामदमिति च, 'ये चामुष्मात् पराञ्चो लोकाः, तेषाञ्चेष्टदेवकामानाञ्च' इत्यंशान्तरस्य विवरणम् । उपासे इति । 'मण्डलान्तरगतं हिरण्मयं भ्राजमानवपुषं शुचिस्मितम् । चण्डदीधितिमख ण्डितद्युतिं चिन्तयेन्मुनिसहस्रसेवितम् ॥' इति श्रीरुद्रभाष्यगतं वचनमनुसृत्येदम् । वालखिल्येति । वालखिल्या मुनिप्रभेदाः । प्रजापतेः शरीरे ये केशास्तेभ्यस्ते षामुत्पत्तिः तैत्तिरीयकब्राह्मणे श्रूयते । पार्वतीविवाहसमये स्खलितात् ब्रह्मणो वीर्या दग्नौ तेन हुतादुत्पन्ना दशलक्षसंख्याकमहर्षय इत्युक्तमादित्यपुराणे । यथा—'दह नाच्च ततो जाता वालखिल्या मरीचिपाः । सहस्राणां सहस्राणि मुनयो ह्यूर्ध्वरेतसः ॥ मानतोऽङ्गुष्ठमात्रास्ते प्राप्ता ह्यथ विभावसुम् । बभूवुस्ते महात्मानः पतङ्गसहचारिणः ॥ सूर्यस्य रश्मिपास्सर्वे कान्त्या ज्वलनसन्निभाः ।' इति । प्रमुखपदेनादित्यादिपरि ग्रहः, लैङ्गकौर्मादिषु ताननुक्रम्य, 'एते सहैव सूर्येण भ्रमन्ति दिवि सानुगाः । विमाने संस्थिता नित्यं कामगे वातरंहसि ॥ सरथोऽधिष्ठितो देवैरादित्यैर्मुनिभि स्तथा । गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ॥' इति चोक्तत्वात् । आदित्यादयो राक्ष सान्तास्सप्तगणाः प्रत्येकं द्वादश द्वादश । तेषां प्रत्येकनामानि लैङ्गकौर्मादिषु कीर्तितानि ।

आदित्यस्तोत्रव्याख्यायां दीक्षितचरणैरपि आदित्यादीनां प्रधानादित्यसर्वाप्रकारः न: मानि च सविस्तरं प्रतिपादितानि। ननूक्ता श्रुतिः पुण्डरीकाक्षत्वोपन्यासेन वैष्णवमेव रूपमुपदिशति, न तु शैवमिति प्रतीयते इति चेत्, न तावत् पुण्डरीकतुल्यनयनत्वं तस्यासाधारणं लिङ्गम्, लोकवेदयोरन्यत्रापि च बहुलं तत्प्रसिद्धेः, तस्य साधारण्येपि पुण्डरीकाक्षशब्दस्य योगरूढ्या विष्णावसाधारण्यो पपत्तेश्च। नच तद्विषयिणी यथेत्यादिश्रुतिरिति वक्तुं शक्यम्, योगरूढशब्दावयवार्थ परवाक्यस्यापि प्रयोगनियम इत्यसिद्धेः। तथापि लोचनद्वयोपन्यासः त्रैयम्बके रूपे न सङ्गच्छत इति चेन्न, हविरार्त्यधिकरणन्यायादुद्देश्यगतद्वित्वस्याविवक्षिततया अपरिच्छेदकत्वात्, ललाटलोचनस्य मुकुलिततया लोचनद्वयस्यैव विकसितनलिनसादृश्यमिति तस्य विवक्षितत्वेप्यविरोधाच्च। यदाग्नेयपुराणे, 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणः' इति पठ्यते, तत् सवितृमण्डलस्य हृदयादिवत् सकलदेवोपासना स्थानतया विष्णुपूजान्ते च तत्र तदुपासनं कर्तव्यमिति तावन्मात्रम्। पुराणेष्वागमेषु च दुर्गागणपत्यादिपूजकानामपि सन्ध्यासमये पूजान्ते च तत्र तत्तद्देवतोपासन विधानदर्शनात् इति शिवतत्त्वविवेके स्पष्टम्। इदमत्र बोध्यम्—'असौ यस्ताम्रो अरुणः', 'असौ योऽवसर्पति नमो हिरण्यबाहवे' इत्यादिमन्त्रैः अन्तरादित्यविद्योपास्यपारमेश्वररूपाम्नानात्, गायत्रीस्थभर्गपदेन चादित्यान्तर्यामिपरमेश्वरप्रत्यायनात्, 'ब्रह्मेशानाच्युतेशाय सूर्यायादित्यवर्चसे। भास्वते सर्वभक्षाय रौद्राय वपुषे नमः॥' इति रामायणवचनात्, 'सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्। नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम्॥' इत्यादिवचनान्तराच्चादित्यान्तर्यामी परमेश्वर एवात्रोपास्य इति सिद्धमिति। विश्वनाथमिति। विश्वैः लोकैः नाथ्यते प्रार्थ्यते, तानुपतपति, तेभ्य आशास्ते, तेषामीष्टे इति वा विश्वनाथः, 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु' इति धातुपाठात्। तम्। त्रयीड्यमिति, 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्येऽह्नः सामवेदेनास्तमये महीयते' इति मन्त्रात्, 'एष रुद्रो महादेवः कपर्दी च घृणी हरिः। आदित्यो भगवान् सूर्यो नीलग्रीवस्त्रिलोचनः॥ अधीयते सहस्रांशुस्सामगाध्वर्युहोतृभिः' इति कौर्मवचनाच्च ॥ १४ ॥

## तृतीयस्तरङ्गः।

उद्यन्मार्तण्डबिम्बस्फुटतरकपटश्रीशिवेर्ष्याकटाक्ष-
व्याक्षेपात् क्षोभसङ्घास्सपदि समुदितास्तुङ्गतुङ्गास्तरङ्गाः।
कुर्युस्त्वद्दिव्यरूपग्रहणपटुतरं मानसादर्शमस्मिन्
क्षिप्रं प्रक्षाल्य लग्नं दुरितमलचयं शैलकन्यासपत्नि॥ ॥ १ ॥

अम्भोराशिस्तवायं दिनकरविनुते भूरिरंहःप्रवाह-
प्रोद्यज्झङ्कारघोषो गगनतलसमुत्कीर्यमाणाच्छबिन्दुः।
कल्लोलोद्वेललीलाप्रसृमरपवनः पावनः पावनानां
दूरस्थानम्बरस्थानपि च करुणया हन्त नित्यं पुनीते ॥ २ ॥

---

उद्यदिति॥ उद्यत् उदयं प्राप्नुवत् यन्मार्तण्डबिम्बं तदेव स्फुटतर कपटं यस्य तथाभूतो यः शिवायाः ईर्ष्याकटाक्षः ईर्ष्यानिमित्तकः कटाक्षः तस्य व्याक्षेपात् पातनात्। ईर्ष्याकटाक्षस्यारुण्यात् उद्यदिति। सपदि समुदिताः सद्यः समुद्भूताः। क्षोभसङ्घा एव तुङ्गतुङ्गाः अत्युन्नतास्तरङ्गाः। व्यङ्ग्योत्प्रेक्षा। प्रातः काले प्रायेण गङ्गायां क्षोभस्य दृश्यमानत्वात्। कुर्युरिति। प्रार्थना सामर्थ्यञ्चे त्युभयार्थोऽपि विवक्षितः। त्वदित्यादि। त्वद्दिव्यरूपस्य बिम्बभूतस्य ग्रहणे पटुतरम् अत्यन्तसमर्थमित्यर्थः। अस्मिन् मानसादर्शे। लग्नमित्यत्र सम्बन्धः। शैलकन्यासपत्नीति सम्बुद्ध्या ईर्ष्याहेतुः प्रदर्शितः। अस्मिन्नुत्तरस्मिंश्च तरङ्गे स्रग्धरावृत्तम् ॥ १ ॥

अम्भोराशिरिति॥ अम्भोराशिः जलसमूहः। इदञ्च विशेष्यम्। गाम्भीर्याक्षोभ्यत्वादयः सागरधर्माः प्रतीयन्ते। दिनकरविनुते इति। तदुक्तं काशीखण्डे—'यदा गङ्गा समायाता भगीरथपुरस्कृता। तदा गङ्गां परिष्टोतुं रविस्तत्रैव संस्थितः॥ अद्याप्यहर्निशं गङ्गा सम्मुखीकृत्य भास्करः। परिष्टौति प्रसन्नात्मा गङ्गाभक्तवरप्रदः॥' इति। तत्कथापि तत्रैव प्रतिपादिता। भूरीति। भूरि रंहो वेगो यस्य तादृशेन प्रवाहेण प्रोद्यन् प्रवर्धमानः झङ्कारघोषो यस्य स इत्यर्थः। गगनेति। गगनतले आकाशप्रदेशे समुत्कीर्यमाणाः कल्लोलानामाहत्या सम्यगुत्क्षिप्यमाणाः अच्छबिन्दवः निर्मलजलकणा येन स इत्यर्थः। कल्लोलेति।

उत्पातः पातकानां कलिहतककृतानेकबाधैकशान्ति-
यावद्याथाकथाचं वपुषि लगति ते दिव्यतोयैकलेशः।
तावद्दुष्कर्मघर्मद्युतिजनितभवस्फारधन्वाध्वताप-
स्त्वन्माहात्म्यप्रकर्षस्त्रिदशसरिदहो कोपि सीमाविहीनः ॥ ३ ॥

---

कल्लोलेषु उद्वेला प्रवृद्धा लीला सञ्चाररूपा सञ्चालनरूपा वा यस्य तादृशश्चासौ आ समन्तात् प्रसृमरः व्याप्रियमाणश्च पवनो यस्येत्यर्थः। विशेषणत्रयेण दूरस्था नामम्बरस्थानामपि शुद्धीकरणप्रकारो दर्शितः। झङ्कारघोषस्य श्रावणेन, जलबिन्दूनां पवनस्य च स्पार्शनेन पुनीते इत्यर्थः। पावनः पावनानामिति। पवित्रीकरण सामर्थ्यं प्रकाश्यते। तथाचोक्तं कौर्मे—'पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम्। महेश्वरात् परिभ्रष्टा सर्वपापहरा शुभा॥' इति। दूरस्थानिति। न केवल मुपागत्य स्नातानिति भावः। अत एव करुणयेति। हन्तेत्याश्चर्ये ॥ २ ॥

उत्पात इति॥ स्मर्यते च ब्रह्मवैवर्ते—'यत्तोयकणिकास्पर्शः पापिनाञ्च पितामह। ब्रह्महत्यादिकं पापं कोटिजन्मार्जितं दहेत्॥' इति। याथाकथाचं यथा कथञ्चित्। लगतीत्यनेन सम्बध्यते। 'तेन यथाकथाचहस्ताभ्यां णयतौ' इति णान्तोऽयं शब्दः। तोयैकलेश इति। यत्किञ्चिद्बिन्दुमात्रमपीत्यर्थः। तावत् तावदेव। तावत्कालपर्यन्तमेवेत्यर्थः। दुष्कर्मेति। दुष्कर्मैव घर्मद्युतिः सूर्यः तेन जनितो यः भवस्फारधन्वाध्वतापः संसाररूपविततमरुमार्गखेद इत्यर्थः। त्वन्माहात्म्यप्रकर्ष इति। माहात्म्यस्य विनाऽऽयासं महापापनाशकत्व-महाफलप्रदत्व-नचन्तरासाधारण पावकत्व-संसारतारकत्व-सर्वदेवात्मकत्वादिरूपस्य प्रकर्षः अतिशय इत्यर्थः। तथाच स्मर्यते—'तावद्भ्रमति संसारे यावद्गङ्गां न सेवते। संसेव्य गङ्गां नो जन्तुर्भवक्लेशं प्रपश्यति॥' इति। गारुडवचनानि च—'ततो गङ्गा जलं दद्यान्महा पातकनाशनम्। सर्वतीर्थकृतस्नानदानपुण्यफलप्रदम्॥ चान्द्रायणं चरेद्यस्तु सहस्रं काय शोधनम्। गङ्गाजलं पिबेद्यस्तु समौ स्यातामुभावपि॥ अग्निं प्राप्य यथा तार्क्ष्ये तूलराशिर्विनश्यति। तथा गङ्गाम्बुपानेन पातकं भस्मसाद्भवेत्॥' इत्यादि। काशी खण्डे च, 'नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते। नमस्ते रुद्ररूपिण्यै शाङ्कर्यै ते नमो नमः॥ सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये॥' इति च। त्रिदश सरिदिति सम्बुद्धिः कथञ्चित्त्वत्तोयकणिकासङ्गस्यैवैवंविधदुरन्तदुर्वारसंसारतापनिर्मूलन

अङ्गं यस्याथवाऽस्थि प्रपतति सलिले पावने तावकीने
जन्तोर्दैवाद्दिवौकस्तटिनि लघु समुत्तीर्णपापार्णवस्य ।
स्वर्लोकस्तस्य हस्ते खलु बहुलतपोदानयज्ञादिलभ्य-
स्तत्रैवास्यापि काले भवतु तव कृपालेशतस्तत्प्रपातः ॥ ४ ॥

त्वत्तीरे सा चकास्ति प्रथिततनुभिदा काशिका विश्वनाथ--
प्रेमाधिक्यातिधन्या भवभयविवशैस्सेव्यमानाऽसमाना ।
प्राणिभ्यो यत्र मृत्यौ स्वयमुरुकरुणस्तारकं वेदसारं
व्याचष्टे देवि कर्णे स हि समुपगतश्शङ्करश्चन्द्रचूडः ॥ ५ ॥

---

निरतिशयनैपुणीत्याश्चर्यं द्योतयति—अहो इति । सीमाविहीनः कालतो देशतश्च निरवधिः ॥ ३ ॥

अङ्गमिति ॥ अङ्गं शरीरम्, अवयवो वा । 'अङ्गं गात्रान्तिकोपाय प्रतीकेष्वप्रधानके' इति नानार्थरत्नमाला । यस्य उत्क्रान्तजीवितस्य । लघु क्षिप्रमिति तरणक्रियाविशेषणम् । हस्ते खलु हस्तगत एव । स्वाधीन इति यावत् । तत्रैव तावकीनसलिल एव । अस्यापि ममापि । तव कृपालेशत इति । तदर्थं तव कृपालेश एवावश्यक इति भावः । तत्प्रपातः तस्य अङ्गस्य अस्थ्नो वा प्रपातः । अत्र 'अन्तर्दशाहे यस्यास्थि गङ्गातोये निमज्जति । न तस्य पुनरावृत्तिः ब्रह्मलोकात् कदाचन ॥ यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति । तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ गङ्गाजलोर्मि संस्पृश्य मृतकं पवनो यदा । स्पृशते पातकं तस्य सद्य एव विनश्यति ॥ कश्चिद्व्याघ्रो महारण्ये सर्वप्राणिविहिंसकः । सिंहेन निहतो यावत् प्रयाति नरकालये ॥ तावत् कालेन तस्यास्थि गङ्गायां पतितं तदा ॥ दिव्यं विमानमारुह्य स गतो देवमन्दिरम् । अतस्त्वमेव सत्पुत्रो गङ्गायामस्थि पातयेत् ॥' इत्यादिगारुडवचनानि स्मर्तव्यानि ॥ ४ ॥

त्वदिति ॥ सा मुक्तिप्रदत्वेन लोकोत्तरत्वादिना च श्रुतिपुराणादिप्रसिद्धा । तथा च स्मर्यते—'अयोध्या मथुरा माया काशी काञ्ची ह्यवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः ॥' इति । 'यथा भूमितले विप्र पुर्यस्सन्ति सहस्रशः । तथा काशी न मन्तव्या कापि लोकोत्तरा त्वियम् ॥' इति । 'किमत्र

नो सन्ति पुरः सहस्रशः पदे पदे सर्वसमृद्धिभूमयः। परन्न काशीसदृशी दृशोः पदं क्वचिद्गता मे भवता शपे शिव॥ त्रिविष्टपे सन्ति न किं पुरश्शतं समस्त कौतूहलजन्मभूमयः। तृणीभवन्तीह च ताः पुरः पुरः पुरः पुरारे भवतो भव द्विषः॥' इति च। ताः पुरः भवद्विषः संसारद्वेष्टुः पुरः पुर्याः पुरः पुरस्तात् तृणीभवन्तीति तद्व्याख्या। चकास्तीति। नन्वेकाम्रमाहात्म्ये 'एष विश्वेश्वरो देव एषैव मणिकर्णिका। कलावन्तर्हिता काशी मुक्तिरत्रैव लभ्यते॥' इति काश्या अन्तर्धानश्रवणात् कथमिदमिति चेन्मैवम्, यतः अन्तर्धानं कलौ याति तत्पुरन्तु महात्मनः। अन्तर्हिते पुरे तस्मिन् पुरी तु वसते ततः॥' इति हरिवंशवचनात्, तथा 'कलावन्तर्हितो देवस्तत्पुरञ्च विशेषतः। पुरी तु वसते नित्यं सर्वप्राणिविमुक्तिदा॥' इत्यादिपुराणान्तरवचनाच्च, युगान्तरप्रत्यक्षस्य सुवर्णविविधरत्नघटितस्य विशेषरूपस्य देवदेवनिवासस्य पुरस्य ज्योतीरूपस्यैवान्तर्धानात् काशीलक्षणायास्तु पुर्या मुक्त्यादि फलदाया अनन्तर्धानान्न काचिदनुपपत्तिः। एवमन्यान्यपि तत्तत्पुराणगतान्यन्तर्धानवचांसि नेयानि। एकाम्रप्रशंसावाक्ये तु काशीपदं पुरपरमेव। यद्वा, तत्क्षेत्रस्तुतिपरतया तत्र स्वार्थे तात्पर्यं भजते इति। प्रथिततनुभिदेति। प्रथिता पुराणादिप्रसिद्धा तनुभिदा स्वरूपभेदो यस्याः सा। भेदश्च निर्विशेषशुद्धजडभेदेन। तदुक्तं श्रीसत्यज्ञानानन्द तीर्थैः—'निर्विशेषा च शुद्धा च जडा सेति त्रिधा मता। क्षेत्ररूपा जडा काशी मोचयेत्सर्वदेहिनः॥ मूर्तिरूपा तु या काशी शुद्धा सा चिन्मयी सती। पूर्ण रूपा स्वमाहात्म्यं स्वयमेव विचारयेत्॥ निर्विशेषा तु मुक्तानां शिवस्य च परा गतिः।' इति। अस्य व्याख्या—क्षेत्ररूपा आधारस्वरूपिणी। मोचयेत् मुक्तिं नयेत्। मूर्तिरूपा साकारा या काशी सा शुद्धा चिन्मयी ज्ञानमयी सती। पूर्णरूपा स्वयमेव स्वमाहात्म्यं विचारयेत् विचारयितुं शक्नुयात्, नापर इत्यर्थः इति। इयमेव शुद्धा मूर्तिः चित्रपटीप्रदर्शनावसरे 'इयं वाराणसी देवी साक्षान्मूर्तिमयी शुभा' इति श्लोकेन दर्शिता। काशिका श्रीकाशी, निर्वाण प्रकाशस्थानत्वात्। तदुक्तम्—'निर्वाणकाशनाचत्र काशीति प्रथिता पुरी' इति। यद्वा, अनाख्येयं स्वप्रकाशं चैतन्यं काशते प्रकाशते अस्यामिति काशीपदनिरुक्तिः। तदुक्तम्—'काशतेऽत्र यतो ज्योतिः तदनाख्येयमीश्वरः। अतो नामान्तरञ्चास्तु काशीति प्रथितं विभो॥' इति। अथवा, काशन्ते राजन्ते स्वप्रकाशतया अस्यां

तनुत्यागमात्रेण प्राणिन इति काशी। एतदप्युक्तम्—'कीटाः पतङ्गा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः। मण्डूकमत्स्याः क्रिमयोपि काश्यां त्यक्त्वा शरीरं शिवमाप्नुवन्ति॥' इति॥ इदं त्ववधेयम्—अन्तर्गेहाविमुक्तवाराणसीकाश्यभिध चतुर्विधक्षेत्रात्मिका श्रीकाशीपुरी। तथाचोक्तं पाद्मे पाताळखण्डे—परिमाणञ्च वक्ष्यामि तन्निबोधत सत्तमाः। मध्यमेश्वरमारभ्य यावद्देहळिविघ्नपम्॥ सूत्रं संस्थाप्य तद्दिक्षु भ्रामयेन्मण्डलाकृतिः। तत्र या जायते रेखा तन्मध्ये क्षेत्रमुत्तमम्॥ काशीति यद्विदुर्वेदास्तत्र मुक्तिः प्रतिष्ठिता। काश्यन्तः परमं क्षेत्रं विशेषफलसाधनम्॥ वाराणसीति विख्यातं तन्मानं निगदामि वः। दक्षिणोत्तरयोर्नद्यौ वरणासिश्च पूर्वतः॥ जाह्नवी पश्चिमे चापि पाशपाणिर्गणेश्वरः। तस्या अन्तः स्थितं दिव्यं विशेषफलसाधनम्॥ अविमुक्तमिति ख्यातं तन्मानञ्च ब्रवीमि वः। विश्वेश्वराच्चतुर्दिक्षु धनुःशतयुगौन्मितम्॥ अविमुक्ताभिधं क्षेत्रं मुक्तिस्तत्र न संशयः। गोकर्णेशः पश्चिमे पूर्वतश्च गङ्गा मध्ये उत्तरे भारभूतः॥ ब्रह्मेशानो दक्षिणे सम्प्रदिष्टस्तु प्रोक्तं भवनं विश्वभर्तुः' इति। विश्वभर्तुर्भवनमन्तर्गृहम्। ततश्च काशी वाराणस्यविमुक्तान्तर्गृहाख्यानाञ्चतुर्णां क्षेत्राणामुत्तरोत्तरं पूर्वपूर्वान्तर्वर्तिपूर्वपूर्वापेक्षया न्यूनपरिमाणञ्चेति सम्पिण्डितार्थः। अत्र चतुर्विधेपि क्षेत्रे मरणान्मुक्तिरसन्दिग्धा, तथापि क्षेत्रविभागवशात् तस्यास्तारतम्यमस्ति। तदुक्तं तत्रैव—'चतुर्धा वितते क्षेत्रे सर्वत्र भगवान् शिवः। व्याचष्टे तारकं वाक्यं ब्रह्मात्मैक्यप्रबोधकम्॥ तथापि तत्तत्सामर्थ्यात् तत्र तत्र मृतस्य हि। भोगपूर्वापवर्गाप्तिः जीवन्मुक्तिदशैव सा॥ अन्तर्गेहे विपन्नस्तु साक्षात्कैवल्यमाप्नुयात्। तथा चतुर्विधेपि क्षेत्रेऽस्मिन् प्रमीतो गर्भयातनाम्॥ नैवाप्नोति मुनिश्रेष्ठाः विशेषोऽयं ब्रवीमि वः। काश्यां मृतस्तु सालोक्यं साक्षात्प्राप्नोति सत्तमाः॥ ततस्सरूपतां याति ततस्सान्निध्यमश्नुते। ततो ब्रह्मैकतां याति न परावर्तते पुनः॥ वाराणस्यां मृतो जन्तुः साक्षात् सारूप्यमश्नुते। ततस्सान्निध्यमायाति ततो ब्रह्मैकतामियात्॥ अविमुक्ते विपन्नस्तु साक्षात् सान्निध्यमाप्नुयात्। ततश्चिदानन्दमये ब्रह्मण्येव विलीयते॥ सलोकताञ्च सारूप्यं सान्निध्यञ्चापि सत्तमाः। कल्पं कल्पमवाप्नोति ततो ब्रह्मात्मको भवेत्॥' इति। काशीक्षेत्राद्बहिः समन्तात् योजनमितायाः भुवो देवभूमिरिति संज्ञा। तत्र मरणस्य स्वर्गफलकत्वमेव। उक्तञ्च ब्रह्मवैवर्ते, 'काश्याश्चतुर्दिशं देवि योजनं स्वर्गभूमिका। मृता

स्तत्र हि गच्छन्ति स्वर्गं सुकृतिनां पदम् ॥' इति। प्रतिपादितश्चैतत्सर्वं विस्तरत स्त्रिस्थलीसेतौ। विश्वनाथेति। विश्वनाथस्य प्रेमाधिक्येन अतिधन्या अत्यन्तं पूज नीयेत्यर्थः। श्रूयते च काशीखण्डे, दिवोदासे काश्यामुषित्वा राज्यं शासति सर्वेषां देवानां भुवं परित्यज्य मन्दरावस्थितौ जातायां भवानीविश्वनाथ योस्तत्रावस्थितयोः काशीवियोगदुःखम्—'यददीधरदेष जाततापः पृथुळे मौलिजटा निकुञ्जकोणे। परितापहरां हरस्तदानीं द्युधुनीं तामधुनापि नोज्झिहीते। महतो विरहस्य शङ्करः प्रसभं तस्य वशी वशं गतः। विविदेन सुरैस्सदो गतैरपि संवीतसुतापवेष्टितः ॥ अतिचित्रमिदं यदात्मना शुचिरप्येष कृपीडयोनिना। स्वपुरीविरहोद्भवेन वै परितप्येत जगत्त्रयेश्वरः' इत्यादि। संवीतसुतापवेष्टितः अप्र कटात्यन्ततापव्याप्तः। अतिचित्रमिति। इदमतिचित्रम्। किं तत्, जगत्त्रयेश्वरोपि शुचिः पवित्रोपि। यद्वा, प्रळयकाले सर्वसन्तापकोपि सङ्कर्षणमुखानलोत्थकालाग्नि रुद्ररूपत्वात् परितप्येतेति यत् इति। अपि च, तत्रैव पार्वतीं प्रति भगवदुक्तिः— 'न योगिनां हृदाकाशे न कैलासे न मन्दरे। तथा वासरतिर्मेऽस्ति यथा काश्यां रनिर्मम ॥' इति। असमानेति। प्रयागादिपुण्यक्षेत्रान्तरापेक्षया विलक्षणेत्यर्थः। तदुक्तं काशीखण्डे—'शशकैर्मशकैः काश्यां यत् पदं हेलयाप्यते। तत्पदन्नाप्यतेऽन्यत्र योगयुक्त्यापि योगिभिः ॥ धर्मार्थकाममोक्षाख्यं पुरुषार्थचतुष्टयम्। अखण्डं हि यथा काश्यां न तथाऽन्यत्र कुत्रचित् ॥' इति। यद्वा, स्वर्गाद्यपेक्षयाप्युत्कृष्टेत्यर्थः, स्वर्गे पातभयसत्वात्, अत्र तु तदभावात्। तदुक्तं तत्रैव—'काशीस्थैः पतितैस्तुल्या न वयं स्वर्गिणः क्वचित्। काश्यां पाताद्भयं नास्ति स्वर्गे पाताद्भयं महत् ॥' इति। भगवत्पादैरप्युक्तम्—'काशी धन्यतमा विमुक्तिनगरी सालङ्कृता गङ्गया तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि यत्किङ्करी। स्वर्लोकस्तुलितस्सहैव विबुधैः काश्या समं ब्रह्मणा काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खे गतः ॥' इति। सूतसंहितायामपि, 'यथा वाराणसीतुल्या पुरी नास्ति श्रुतौ स्मृतौ' इति। काशीखण्डेपि, 'भूमिष्ठापि न याऽत्र भूस्त्रिदिवतोप्युच्चैरधस्थापि या' इति। प्राणिभ्य इति। नात्र नरतिर्यग्भेद इति भावः। यत्र काश्याम्। मृत्यौ मृत्युकाले। स्वयं समुपगतो व्याचष्टे इति योजना। समुपगतः अप्राकृत दिव्यशरीरपरिग्रहेणाविर्भूतः सन्। तथाच, यथा दक्षिणदेशसमीकरणार्थं स्व

समान कुम्भसम्भव मुनिं महाविषहरणाय सुन्दरदास वा प्रास्थापयदीश्वर, तथा तारकोपदेशाय न य कश्चित् प्रेषयति, किन्तु स्वयमेवाविर्भवतीत्यर्थ । तारक मिति । तारयति ससारादिति तारकम् । तारयते ण्वुल् । यद्वा, तारयतेर्ण्य न्तात् पचाद्यचि स्वार्थे क । प्रणव तमित्यर्थ । 'गर्भजन्मजरामरणससारमहा भयात् स तारयति, तस्मात्तारकम्' इति तारकोपनिषदि तत्पदनिर्वचनस्य, रामरहस्योपनिषदि तारक प्रस्तुत्य प्रणवस्याधिकारिविशेष तद्घटकवर्णानामृषिच्छन्दो देवताश्चोपदिश्य 'तस्माद्रामाङ्ग प्रणव कथित' इत्युपसहारस्य च दर्शनात् । अथर्वशिरउपनिषदि—'य उत्तरत स ओङ्कार, य ओङ्कारस्स प्रणव, य प्रणवस्स सर्वव्यापी, यस्सर्वव्यापी सोऽनन्त, य अनन्तस्तत्तारम्, यत्तार तत् सूक्ष्मम्' इति तारकप्रणवयोरभेदप्रतिपादनाच्च । अपि च, 'प्रणव तारक ब्रूते काश्या देवो महेश्वर' इति । भगवताप्युक्तम्—'ओमित्येकाक्षर ब्रह्म व्याहर न्मामनुस्मरन् । य प्रयाति त्यजन् देह स याति परमा गतिम् ॥' इति । वेदसारमिति । वेदसारता च, 'ओङ्कार सर्ववेदाना सारभूत प्रकीर्तित' इति वचनसिद्धा । सा च त्रयीघटकाद्यमध्यान्त्यवर्णनिष्पन्नत्वात् । तत्र 'आदि वेद ऋग्वेद, मध्यवेदो यजुर्वेद, अन्त्यवेदस्सामवेद ।' अत एव आद्य वेदस्याद्याक्षरम् 'अग्निमीले' इत्यकार, मध्यवेदस्य मध्याक्षर 'योनिस्समुद्रो बन्धु' इत्युकार, अन्त्यवेदस्यान्त्याक्षर 'ज्योतिरुत्तमम्' इति मकार । एव त्रिभिरेतैरक्षरै स्त्रयीसारप्रणवस्य 'निष्पत्ति' इत्यादिरयस्तोत्तरत्नव्याख्यायामुक्तम् । ब्रह्मप्रतिपादकत्वे नापि सा बोध्या । ब्रह्मप्रतिपादकत्वञ्च, 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविध स्मृत' इत्यादिस्मृतिसिद्धम् । व्याचष्टे इति । विशेषेण उपदिशतीत्यर्थ । विशेषश्च श्रमापनयनभयराहित्यसम्पादनपूर्वकत्वादिरूप । तदुक्तम्—'अनिलो मृगनाभिरेणुगन्धै रधिकाशि प्रणवोपदेशकाले । हरते मरणश्रम नराणा हरवामार्धदुकूलोत्तरीयजन्मा ॥' इति । 'ससारसर्पदष्टाना जन्तूना यत्र शङ्कर । अपसर्पेण हस्तेन ब्रूते ब्रह्म स्पृशन् श्रुतिम् ॥' इति च । उपदेश्याना भयरहिततया अन्त करणस्वास्थ्यार्थं दूरीकृतसर्पेण हस्तेनेति तद्व्याख्या । उपदिश्य प्राणिन ससारान्मोचयतीति यावत् । तथाच जाबालोपनिषदि अविमुक्त प्रस्तुत्य श्रूयते—'इद वै कुरु क्षेत्र देवाना देवयजनम्, सर्वेषा भूताना ब्रह्मसदनम् । तत्र हि जन्तो प्राणेषूत्

कण्भाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे । येनासावमृतीभूत्वा मोक्षीभवति । तस्मा दविमुक्तमेव निषेवेत । अविमुक्तं न विमुञ्चेत् । एवमेवैतत् याज्ञवल्क्य' इति । स्मरति च काशीखण्डे, 'तत्रोत्क्रमणकाले तु साक्षाद्विश्वेश्वरः स्वयम् । व्याचष्टे तारकं ब्रह्म येनासौ तन्मयो भवेत् ।' इति । अस्य । व्याख्या तारकं प्रणवं षडक्षररामन्त्र राजं वा इति । कर्णे दक्षिणकर्णे । तथाच श्रीरामवचनं मुक्तिकोपनिषदि— 'यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः । जन्तोर्दक्षिणकर्णे तु मत्तारं समु पादिशेत्' इति । अत्र उक्तश्रुतेः, 'सर्वज्ञश्शङ्करः साक्षात् पार्वत्या सहितः सदा । त्वद्रूपमेव सततं ध्यायन्नास्ते रघूत्तम ॥ मुमुक्षूणां सदा काश्या तारकं ब्रह्म वाचकम् । राम रामेत्युपदिशन् सदा सन्तुष्टमानसः ॥' इत्यध्यात्मरामायणवच नात्, 'यदाऽवर्णयत् कर्णमूलेऽन्त्यकाले शिवो राम रामेति रामेति काश्याम् । तदेक परं तारकब्रह्मरूपं भजेऽहं भजेऽहं भजेऽहं भजेऽहम् ॥' इति भगवत्पादवचनाच षडक्षररामन्त्रराजमेव विश्वनाथः प्राणोत्क्रमणसमये स्वयमागत्योपदिशतीति केचित् । श्रीशब्दपूर्वकस्त्रिरावृत्तो रामशब्द एव तारकतया पाद्मे उक्तः—'मुमूर्षोर्मणि कर्ण्यन्तरर्धोदकनिवासिनः । अहं दिशामि ते मन्त्रं तारकं ब्रह्मवाचकम् ॥ श्रीराम राम रामेति एतत्तारकमुच्यते ।' इति । अत्र श्रीशब्दो भवत्यतिशयार्थ एव, न ना मान्तर्गत इति षडक्षरता अधिकार्यादिभेदाद्व्यवस्था बोध्या । विस्तरस्तु त्रिस्थली सेतौ द्रष्टव्यः । उक्तजाबालश्रुतौ परमशिवेन चरमकाले समुपदिष्टायाः संसारतारक प्रणवार्थभूतपरब्रह्मविद्यायाः फलं जीवन्मुक्तिसुखरूपं परममुक्तिसुखञ्च क्रमप्राप्यम् अमृ तीभवनमोक्षीभवनशब्दाभ्यामभिधीयते । जीवन्मुक्तिसुखञ्च निरतिशयानन्दरूपब्रह्मा वगत्या समुद्भवन्मुक्तिकल्पमेवेति ध्येयम् । सः विश्वनाथ. । हिः श्रुतिपुराणादिप्रसिद्धि द्योतकः । शङ्कर इति । शं सुखम् उक्तब्रह्मविद्यायाः फलरूपमुभयविधं सुखं करोति ब्रह्मविद्योपदेशेन निष्पादयतीति फलप्रदर्शनमिदम् । शमिधातोस्संज्ञायामित्यच्प्रत्य यान्तम् । चन्द्रचूड इति । अनेन उपदेशसामर्थ्यम्, अप्राकृतदिव्यशरीरपरि ग्रहणम्, सन्निधाने अत्यन्तं सौम्यत्वश्रमहारित्वादिकञ्च दर्शितम् । उपदेशसामर्थ्यञ्च चन्द्रस्य ज्ञानरूपत्वात् । एतदुक्तं शिवागमे—'ज्ञानचन्द्रकलाचूडं दशदिग्बाहु मण्डलम् । त्रैगुण्यादिमयैर्भान्तं दिव्यैर्दशभिरायुधैः ॥' इति । ततश्च, यथा अन्न सत्रप्रवृत्ताः क्षुधितानामन्नार्थिनामयमन्नदातेत्यभिज्ञाय उपसर्पणेनानुग्रहार्थं स्वमासाद

यात याथाकथाच स्मृतिमिह तृणवत् स्वप्रकाशां निमुक्ति
नित्यानन्दस्वरूपां स्वयमपि विदिशद्वीयमान निरीहैः।
स्वर्लोके याचकेभ्यस्सुरधुनि ददतो नश्वरानेव कामान्
कल्पद्रोर्भुरिभेद हरशिरसि लसत् सश्रये ते पदाब्जम् ॥ ६ ॥

---

शिखरेष्वभ्रध्वज बध्नन्ति, एव शिवोपि स्वय ज्ञानप्रद इति मत्वायनेन लोकानुग्रहार्थं ज्ञानमयचन्द्र शिरसि दधारेति भाव । अनेन भगवतो मृदुहृदयतापि सूच्यते। तथाहि—दक्षाध्वरे अनपराधोपि चन्द्र सम्भ्रमवशात् क्रुद्धेन वीरभद्रेण इतरैरपराधिभि सह दण्डित पश्चात्स्वानपराधितावेदने हृष्टेनादण्डयदण्डनदोपशान्तये शिरसा धारित इत्यानुशासनिके स्पष्टम्। तथाचोक्तम्—'सोमस्तत्र मया देवि कुपितेन भयार्दित । पश्यश्चानपराधी सन् पादाङ्गुष्ठेन ताडित ॥ तथा विनिकृतेनाह सामपूर्वं प्रसादित । तन्मे चिन्तयतश्चासीत् पश्चात्ताप पुरा प्रिये॥ तदा प्रभृति सोम हि शिरसा धारयाम्यहम्। एव मे पापहानिस्तु भवेदिति मतिर्मम ॥' इति। निजार्चनपरितुष्ट परमेश्वर शिरसा सोम दधारेति नारदीयपुराणे॥ 'तत्रच, 'सोमद्वीप महापुण्य तीर्थं वाराणसीसमम्। सोमो यत्रार्चयन्नीश रुद्रेण शिरसा धृत ॥' इति ॥ ५ ॥

**यातमिति**॥ इह क्षोण्यामेव। स्वप्रकाशा स्वेन आत्मनैव प्रकाशमाना स्वाभिन्नानावृतचिद्रूपामित्यर्थ । अपरोक्षव्यवहारयोग्यसुखस्यैव पुरुषार्थतया तदुपपादनार्थमिद विशेषणम्। अत्र योग्यत्वम् अनावृतचिद्रूपत्वम्, तादृशचित्तादात्म्य वा। तत्रान्त्याभावेप्याद्यमस्तीति मुक्तेस्तादृशव्यवहारयोग्यता। विमुक्तिमिति। जीवमुक्तिव्यावर्तनाय विपदम्। तथाच परममुक्ति ददाति, न तु जीवन्मुक्तिमात्रमित्यर्थ । सस्कारासमानकालीनस्वरूपवैशिष्ट्य सदर्थ । मुक्तिश्चाविद्यास्तमय । तथाच, सस्कारासमानकालीनाविद्यास्तमय । अविद्यातत्संस्काररूपबन्धसामान्यशून्यात्मपर्यवसिता विमुक्तिरित्यायातम्। तदुक्त वार्तिके—'अविद्यास्तमयो मोक्षस्सा च बन्ध उदाहृत । निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित ॥' इति। अयमर्थ—अविद्याया अस्तमय सस्कारादिकार्यरूपेणाप्यनवस्थानम्। सा स्थूलरूपा सस्कारादिरूपा च। तथाच, विदेहताकालीनोऽस्तमय एव मुख्यो मोक्ष, न तु जीवन्मुक्तिकालीन ,

आरूढा पीवराङ्गं सितमकरवरं सुप्रसन्नाननाब्जा
दोर्भिः कुम्भं पयोजं वरमभयमपि व्योमगङ्गे वहन्ती ।
प्रोद्यद्राकाशशाङ्कायुतसमसुपमा शुभ्रभूषाम्बराढ्या
कारुण्यार्द्रा त्रिनेत्रा विहर मनसि मे सेन्दुकोटीरकोटिः ॥ ७ ॥

---

तदानीं संस्कारादिरूपेण मोहसत्त्वात् । अत्र पूर्वार्धेनाविद्यारूपबन्धशून्यत्वस्य, मोक्षपदार्थत्वमुक्तम् । द्वितीयार्धेन तु मोहनिवृत्तिपदार्थस्य तादृशशून्यत्वस्य ज्ञातारूपत्वम्, अभावस्याधिकरणात्मकत्वात् । एवञ्चाविद्यारूपबन्धशून्यात्मनो मोक्षपदार्थत्वं सिद्धम् । ज्ञातत्वेन अखण्डधीविषयत्वेन इति । नित्यानन्देति । 'न स पुनरावर्तते' इति श्रुतिसिद्धं मुक्त्यानन्दस्य नित्यत्वम् । स्वयमिति । अनन्यापेक्षमित्यर्थः । निरीहैः गीयमानमिति । इदञ्च मुक्तिदातृत्वोपपादकम्, तदभावे निष्कामसेव्यत्वासम्भवात् । ददत इति पञ्चम्यन्तं कल्पद्रोर्विशेषणम् । कामानिति । सुखसाधनभूतानित्यर्थः । न तु सुखमिति भावः । भूरिभेदम् उक्तप्रकारेण भूयोविशेषम् । हरशिरसि भगवच्चूडायाम्, श्रीकाश्यां वा ॥ ६ ॥

उपास्यं दिव्यं रूपं दर्शयन् तत्प्रकाशं प्रार्थयते । आरूढेति । पीवराङ्गमिति । अनेन सुखासिकासौकरी प्रोक्ता । सुप्रसन्नाननाब्जेति । अत्राब्जशब्दस्याम्भोजमिन्दुर्वार्थः । 'अब्जो जैवातृकस्सोमः' इत्यमरः । सेन्द्विति । सेन्दुः इन्दुना इन्दुकलया सहिता अलङ्कृता कोटीरकोटिः किरीटाग्रं यस्यास्सा इत्यर्थः । उपास्यदिव्यरूपविशेषो नारदीये उक्तः—'चतुर्भुजां त्रिणेत्राञ्च सर्वावयवशोभिताम् । रत्नकुम्भसिताम्भोजवराभयकरां शुभाम् ॥ श्वेतवस्त्रपरीधानां मुक्तामणिविभूषिताम् । सुप्रसन्नां सुवदनां करुणार्द्रहृदम्बुजाम् ॥ सुधाप्लावितभूपृष्ठां त्रैलोक्यानमितां सदा ॥' इति । उपासनाद्यर्थतया परदेवताया अपि मूर्तिपरिग्रहः श्रूयते रामोपनिषदि, 'उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ।' इति । स्मर्यते च—'भक्त्यैव परया तुष्टो देवदेवस्स योगिनाम् । पूजाद्यनुग्रहार्थाय रूपं भेजे चतुर्भुजम् ॥ चिन्मयस्याप्रमेयस्य निर्गुणस्याशरीरिणः । साधकानां हितार्थाय ब्रह्मणो रूपकल्पना ॥' इति । देवताधिकरणन्यायरक्षामणौ, 'यागविधिसामर्थ्याद्विग्रहो हविर्भोक्तृत्वं प्रसादवत्त्वमैश्वर्यं फलदातृत्वञ्च देवतानां कल्प्यते ।' इत्यादिना सप्रपञ्चं विग्रहादिमत्त्वं

गौरीरूपोन्मदान्ध्यप्रशमनमहनीयौषधे नीलकण्ठ—
स्वान्तोद्यत्कालमेघे कुसुमशरमहार्जवयात्रासहाये।
सेवार्थं सङ्गतानां लगति वपुषि ते दृष्टिरादौ गुराणां
यत्राङ्गे सा न तस्मात् प्रभवति किमपि स्पन्दितुं क्वापि गङ्गे ॥ ८ ॥

निर्गच्छत्प्राणवायौ मयि निजसलिलैः शीतशीतैरुपेता
गात्रं सिञ्चासि तप्तं कफहतबहलोष्णायतश्वासवेगम्।
येनाहं क्षीणपापो जनिमरणभवात्तापभारादपि स्यां
निर्मुक्तस्सर्वदुःखप्रशमनि शरणं कस्त्वदन्यस्तदानीम् ॥ ९ ॥

---

प्रसाधितम्। एवंविधमुपास्यं दिव्यं रूपं पीयूषलहर्यामपि जगन्नाथपण्डितैः प्रदर्शितम्—'शरच्चन्द्रश्वेतां शशिशकलशोभालमकुटां करैः कुम्भाम्भोजे वरभयनिरासौ च दधतीम्। सुधाधाराकाराभरणवसनां शुभ्रमकरस्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः॥' इति ॥ ७ ॥

गौरीति॥ गौर्याः रूपोन्मदः सौन्दर्यदर्पद्रिकः तेन यदान्ध्यं तत्प्रशमन महनीयौषधं तस्मिन्। सतम्यन्तानां वपुषीत्यत्र सम्बन्धः। नीलेति। नीलकण्ठः परमेश्वरः स एव नीलकण्ठो मयूरः तस्य स्वान्तस्य हृदयस्य उद्यन् वर्षारम्भे उदयं प्राप्नुवन्। कालमेघस्तस्मिन्। न प्रभवतीति। अहो प्रत्यङ्गमाधुर्याति रेक इति भावः। क्वापिति अन्यत्र क्वापीत्यर्थः ॥ ८ ॥

निर्गच्छदिति॥ उपेता समीपं प्राप्ता। गात्रमिति। गलान्तभागस्याप्युपलक्षणम्। 'ततोपि मृत्युसमये सतां पुण्यस्वरूपिणाम्। आदौ भूमौ च सन्यस्य मुखे तोयं प्रदीयते॥ गङ्गा सोपानमारुह्य सन्तो यान्ति निरामयम्॥' इति ब्रह्मवैवर्तवचनेन, 'ततो गङ्गाजलं दद्यान्महापातकनाशनम्। सर्वतीर्थकृतस्नान दानपुण्यफलप्रदम्॥' इत्यादिपूर्वोक्तगारुडवचनेन च तदानीं गङ्गाजलपानस्य परम पदप्रापकत्वादिसिद्धेः। ब्रह्मवैवर्तस्थस्य भूमौ च सन्यस्येत्यस्य दर्भास्तरणादिरूपभू संस्कारादिपूर्वकं भुवि अवारोप्येत्यर्थः। कफहतेत्यादि। कफहतः कफप्रतिरुद्धः बहलानाम् उष्णानाम् आयतानां दीर्घाणाञ्च श्वासानां वेगः प्रवाहो यस्मिन् तथा भूतमित्यर्थः। येन त्वत्सलिलसेचनेन। अपिशब्देन जनिमरणभवतापभारस्य

क्रीडं क्रीडं प्रफुल्लप्रतिनवकुसुमोल्लासिकल्लोलशृङ्ग-
श्रेण्यां मारुतैर्मरुद्भिर्धुवमघरिपुभिरसंश्रितं विश्रमाय।
संसाराध्वश्रमार्तैरुपवनमिव ते सेवितं पुण्यलिङ्गं
दुष्प्रापं प्राप्य तीरं जिगमिषति सुधीः को नु मातः परत्र ॥ ११ ॥

भक्तप्रातार्पितोद्यत्परिमळविकसत्पुष्पलोभाद्भ्रमद्भि-
र्भृङ्गैरङ्गान्निवृत्तैरिव परिलसितैर्मज्जतां पातकौघैः।
स्नात्वा सप्तर्षिसेव्ये विधिवदिह कदा वित्वरस्ते त्रिसन्ध्यं
तीर्थे प्रातार्घ्यमम्ब त्रिदशमुनिपितॄंस्तर्पयित्वा लभेय ॥ १२ ॥

---

क्रीडमिति॥ क्रीडं क्रीडं क्रीडित्वा क्रीडित्वा। इदञ्च श्रमहेतुः। प्रफुल्लप्रतिनवकुसुमोल्लासीति विशेषणेन कल्लोलशृङ्गेषु क्रीडनकसम्पत्तिरुक्ता। 'मुकुलैर्नार्चयेद्देवं चम्पकैर्जलजैर्विना' इति मुकुलार्चननिषेधात् प्रफुल्लेति। 'वर्ज्यं पर्युषितं पुष्पं वर्ज्यं पर्युषितं जलम्'. इति निषेधात् प्रतिनवेति। तादृशकल्लोलशृङ्गेषु क्रीडोक्त्या मारुतस्य शैत्यं सौरभ्यञ्च ध्वन्यते। उपवनमिवेति। प्राप्तसादानां विश्रमस्थानत्वात्। पुण्यलिङ्गं पूर्वोपार्जितपुण्यपुञ्जगमकम्। उक्तञ्च भगवत्पादैः—'पूर्वोपार्जितपुण्यपुञ्जगमकं पुण्यैर्जनैः प्राप्यते' इति। सुधीः गङ्गाकाश्यादिमाहात्म्यवेत्तेत्यर्थः। तदुक्तं काशीखण्डे—'अवाप्य काशीं दुष्प्रापां को जहाति सचेतनः। रत्नं करस्थमुत्सृज्य यस्त्वन्यत्र यियासति। हित्वा निधानं पादेन सोऽर्थमिच्छति भिक्षया॥' इति। यद्वा, सुधीः अत्यन्तदुस्सहजननमरणादिदुःखवेत्ता। तदप्युक्तं तत्रैव—'किं विस्मृतं त्वहह गर्भजमामनस्यं कालान्तदूतकृतबन्धनताडनञ्च। शम्भोरनुग्रहपरिग्रहलभ्यकाशीं मूढो विहाय किमु याति करस्थमुक्तिम्' इति। काशीमित्यादि। काशीं विहाय यो याति स मूढ एवेत्यर्थः। करस्थमुक्तिमिति। करस्था मुक्तिर्यस्यामिति काशीविशेषणम् ॥ ११ ॥

भक्तेति॥ 'नीलोत्पलानि चान्यानि पुष्पाणि सुरभीणि च। यथाशक्त्या महाभक्त्या गङ्गायाञ्चैव निक्षिपेत्॥' इति नारदीयवचनेन सुरभिकुसुमैर्गङ्गार्चनविधानात्। भृङ्गैरिति। मज्जतां प्राणिनामङ्गान्निवृत्तैः पातकौघैरिव परिलसितैः इति योजना। पातकानां नीलवर्णता कविप्रसिद्धा। अतो भृङ्गेषु तदुत्प्रेक्षा।

विधिहरिगिरिशेन्द्रान् सूतिभाजोऽभिधाय
प्रसवमपरनिघ्नं सूचयित्वोक्तिभङ्ग्या।
परिहरति शिखा सा यस्य साम्बं निदानं
हरशिरसि तुरीयं नौमि तं ध्येयमीशम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां तृतीयस्तरङ्गः॥

---

सप्तर्षिसेव्ये इति। तदुक्तं विष्णुपुराणे द्वितीयांशे—'ततः सप्तर्षयो यस्यां प्राणायामपरायणाः। तिष्ठन्ति वीचिमालाभिरुह्यमानजटा जले ॥' इति। सप्तर्षयो यस्याः जले अघमर्षणं कुर्वन्तस्तिष्ठन्ति। उह्यमानाः इतस्ततश्चाल्यमाना जटा येषां ते इति तद्व्याख्या। वित्वरः त्वरारहितः सन्। त्रिसन्ध्यमिति। अत्यन्तसंयोगे द्वितीया। कार्तार्थ्यं कृतार्थताम्। त्रिदशेति। देवतर्पणस्य प्राधान्यात् प्रथमनिर्देशः। गङ्गायां देवादितर्पणस्य फलातिशयः काशीखण्डे उक्तः—'श्रद्धया विधिवत् स्नात्वा कृत्वा देवादितर्पणम्। तिलैर्व्रीहियवैः सम्यक् सर्वयज्ञफलं लभेत् ॥' इति। विशिष्य गङ्गाजले पितृतर्पणस्य फलाधिक्यं तत्रैव स्मर्यते—'दत्ताः पितृभ्यो यत्रापस्तनयैः श्रद्धयाऽन्वितैः। समाः शतं प्रयच्छन्ति तृप्तिं मैत्रेय दुर्लभाम् ॥' इति। नारदीयेऽपि, 'दायादा यदि गङ्गायां कुर्वते पितृतर्पणम्। नरकस्था दिवं यान्ति नाकस्था ब्रह्मणः पदम् ॥' इति ॥ १२ ॥

विधीति ॥ सूतिभाजः उत्पत्तिमन्तः। अपरनिघ्नं अन्यसापेक्षम्। उक्तिभङ्ग्या दीपकसहोक्तिरूपालङ्काराभ्याम्। परिहरति प्रसवं निवारयति। सा शिखा उपनिषन्मुख्यत्वेन प्रसिद्धा शिखा। अथर्वशिखेत्यर्थः। यथाच—'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते। सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां धाता ध्याता कारणन्तु ध्येयः सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्च शम्भुराकाशमध्ये' इति। तदर्थस्तु, सर्वमिदं देवमनुष्यादिरूपो निखिलप्रपञ्चः। ब्रह्मविष्णुरुद्रेन्द्राः, इन्द्रपदमीश्वरवाचि सदाशिवस्याप्युपलक्षणम् तथाच निखिलप्रपञ्चः जगत्सृष्टिस्थितिसंहारतिरोधानानुग्रहकर्तृब्रह्मविष्णुरुद्रेश्वरसदाशिवात्मक इत्यर्थः। ते पूर्वोक्ता ब्रह्मादयः। सम्प्रसूयन्ते। यद्युत्पत्तिः परमशिवस्यापि स्यात्तस्यातस्यापि तद्वदेव ध्येयत्वमित्याशङ्क्योक्तम्—न कारणमिति। सम्प्रसूयत इति वचनविपरिणामेनानुषङ्गः।

.रणं ब्रह्मादीनां प्रसूत्युत्वरया अर्थसिद्धं कारणम्, तद्रूपः। कारणानां ब्रह्मा दीनाम्, मन्त्रोपनिषदुक्तानां कालस्वभावादीनां वा। धाता पोषयिता। ध्याता आदिसर्गसङ्कल्पकर्ता। एवम्भूतश्शम्भुः कुतोपि न सम्प्रसूयते, अतः कारणं शम्भु रेव मुमुक्षुभिर्ध्येय इति। अत्राकाशमध्य इति परमाकाशापरपर्यायरूपोपासना स्थानकथनम्। तेन हृदयकमलरविबिम्बादिषु यत्र यत्र शिवस्य ध्यानम्, तत्र सर्वत्रापि ज्योतिर्मयः कैलासो विभाव्यः। तन्मध्यवृत्तित्वेन शिवो ध्येय इति बोधितम्। अत्र श्रुतौ शंभुरेव ध्येयः, न ब्रह्मादय इत्येतदुपपादनार्थं तेषामैश्वर्यपरिच्छेदसूचनाय ब्रह्मादयः प्रसूतिमत्त्वेन निरूपयितुं प्रस्तुताः, अप्रस्तुतानि चेन्द्रियाणि, अतः प्रस्तु तानामप्रस्तुतानाञ्च प्रसूतिरूपैकक्रियान्वयो दीपकालङ्कारः। सह मूतैरिति सहोक्तिरल ङ्कारः। एताभ्यां सहोक्तिदीपकाभ्यां मूतेन्द्रियाणामिव ब्रह्मादीनामपि जनिरन्यनिमित्ते ति व्यज्यते। अयमर्थः पूर्वार्धेनोक्तः। न कारणमित्याद्यर्थ उत्तरार्धेन। यस्य अर्थ सिद्धहेतुभावस्य शम्भोः। साम्बमिति। तुरीयस्य विग्रहविशेषप्रदर्शनायेदम्। निदानं निखिलजगतां विवर्तोपादानकारणम्, परिणामित्वारम्भकत्वयोर्निरवयवत्वेना सम्भवात्। तदुक्तं पञ्चदश्याम्—'उपादानं त्रिधा भिन्नं विवर्ति परिणामि च। आरम्भकञ्च तत्रान्त्यौ न निरंशेऽवकाशिनौ॥ अवस्थान्तरभानन्तु विवर्तो रज्जु सर्पवत्। निरंशेप्यस्त्यसौ व्योम्नि तलमालिन्यकल्पनात्॥ ततो निरंश आनन्दे विवर्तो जगदिष्यताम्। इति॥' तुरीयं त्रिमूर्त्युत्तीर्णं परं तत्त्वम्। ईशसदा शिवयो रुद्रे अन्तर्भावाभिप्रायेण तुरीयत्वकथनम्। अथ विरिञ्चादिमूर्तित्रयव्यतिरेकेण न कापि ब्रह्मणश्चिरन्तना तुरीया मूर्तिः। तथाहि—मैत्रायणोपनिषदि मायो पाधिकं परं ब्रह्म प्रस्तुत्य 'तस्य प्रोक्ता अग्र्यास्तनवः ब्रह्मा विष्णुः रुद्र' इति परविग्रहाणां मध्ये विरिञ्चादिविग्रहत्रयस्यैवाग्र्यत्वश्रवणात्। यदि हि ततोपि प्राचीनं मूर्त्यन्तरं स्याद्ब्रह्मणः, कथं तेषामग्र्यत्वं भवेत्. अग्रे भवा अग्र्या उच्यन्ते। तदवलम्बनेनैव वृद्धानां ब्रह्मणो विग्रहवत्त्वव्यवहारः इत्यवसीयते। अमुमेवार्थमुपो द्बलयन्त्यत्रितपश्चर्यायां भागवतवचनानि। तत्र ह्यत्रेस्तपश्चर्या प्रस्तुत्य, 'शरणं तं प्रपद्येऽहं य एव जगदीश्वरः। प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्॥' इति। तस्य तत्फलाभिसन्धिघोषत्वा अथ चिराद्वरप्रदानाय ब्रह्मविष्णुरुद्राणां तत्र [illegible] प्रति स्तुतिप्रणामाद्युपचारानन्तरं तान् प्रत्यत्रेः 'एको मयेह भगवान्

विबुधप्रधानश्चित्ते कुतः प्रजननाय कथन्नु यूयम्। अत्रागतास्तनुभृतां मनसो विदूरा ब्रूत प्रसीदत महानिह विस्मयो मे॥' इति प्रश्ने 'यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा। सत्सङ्कल्पस्य ते ब्रह्मन् यं त्वं ध्यायसि ते वयम्।' इति तेषां प्रतिवचनोपन्यासेन विरिञ्चादिमूर्तित्रयातिरेकेण परस्य सर्वैश्वर्यादिव्यक्तिस्थान भूतं तुरीयं मूर्त्यन्तरं नास्तीति व्यक्तीकृतम्। तत्सत्त्वे तेनैव तु रूपेण परस्य तत्र प्रादुर्भावापत्तेः, अन्यथा ऋषेस्सत्सङ्कल्पत्वविरोधात्, निर्गुणस्तोत्रनिष्ठगजेन्द्र मोचनस्थल इव ध्यातृभावागृहीतेन रूपेण प्रादुर्भाव इत्यपीह वक्तुमशक्यत्वात्। तथा सति 'एको मया' इत्यादिप्रश्नायोगात्। तस्मान्न तुरीयमूर्त्यन्तरोपगमो युक्त इति। अत्राभिधीयते—प्रतीयते तावत् 'उमासहायम्' इत्यादिमन्त्रवर्णेभ्यस्तुरीया उमासहायत्वविशिष्टा मूर्तिः, सापि न ध्यानार्थमारोपितेति शक्यं वक्तुम्, छान्दोग्ये समानप्रकरणे गुणोपसंहारन्यायेन उपास्यस्य ब्रह्मणः उदाहृतमन्त्रवर्णसिद्धमूर्ति सिद्धवत्कारेण 'एष आत्मा अपहतपाप्मा' इत्यादिना शरीरवत्त्वसामान्येन प्रसक्तानां जरामरणजिघत्सापिपासादीनां निषेधदर्शनात्, अन्यथा तेषामप्रसक्तप्रतिषेधत्वापातात्। नच मूर्तिवदजरत्वादयोपि केवलमुपासनार्थमारोपिता एव उपन्यस्यन्त इत्यस्त्विति वाच्यम्, तत्रैव 'तस्मिन् कामास्समाहिताः' इत्यादिना तेषामनारोपितेश्वरगुणत्वस्फुटीकरणात्। अपिच सूतसंहितायाम्, 'उमार्धविग्रहा शुद्धा त्रिणेत्रा चन्द्रशेखरा। नीलग्रीवा परानन्दा प्रमोदात्ताण्डवप्रिया॥ ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः। सर्वमूर्तिविहीनस्य सर्वतत्त्वाधिपस्य च॥ तथाप्येषा परामूर्तिरित्येषा शाश्वती श्रुतिः' इत्युक्तम्। पराशरपुराणेपि, 'साक्षात् परतरस्यैव वस्तुतः सर्वसाक्षिणः। अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी॥ तस्यासाधारणी मूर्तिस्साम्बा चन्द्रार्धशेखरा।' इत्यारभ्य 'ब्रह्मविष्णुमहेशानास्तां ध्यायन्ति निरन्तरम्॥' इत्युक्तम्। एवमन्यत्रापीति तुरीयस्यापि उमार्धत्वादिविशिष्टा शिवभवादिपदवाच्या मूर्तिरभ्युपगन्तव्या। मैत्रायणश्रुतौ तनुशब्दोंऽशपरः, अग्र्यशब्दस्सादिमूर्त्यन्तरापेक्षया अग्र्यत्वपरः इति। 'अग्राख्यायामुरसः' इत्यादौ अग्रशब्दस्य प्रधानेपि प्रसिद्धेः। प्रधाने परशिवविग्रहे भवा इति वा व्याख्येयम्, त्रिमूर्तीनां परशिवविग्रहे जननात्। दर्शितञ्च तिसृणां मूर्तीनां परमशिवविग्रहे जननं शिवराघवसंवादे, 'दक्षिणादसृजत् पुत्रं ब्रह्माणं वामतो हरिम्। पृष्ठदेशान्महेशानं त्रीन् पुत्रानसृजद्विभुः॥' इति। यत्तु भागवत वचनमुदाहृतम्, तदपि परमशिवमूर्तेरतिरहस्यत्वेनालभ्यदर्शनतया अत्रेः कथञ्चित्सत्सङ्कल्पत्वसिद्धये 'अत्रेः पत्न्यनसूया त्रीन् जज्ञे सुयशसः सुतान्। दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान्॥' इति भागवतोक्तावतारत्रयेण प्रादुर्भाव इत्येतदभिप्रायमिति

गौर्यामर्धाङ्गभाजि प्रबलतरलगन्मत्सरावेगनिर्य-
द्भ्रूक्षेपाक्षेपचेष्टा इव कुटिलतरास्तावकीनास्तरङ्गाः ।
त्वङ्गन्तो वातवेगैर्हरशिरसि महासारसंसारमाला-
नन्तर्मे रूढमूलान् दृढममरधुनि क्षिप्रमुत्पाटयेयुः ॥ १ ॥

संसाराम्भोधिसेतुः सुरनगरसमारोहसोपानपङ्क्ति-
र्व्याधिच्छेदासियष्टिर्गगनधुनि भवत्तुङ्गकल्लोलमाला ।
आश्चर्याणां निधानं जगति जयति या स्वोदितैर्वातपोतै-
र्दूरादभ्यागतानां दिनमनु कुरुते स्वागतोक्तिं स्वनद्भिः ॥ २ ॥

---

न कश्चिद्विरोध इत्यलमधिकेन। ईशं सर्वैश्वर्यसम्पन्नं सर्वेश्वरम्। तथाचात्र पुराणवचनान्युपबृंहणानि—'सर्वमेतत् परित्यज्य शिव एव शिवङ्करः। परो ध्येयो महादेवः समाप्ताथर्वणी श्रुतिः॥' इति, 'यस्मात्सर्वमिदं ब्रह्म विष्णुरुद्रेन्द्रपूर्वकम्। सह भूतेन्द्रियैस्सर्वैः प्रथमं सम्प्रसूयते॥ कारणानाञ्च यो धाता ध्याता परम कारणम्। न सम्प्रसूयतेऽन्यस्मात् कुतश्चन कदाचन॥ स सर्वैश्वर्यसम्पूर्णो नाम्ना सर्वेश्वरः स्वयम्। सर्वैर्मुमुक्षुभिर्ध्येयश्शम्भुराकाशमध्यगः॥' इत्यादीनि च ॥ १३ ॥

**गौर्यामिति ॥** अर्धाङ्गभाजीति। अर्थात्स्वकान्तस्य। इदञ्च प्रबलतर लगने हेतुगर्भम्। मत्सरावेगेति। मत्सरस्य अर्थात्सापत्न्यनिमित्तकस्य आवेगः अतिशयः। यद्वा, मत्सरश्चावेगो रोषश्च मत्सरावेगौ ताभ्यां निर्यन्तः उदीयमानाः भ्रूक्षेपा एवाक्षेपचेष्टा न्यक्कारक्रिया इत्यर्थः। कुटिलतराः वक्रतराः। त्वङ्गन्तः उत्पतन्तः। महासारसंसारसालान् महासाराः अतिबलाः। 'सारो बले स्थिरांशे च' इति कोशः। तथाभूताः संसारा एव सालाः वृक्षास्तान्। अन्तः हृदये। रूढमूलान् रूढं बद्धं मूलं वासनारूपं येषां तान्। दृढमिति क्रियाविशेषणम्। रूढमित्यत्रान्वयः ॥ १ ॥

**संसारेति ॥** सेतुरिति। तरणसाधनत्वादिति भावः। सुरनगरेति। 'संसारमोचकश्चाहं जनानामनुकम्पया। गङ्गातरङ्गरूपेण सोपानं निर्ममे दिवः' ॥

किङ्कर्तव्यप्रमूढान् भवपथविवशान् जाह्नवि प्रोन्नताग्रै-
श्चञ्चत्कल्लोलहस्तैरुपलतलसमाघातसञ्जातघोषैः।
स्नानायाहूय खेदादमरकरिकरस्पर्धिभिर्मोचयित्वा
विश्रामं शाश्वतं त्वं दिशसि हरपदे निरतुला तेऽनुकम्पा ॥ ३ ॥

मर्त्यास्ते वीचिवातप्रतिनिहतमहापापपांसुप्रवेशं
तीरं यावन्न यातास्तदवधि भवजक्लेशपाशाद्युगेऽस्मिन्।
निर्मुक्ता नो भवेयुः कथमपि बहुशः स्मर्यते स्पष्टमेत-
त्तत्रैव व्योमगङ्गे मम दिश कृपया सुस्थितिस्थेमसौख्यम् ॥ ४ ॥

---

इति काशीखण्डवचनात्। व्याधिच्छेदासियष्टिरिति। 'व्याधिग्रस्ते कळेवरे औषधं जाह्नवीतोयम्' इति वचनात्। स्वोदितैः स्वोद्भूतैः। वातपोतैः मन्दवातैः। अत्र गृहमभ्यागतानमतिथीनां स्वेनोक्त्वा प्रेषितैर्बालकैः स्वागतोक्तिं कुर्वन्त्याः कस्याश्चिद्गृहनायिकायाः समाधिः ॥ २ ॥

किङ्कर्तव्येति ॥ प्रोन्नताग्रैरिति। औन्नत्याभावे दूरस्था न पश्येयुरिति भावः। सञ्जातघोषैरिति विशेषणेनाह्वानस्य हस्तताडनपूर्वकत्वं लभ्यते। अमरेति। अनेनापि विशेषणेन दूरस्थानां दर्शनानुगुणं स्थौल्याधिक्यं प्रतिपादितम्। शाश्वतं विश्रामं सुस्थिरं श्रमापनोदनम्। हरपदे काश्याम्, कैलासे वा। निस्तुलेति। अतर्कितमेवातङ्कान्मोचयित्वा सुस्थिरविश्रामप्रदानात् ॥ ३ ॥

मर्त्या इति ॥ वीचीति। वीचिवातैः प्रतिनिहतः प्रतिरुद्धः महापापपांसूनां प्रवेशो यत्र तदित्यर्थः। पापहारिण्यास्तव सान्निध्यादिति भावः। तदुक्तं काशीखण्डे, 'पापपांसुमहावात्या पापद्रुमकुठारिका। पापेन्धनदवाग्निश्च गङ्गेयं पुण्यवाहिनी ॥' इति। कथमपि केनापि प्रकारेण। निर्मुक्ता नो भवेयुरिति। कर्मान्तराणां सापायत्वात् प्रभावराहित्याच्चेति भावः। स्पष्टमेतत् काशीखण्डे, 'कलौ वारणसी पुरी। कलौ भागीरथी गङ्गा' इति। तत्रैव तीरे एव। सुस्थितिस्थेमसौख्यं सुस्थितौ यः स्थेमा तत्प्रभवं सौख्यम्। स्थिरावाससुखमिति यावत् ॥ ४ ॥

सञ्चिन्त्यान्त्यामवस्थां बहुलकफकृतश्वासरोधैरसह्यां
कष्टां नाहं बिभेमि त्रिदशधुनि परैः सर्वथा दुर्निवाराम् ।
यत्तावत् सन्निधाय ध्रुवमुरुकृपया चालयिष्यस्यशङ्कं
दासेऽस्मिन् पाणिपद्मं प्रबलभवमहारोगसिद्धौषधाग्र्यम् ॥ ५ ॥

देवान् विस्मापयन्ती विकृतयमभटान् दूरमुच्चाटयन्ती
प्रादुर्भूता पुरस्तादतनुतनुरुचा स्मेरवक्त्राम्बुजश्रीः ।
कालारातिद्वितीये शरणमभियतस्त्वत्पदाम्भोजयुग्मं
प्राणापायं मम त्वं मुनिवरनिकरश्लाघनीय विधेहि ॥ ६ ॥

दुर्वारानाद्यविद्यातिमिरखरकरं ब्रह्मविद्यातरङ्गे
दासायास्मै तदानीं समुपदिश महावाक्यमद्वैतनिष्ठम् ।
यस्मै भिक्षुप्रकाण्डाः क्षपितमलचया वीतरागाः प्रशान्ताः
सश्रद्धं संश्रयन्ते निखिलगुरुशिरःश्लाघिते देशिकेन्द्रान् ॥ ७ ॥

---

सञ्चिन्त्येति ॥ बहुलेति । बहुलेन प्रवृद्धेन कफेन कृतः यः श्वासरोधः श्वासप्रतिबन्धः तैरित्यर्थः । कष्टां शोच्याम् । परैः बन्धुजनौषधादिभिः । दुर्निवारां प्रतीकारं कर्तुमशक्याम् । तावत् तदा । तादृश्यान्त्यकाले इत्यर्थः । अशङ्कं पापित्वादस्पृश्योऽयमित्यादिशङ्कां विना । प्रबलो यो भवमहारोगः तस्य सिद्धौषधाग्र्यमित्यर्थः । 'भेषजं भवरोगिणाम्' इत्यादिस्मृतेः ॥ ५ ॥

देवानिति ॥ अतनुतनुरुचा अनल्पशरीरकान्त्या । इदं विस्मापने उच्चाटने च करणम् । द्वितीये सहधर्मिणि । अभियतः अभिगच्छतः । प्राणापायं प्राणवियोगम् ॥ ६ ॥

दुर्वारेति ॥ खरकरः सूर्यः । अविद्यानाशकत्वोक्त्या तद्विलासभूतसंसारनाशकत्वमपि सूचितम् । ब्रह्मविद्यातरङ्गे इति । ब्रह्मविद्यैव तरङ्गो यस्यास्तस्याः सम्बुद्धिः । 'वाणी वेदवती विद्या ब्रह्मविद्यातरङ्गिणी' इति स्मरणात् । अनेन ब्रह्मविद्यायाः स्वाधीनत्वमुक्तम् । तदानीं प्राणापायकाले । अद्वैतनिष्ठम् , अद्वैते, द्विधा इतं द्वीतं तस्य भावो द्वैतम् । तदुक्तं वार्तिके—'द्विधेतं द्वीतमित्याहुः तद्भावो द्वैतमुच्यते' इति । न विद्यते द्वैतं यत्र तदद्वैतं तस्मिन् ब्रह्मणि । प्रत्यक्ब्रह्मैक्ये इति

अज्ञात्वा ते प्रभावं बत निगमगिरां विस्तरैः स्तूयमानं
सुस्पष्टं विश्वविश्वोद्भवमुखविविधक्रीडितैश्चानुमेयम् ।
आशापाशैर्भ्रमन्तं दिशि दिशि समुपाकृष्टमेतं जरन्तं
पश्योद्विग्नं प्रपन्नं प्रणतजनमनस्तापभङ्गैरपाङ्गैः ॥ ८ ॥

---

यावत् । निष्ठा तात्पर्यं यस्य तत् । यस्मै महावाक्याय । तदुपदेशं लब्धुमिति यावत् । भिक्षुप्रकाण्डा इति । सविशेषणेनानेन वैराग्यादिसाधनचतुष्टयसम्पत्ति र्दर्शिता । सश्रद्धमिति । श्रद्धा च 'गुरुवेदान्तवाक्येषु भक्तिः श्रद्धेति कीर्तिता' इत्युक्तलक्षणा । संश्रयन्ते सम्यक् यथाविधि श्रयन्ते शरणत्वबुद्ध्या उपसर्पन्ति । निखिलेति । निखिलगुरुः निखिलानां गुरुः परमेश्वरः । तदुक्तं पतञ्जलिना । 'पूर्वेषा मपि गुरुः कालेनानवच्छेदात् ।' इति । तथा शिवपुराणे च—'प्रतिसर्गं प्रसूतानां ब्रह्मणां शास्त्रविस्तरम् । उपदेष्टा स एवासीत् कालावच्छेदवर्तिनाम् ॥ कालावच्छेदयुक्तानां गुरूणामप्यसौ गुरुः ।' इति । 'गुशब्दस्त्वन्धकारस्स्यात् रुशब्द स्तन्निरोधकः । अन्धकारविरोधित्वाद्गुरुरित्यभिधीयते ॥' इति तारकोपनिषदि गुरु शब्दो निरुक्तः । निखिलगुरवः निखिला गुरवः देशिका इति च । परमेश्वरपक्षे शिरःश्लाघनं शिरसि वहनम् । देशिकपक्षे आश्चर्यातिरेकेण शिरसश्चालनम् । सम्बुद्धिभ्यां महावाक्योपदेशे परमयोग्यता दर्शिता । ननु ब्रह्मविद्यावत्त्वं परमेश्वरस्यैवेति तदुपदेष्टृत्वं नान्यस्येति चेन्न, भगवत्या उमादेव्या ब्रह्मविद्याप्रदायिनीत्वस्य श्रुति पुराणप्रसिद्धेः । तलवकारिणामुपनिषदि तस्यादशकादीन् प्रति, श्वेताश्वतरोपनिषदि महर्षीन् प्रति च ब्रह्मविद्योपदेशस्य श्रुतत्वात्, कूर्मपुराणे 'पार्वती परमा देवी सर्वविद्या प्रदायिनी' इति स्मरणाच्च । तथा 'विद्या वेगवती वन्द्या ब्रह्मणी ब्रह्मवादिनी । निर्मलज्ञान जननी निश्शेषप्राणितापहृत् ॥' इत्यादिस्मरणेन च गङ्गाया अपि तथात्वसिद्धेः । तत्र ब्रह्मवादिनीत्यस्य ब्रह्म वदितुमुपदेष्टुं शीलं यस्यास्सेत्यर्थकत्वात्, निर्मलज्ञानजननीत्यस्य उपदेशादिद्वारा ब्रह्मात्मैक्यज्ञानोत्पादिनीत्यर्थकत्वात् । एवं ज्ञानरूपस्य चन्द्रस्य शिरसि धारणं परमेश्वरस्येव गङ्गाया अपि पुराणादिसिद्धम् । तच्च ज्ञानप्रदत्वप्रत्यायकमित्य तोऽपि गङ्गाया ज्ञानवत्त्वतदुपदेष्टृत्वादिकं परमेश्वरस्येव निर्व्यूढमिति ॥ ७ ॥

अज्ञात्वेति ॥ गङ्गे इत्यर्थसिद्धम् । बतेति खेदे । प्रभावस्य सुज्ञेयता माह—निगमेति । निगमगिरां वेदवाचाम् । विस्तरैः प्रपञ्चैः । उपबृंहणतया

कारुण्याब्धे क्षमस्व प्रबलतरमिदं साहसं हासमूलं
स्तोतुं मौढ्यात् प्रवृत्तो यदयमनुपमप्राभवां त्वां वराकः।
गौरीकान्तोपि यस्याः स्पृहयति भगवानव्ययश्चन्द्रमौलि-
र्धर्तुं मूर्ध्ना पदाब्जं सततमसुलभं तीर्थसेव्ये नमस्ते ॥ ९ ॥

एकत्र स्नानघोषैस्सुरधुनि परतो हन्त सङ्कल्पघोषै-
रन्यत्र ब्रह्मघोषैरपरदिशि तथा दानमन्त्रादिघोषैः।
त्वन्नामस्तोत्रघोषैः श्रवणसुखकरैरन्यतो लोभनीयं
भूयः प्रेक्षेय किन्नो तटमिदममरश्लाघितासुप्रयाणम् ॥ १० ॥

---

वेदार्थप्रकाशकैरितिहासपुराणैरिति यावत्। स्तूयमानम्। अनेन शब्दप्रमाणं दर्शितम्। अनुमानमाह—विश्वेति। अत्र मुखशब्देन स्थितिलययोः परिग्रहः। विधिधेति। विचित्रेत्यर्थः। आशापाशैः समुपाकृष्टं भ्रमन्तमित्यन्वयः। जरन्तं वृद्धम्। उद्विग्नं निर्विण्णम्। प्रपन्नं शरणागतम् ॥ ८ ॥

कारुण्येति॥ हासमूलम् अशक्यारम्भरूपत्वात् परिहासकारणम्। अनुपमप्राभवामिति। तथाच ब्रह्मवैवर्ते—'यस्याः प्रभाव अतुलः पुराणेषु श्रुतौ श्रुतः' इति। वराकः शोचनीयः। प्रकृते वाचि। भगवानित्यादि। तथाभूतोपीत्यर्थः। अव्यय इति। व्येति विविधतया एति, जायते, अस्ति, वर्धते, परिणमते, अपक्षीयते, नश्यतीति वार्ष्यायणिपरिगणिता ये षड्भावविकारास्तान् प्रति पद्यत इति व्ययः, स नेत्यव्ययः जननादिविकारशून्य इत्यर्थः। यद्वा, 'ज्ञानं विरागमैश्वर्यं तपस्सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥' इत्युक्तानि दशाव्ययानि, तद्वानित्यर्थः। अर्श आद्यच्। तीर्थसेव्ये इति। 'कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि चित्। तानि सर्वाणि सेवन्ते काश्यामुत्तरवाहिनीम्।' इति। तीर्थानि च महानद्यादीनि। यथोक्तमानुशासनिके—'यास्तु लोके महानद्यस्तास्सर्वास्तीर्थसंज्ञिताः। समुद्राश्च महातीर्थं पावनं परमं शुभम्॥' इति। कोशे तु, 'निपानागमयोस्तीर्थमृषिजुष्टे जले गुरौ' इति ॥ ९ ॥

एकत्रेति॥ सङ्कल्पघोषैः सङ्कल्पः कर्मारम्भसमये सङ्कल्पनीयार्थप्रकाशकं वाक्यम्, तद्घोषैः। ब्रह्मघोषैः वेदघोषैः। त्वन्नामस्तोत्रघोषैः त्वन्नामस्तोत्रयोः

लेखव्यूहार्पितोद्यत्परिमळकमलाकीर्णकल्लोलमाला-
खेलद्वातावधूतक्षितिरुहलतिकाजातरुद्धार्कतापम् ।
संसाराध्वश्रमार्तैः श्रितमुलपलसत्सैकतं ते कदैत-
त्तीरं भूयो न दिदृक्षाविषयमपि जनान् पात्रयत् संश्रयिष्ये ॥ ११ ॥

कोटीरन्यस्तखण्डप्रचितशशिपरांशाभिशङ्क्यालिकाढ्यं
चिल्लीलास्यावभासं विसृमरकरुणाशीतपाताक्षिकोणम् ।
आकम्राकारनासं मृदुहसितसुधाचारुबिम्बाधरं ते
वक्त्राब्जं मन्मथारेश्चिरसुकृतफलं भासतां मानसे मे ॥ १२ ॥

---

घोषैः । लोभनीयं स्पृहणीयम् । श्रवणसुखकरैरिति । सर्वत्र घोषपदैः सह सम्बध्यते । अमरश्लाघितासुप्रयाणम् अमरैः श्लाघितम् असुप्रयाणम् अन्त्ययात्रा यत्र तत् । 'त्वत्तीरे मरणन्तु मङ्गळतरं देवैरपि श्लाघ्यते' इति भगवत्पादवचनात् । 'यत्र काश्यां मृतो जन्तुर्ब्रह्मनारायणादिभिः । प्रबद्धमूर्धाञ्जलिभिर्नमस्येतातियत्नतः ॥' इति च ॥ १० ॥

लेखेति ॥ लेखव्यूहेन देवसमूहेन अर्पितानि उद्यत्परिमळानि यानि कमलानि तैराकीर्णासु कल्लोलानां मालासु पङ्क्तिषु खेलता वातेन अवधूतानां कम्पितानां क्षितिरुहाणां लतिकानाञ्च जातेन समूहेन रुद्धः अर्कतापो यत्र तदित्यर्थः। उलपलसत्सैकतम् उलपैः तृणविशेषैर्लसन्ति सैकतानि यत्र तादृशम्। पात्रयदिति। तथाविधाया गङ्गाया नित्यसम्बन्धादिति भावः। गङ्गाया दिदृक्षामात्रेण पात्रत्वं भविष्ये स्मर्यते—'कदा द्रक्ष्यामि तां गङ्गां कदा स्नानं लभेमहि । इति पुंसा भिलषिता कुलानां तारयेच्छतम् ॥' इति ॥ ११ ॥

हरशिरसि हि घुष्यन्दैवतं नैव विष्णो-
रधिकमिति ननर्त व्यास उद्धृत्य बाहुम्।
लघु यदनुचराग्र्यः स्तब्धवाग्दोषमेनं
मुनिमतनुत नन्दी तं भजे विश्वनाथम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां चतुर्थस्तरङ्गः॥

---

चवलाब्जम् अब्जमिव चवलम्। मानस इति। अत्र श्लेषमहिम्ना मानससरसि अब्ज मिवेत्युपमा प्रतीयते ॥ १२ ॥

भगवान् वेदव्यासः परमभागवतः काशीमागत्य परमशिवं निन्दन् शिष्यैः सह सव्यं भुजमुत्क्षिप्य ननर्त। तदा क्रुद्धेन नन्दीश्वरेण स्तम्भितभुजदण्डकण्ठः सन् विष्णुना गूढं प्रेरितश्शिवमस्तौषीदितीमां पुराणकथामालम्ब्य विश्वनाथं स्तौति—हरशिरसीति॥ हीति पुराणादिप्रसिद्धिं द्योतयति। घुष्यन्निति। तत्प्रकारश्च काशीखण्डे—'परिनिर्मथ्य वाग्जालं सुनिश्चित्यासकृद्बहु। इदमेकं परिज्ञातं सेव्यः सर्वेश्वरो हरिः॥' इत्यादिः। व्यास इति। व्यास्यति वेदानिति व्यासः, व्याङ्पूर्वकादस्धातोरच्। अस्य निरुक्तिर्महाभारते—'यो व्यस्य वेदांश्चतुरस्त पसा भगवानृषिः। लोके व्यासत्वमापेदे कार्ष्ण्यात् कृष्णत्वमेव च॥' इति। व्यस्यतीति व्यासः विपूर्वकादस्यतेर्घञ् इति पक्षेप्यर्थः पूर्वोक्त एव। सहस्रनाम भाष्ये भगवत्पादैरप्युक्तम्—'ऋग्वेदादिविभागेन चतुर्धा वेदा व्यस्ताः। तत्राद्यो वेदः एकविंशतिधा कृतः। द्वितीय एकोत्तरशतधा कृतः। सामवेदस्सहस्रधा कृतः। अथर्ववेदः नवधा शाखाभेदेन कृतः। अन्यानि पुराणानि व्यस्तान्यनेनेति व्यासः' इति। बाहुं दक्षिणं भुजम्। तदुक्तं काशीखण्डे—'सव्यमुत्क्षिप्य वै भुजम्' इति। स्तब्धेति। स्तब्धौ वाग्दोषौ वचनबाहू यस्य तम्। तदुक्तं तत्रैव—'तस्तम्भ तावत्तद्बाहुं स शैलादिः स्वलीलया। वाक्स्तम्भश्चापि तस्यासीत्॥' इति। अत्र शैलादिः नन्दीश्वरः इति॥ ॥ १३ ॥

रयाकृष्टत्रैविष्टपविपिनकल्पद्रुमलता-
कदम्बा कल्लोलभ्रमकवलिताशाभ्रकुहरा।
महावर्तभ्राम्यत्त्रिदशगणयाना विधिपुरात्
क्षरन्ती संरुद्धद्युमणिपदवी देवि जयसि ॥ १ ॥

समुत्पत्तिर्मातस्तव मधुरमूर्तेर्मधुरिपोः
पदाम्भोजाद्वासो भवशुभकपर्दोदरगृहे।
दृढाऽऽबद्धा श्रद्धा निखिलभवसन्तापहरणे
महिम्नां भूमा ते सुरतटिनि विश्वोत्तरतरः ॥ २ ॥

सकामैर्निष्कामैरपि भवसि सेव्या त्रिपथगे
परा मूर्तिश्शम्भोर्दुरितचयदावानलशिखा।
जगत्सृष्टिस्थेमप्रळयकलना मुक्तिरमणि
त्वदायत्ता केन त्वमसि तुलनीया कविवरैः ॥ ३ ॥

रयेति ॥ रयेण वेगेन आकृष्टः सह नीतः त्रैविष्टपविपिनं नन्दनोद्यानं तस्मिन् ये कल्पद्रुमा लताश्च तेषां कदम्बः समूहो यया। कल्लोलानां भ्रमेण कवलिताः आच्छादिता आशाः दिशः अभ्रस्य गगनस्य कुहरः अन्तर्भागश्च यया सा॥ अत एव संरुद्धद्युमणिपदवी संरुद्धा द्युमणेः सूर्यस्य पदवी मार्गो यया सेत्यर्थः। प्राधान्यात् द्युमणीत्युक्तम्। विधिपुरात् सत्यनिलयात्। क्षरन्ती भुवं प्रति प्रवहन्ती। अस्मिन्नुत्तरस्मिंश्च तरङ्गे शिखरिणीवृत्तम् ॥ १ ॥

समुत्पत्तिरिति ॥ पदाम्भोजात् दक्षिणपदाब्जादित्यर्थः। तदुक्तं नारदीय पुराणे—'हरेर्दक्षिणपादाब्जक्षाल्नादमरापगा। वामपादोद्भवा वापि सरयूर्मानसप्रसूः॥' इति। निखिलेति। निखिलानां निखिला वा ये भवसन्तापाः संसारदुःखानि तेषां हरणे समूलविनाशने इत्यर्थः ॥ २ ॥

सकामैरिति ॥ त्रिपथगे इति सम्बुद्ध्या भगीरथानीतत्वं सूच्यते। तेन सकामसेव्यत्वमुपपादितम्। परा मूर्तिः मूर्त्यन्तरम्। 'ममैव सा परा मूर्तिस्तोय

विना त साहाय्यं प्रभवात न काश्या पशुपात--
गतासुभ्यो मुक्तः श्रुतिकथितदाने कथमपि।
अतो युक्तं मूर्ध्ना गिरिशरतनूजे स भवती-
मघौघानां हन्त्रीं सुबहुमनुते नित्यमिति यत् ॥ ४ ॥

त्रियुक्तैर्युक्तैर्वा बहुविधतपोदानयजनै-
र्न वा योगैर्लभ्यं सुरधुनि यदायासजटिलैः।
सकृत् स्नानादस्यामुदगभिसरन्त्यां त्वयि जवात्--
समस्तानां नूनं तदतिसुलभं शाश्वतपदम् ॥ ५ ॥

---

रूपा शिवात्मिका।' इति स्मरणात्। मुक्तिरमणीति। मुक्तिरेव रमणी मनोहरकळेवरा योषा, तद्रूपधारिणी मुक्तिरिति यावत्, तादृशि इत्यर्थः, 'मूर्तिमन्मुक्तिरमणी' इति स्मरणात्। अनेन निष्कामसेव्यत्वम् परा मूर्तिश्शम्भोरित्यनेनोभयसेव्यत्वञ्च प्रतिपादितम्। शम्भुमूर्त्यन्तरत्वस्योपपादकं जगदित्याद्यायवेत्यन्तमिति च बोध्यम् ॥ ३ ॥

विनेति ॥ पशुपतिः रुद्रः, 'ब्रह्मादिस्तम्बपर्यन्ताः पशवः परिकीर्तिताः। तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः।' इति स्मरणात्। अत्र पतिः स्वामी, पातेरौणादिके डतिप्रत्यये रक्षकश्च। तत्र स्वामित्वं पशूनां बन्धने, बन्धनादमोचयित्वैव भ्रामणे, तेषु स्वैकशरणानाम्मोचने च सामर्थ्यम्। रक्षकत्वन्तु तत्पाशमोचकत्वम्। तथाच हरिवंशे, 'पालयामि पशून् यस्मात्सृजामि च यदृच्छया। तेषाञ्च पतिरेवाहं तस्मात् पशुपतिः स्मृतः॥' इति। द्रोणपर्वण्यपि, 'सर्वान् यच्च पशून् पाति तैश्च यद्रमते पुनः। तेषामपि पतिर्यच्च तस्मात् पशुपतिः स्मृतः॥' इति। मुक्तरिति दाने अन्वेति। काश्यां मृतेभ्यः परमशिवो मुक्तिं ददातीत्यर्थः श्रुतिकथित इत्यर्थः। कथमपि न प्रभवतीति सम्बन्धः। साहाय्यप्रकारं दर्शयितुं विशिनष्टि—अघौघानां हन्त्रीमिति ॥ ४ ॥

वियुक्तैरिति ॥ वियुक्तैः व्यस्तैः। युक्तैः समस्तैः। आयासजटिलैः आयासबहुलैः। उदगभिसरन्त्यामिति। उत्तरवाहिन्या गङ्गाया विशेषस्मरणात्। समस्तानाम्, न तु कस्यचित् प्राणिविशेषस्य ॥ ५ ॥

सकृत्स्नानादेव प्रचुरमहिमन्यम्बुनि वली
प्रसादस्ते हस्ते, त्रिविधहरिगिरीशात्मनि शिवे।
प्रसन्नायां सत्यां त्वयि जगति किं किन्न सुलभं
नृणामौदासीन्यं यदिह तदहो पापमहिमा ॥ ६ ॥

---

सकृदिति ॥ प्रचुरेति। प्रचुराः महिमानो यत्र तस्मिन्। महिमा च दर्शनस्पर्शनादिना निखिलपापनाशकत्वादिरूप। तथाच महाभारतवचनम्—'गङ्गास्नानं सर्वविधं सर्वपापप्रणाशकम्। चान्द्रायणसहस्रन्तु यश्चरेत् कायशोधनम्। पिबेद्यश्चैव गङ्गाम्भस्समौ स्यातां न वाऽसमौ॥ भवन्ति निर्विषास्सर्पा यथा तार्क्ष्यस्य दर्शनात्। गङ्गाया दर्शनात्तद्वत्सर्वपापैः प्रमुच्यते॥' इति। अत्र पूर्वमुदाहृतगारुड वचनं च स्मर्तव्यम्। ते इति प्रसादे अम्बुनि चान्वेति। हस्ते क्षिप्रसाध्य इत्यर्थः। त्रिधीत्यादि। त्रिमूर्तिस्वरूपे इत्यर्थः। अम्बुनीत्यस्य विशेषणमेतत्। तथाच ब्रह्मवैवर्ते—'ब्रह्मविष्णुशिवदेवरूपिणी सर्वयज्ञफलदा शिवप्रदा। सर्वदान जपयज्ञभोगदा गङ्गया न हि समं जगत्त्रये॥' इति। ननु अपूर्वमेव कर्म व्यापारतया तत्तत्फलजनकम्, न प्रसाद इति मन्ये प्रसादसिद्धयुक्ति स्थिरयन्नाह—प्रसन्नायामिति। किं किन्न सुलभमिति। अयं भावः—यागाकृतिस्पर्शो रीश्वरप्रसादकोपयोरिव कर्मव्यापारत्वात्तयोश्च फलसमवायित्वे तत्तदन्तःकरणे अवच्छेदकताख्यसम्बन्धस्वीकारेण फलसामानाधिकरण्यसम्भवात् उभयमभिमतमपूर्वं फलव्यापारतया कल्प्यते। स्पष्टश्चेदं 'फलमत उपपत्तेः' इत्यधिकरणे सूत्रभाष्यकारयामिति। अथवा, प्रसादजन्येच्छाया एव व्यापारत्वं कल्प्यते, नत्वपूर्वस्य, आगमवेदिनां मते एतद्धर्मं दास्यामीत्याकारिकाया ईश्वरेच्छाया एव धर्मत्वात्। तदुक्तमुपस्कार प्रकाशिकायाम्—'फल इत्यपरे प्राहुस्तदेवागमवेदिनः। ईश्वरेच्छेति तं विद्यात् फलमेव तु वा फलम्॥' इति। अस्य व्याख्या—आगमवेदिनः अपरे तत्र फलसाधनं फल एव न त्वपूर्वमिति प्राहुरित्यर्थः। फलपदस्य इदानीमित्यादि प्रतीतिविषयत्वेनैव प्रसिद्धिः, न त्वीश्वरेच्छायाम्। तत्र च ईश्वरस्यैव फल पदार्थत्वेन विवक्षिता। अत्र प्रकृतशास्त्रदार्थमीश्वरेच्छेति विवादित्—ईश्वरेच्छेति। ईश्वरेच्छा चात्र 'एतद्धर्मं दास्यामि' इत्याकारिका बोध्या। फलदैवेति। सा ईश्वरेच्छा एव फलदैव जनयत्येवेत्यर्थः। तथाच ईश्वरेच्छाया फलजनकत्वेन,

निजाङ्कं यातेभ्यो भवदहनतापोदिततृपा
परामृश्यालोलैश्शिशिरतरवीचीकरतलैः।
त्रिलोकीमातस्त्वं प्रदिशसि परं वत्सलमनाः
पयः स्वं माधुर्यप्रशमितसुधाहङ्कृतिभरम् ॥ ॥ ७ ॥

स्फुरत्कामाद्युग्रप्रतिपवनसातत्यचलनं
महाघौघावर्तं विविधविषयग्राहभयदम्।
तरन्त्वेते मर्त्या भवजलधिमित्याचकृपया
त्वया क्लृप्ताः पोतास्सुरतटिनि कल्लोलनिवहाः ॥ ८ ॥

समुन्मीलत्पाथोरुहकुहरलज्जाकररुचौ
भवत्पादे मातः स्मरहरशिरःसादरधृते।
सदा चित्तासङ्गात् परमिह समीहे न सुमनः–
किरीटोद्यद्रत्नद्युतिविहितनीराजनविधौ ॥ ॥ ९ ॥

---

कलयतीति व्युत्पत्त्या कालपदार्थत्वात् 'ईश्वरेच्छेति तं विद्यात्' इत्यस्य नासङ्गतिरिति भावः इति। स्वर्गादिरूपेष्टविषयकेच्छारूपो धर्मः, नरकादिरूपानिष्टविषयकेच्छा रूपश्चाधर्मः इति विवेकः। इष्टानिष्टविषयकेच्छयोः प्रसादप्रकोपजन्यत्वं लोके अनुभवसिद्धमतो धर्मरूपेच्छा ईश्वरप्रसादाज्जायते, अधर्मरूपा च कोपादित्यवश्यमङ्गी कार्यमिति प्रकृते अपूर्वसम्पादनाय न प्रसादस्यापेक्षितत्वमित्याशयः ॥ ६ ॥

निजेति॥ निजाङ्कं निजोत्सङ्गं तृषा हेतुना यातेभ्यः प्रदिशसीत्यन्वयः। वत्सलमना इति। वत्सः कामः इच्छा स्नेह इत्यर्थः, वृत्तिविषये वत्सशब्दस्य कामार्थकत्वात्। तद्वत् वत्सलम्। 'वत्सांसाभ्यां कामबले' इति मत्वर्थीयोऽ च्प्रत्ययः। तादृशं मनो यस्यास्सेत्यर्थः। पयः जलं स्तन्यञ्च ॥ ७ ॥

स्फुरदिति ॥ प्रतिपवनः प्रतिवायुः तस्य सातत्यचलनम् अविच्छेदेन चानं यत्र स्फुरतीत्यर्थः॥ ॥ ८ ॥

समुन्मीलदिति॥ कुहरः अन्तर्भागः। सदा चित्तासङ्गः चित्तस्य सन्तता वस्थानम्। परम् अन्यत्। ननु शशिकलापि भगवता शिरसि धार्यते ततः

अनाचरो दूरे श्रुतिविहितकर्माणि निखिला-
न्यसत्सङ्गी हित्वा बत विगतलज्जः पशुरिव ।
भ्रमन् भोगासक्तस्सुरधुनि भवद्भक्तितरणिं
विना संसाराब्धिं कथमिव तरेयं कुरु कृपाम् ॥ १० ॥

पुराणानां पङ्क्तिर्बहु वदति वेदोदितमनु
त्वदीयं माहात्म्यं समुचितकथासङ्घटनया ।
तदेतद्यत्किञ्चिन्निखिलमपि तत्ते निगदितुं
जगत्यां को नाम प्रभवति परब्रह्ममहिपि ॥ ११ ॥

---

को विशेषो गङ्गायाः, येन भजनीयता स्यादित्याशङ्क्याह—सुमन इत्यादि। सुमनसां देवानां किरीटेपु उद्यतां प्रकाशमानानां रत्नानां द्युतिभिः विहितो नीराजनविधिर्यस्य तथाभूते इत्यर्थः। सकलदेववन्द्ये इति यावत् ॥ ९ ॥

अनाचार इति। आचारश्च शिष्टानामभिमतो दयादाक्षिण्यादियुक्तो वृत्तिविशेष इति माधवीये। धर्माधिकारनिमित्तं शौचाचमनादिलक्षणः क्रियाविशेष इति स्मृतिमुक्ताफले। तरणिर्नौः तां विना तल्लाभाभावे इत्यर्थः। कुरु कृपामिति। अर्थात् भक्तिप्रभवाय ॥ १० ॥

पुराणेति॥ बहु वदतीति। तथाच माघमाहात्म्यवचनम्—'अहो विमुक्तः प्रेतत्वाद्वेणीपानीयविन्दुभिः। ब्रह्मापि नैव शक्तो हि मन्ये वक्तुमपां गुणान्॥ गङ्गायास्तन्महादेवो धत्ते वै कथमन्यथा। अचिन्त्यशक्ति गङ्गाम्भः तिलमात्रन्तु यः पिवेत्॥ देवो भवेत्स सिद्धो वा गर्भस्थो न पुनर्भवेत्। न गङ्गासदृशी सिद्धिर्न गङ्गासदृशी मृजा॥ न गङ्गासदृशी मुक्तिर्गङ्गा सर्वाधिका मता।' इति। नारदीयवचनमपि, 'मेरोस्सुवर्णस्य च सर्वरत्नैः संख्योपलानामुदकस्य वापि। गङ्गाजलानान्न तु शक्तिरस्ति वक्तुं गुणाख्यापरिमाणमत्र॥' इति। वेदोदितमनु वेदोक्तमनुसृत्य। 'इरावतीं मधुमतीं पयस्विनीममृतरूपामूर्जस्वतीं त्रिदिवप्रसूतां गङ्गां श्रितासमिदिवं व्रजन्ति। ऋषिजुष्टां विष्णुपदीं पुराणां सुपुण्यधरां मनसा हि लोके सर्वात्मना जाह्नवीं ये प्रपन्नास्ते ब्रह्मणः सदनं सम्प्रयान्ति। लोकानि

निभाते स्नानामस्तुतिनिगदमुच्चैः प्रपठता
जनाना स्नानार्थं सुरतटिनि तीरं श्रितवताम्।
निरस्तास्पृश्यत्व पुनरपि महासम्भ्रममहो
कदाऽहं पश्येय त्वयि निरुपमप्रेमलसितम् ॥ १२ ॥

व्यतनुत मदभङ्ग भैरवाद्यैर्निजाशै-
र्नलिनभवमुखाना क्रुध्यता यस्सलीलम्।
अजिनवसनमेन कूर्मकोलास्थिशृङ्ग-
प्रमुखकृतविभूष रुद्रमीडेऽनिमुक्ते ॥ १३ ॥

इति गङ्गातरङ्गिण्या पञ्चमस्तरङ्ग ।

---

मानयति या जननीव पुत्रान् स्वर्गं सदा सर्वगुणोपपन्ना। स्थानमिष्ट ब्राह्म मभीप्समानैर्गङ्गा सदैवात्मवशैरुपास्या। उत्तैर्जुष्टामिषतीं विश्वरूपामिरावती जनयित्रीं गुह्यस्य शिष्टैस्सेव्याम् अमृता ब्रह्मकान्ता गङ्गा श्रयेदात्मविशुद्धिकाम।' इत्यादि सामावत्यनुसारेणेति यावत्। अत्रेय व्याख्या—गङ्गा श्रितास आश्रिता इत्यर्थ। मृतास इति पाठे गङ्गाया मृतास्सन्त त्रिदिव सुखात्मक कैवल्य व्रजन्तीत्यर्थ। तथाचोक्तम्—'गङ्गायाञ्च जले मोक्षम्' इति। इरावत्यादय पञ्च नदीप्रभेद' तदात्मिकाम्। ब्रह्मण सदन वैकुण्ठम्। उभैर्देवै, तेजोमयत्वात्। इषतीम् इच्छतीं इच्छा कुर्वतीमित्यर्थ। इरावतीम् इरा भूवागाद्या। तद्वतीं ब्रह्मकान्ता ब्राह्मणाना कमनीयाम् अभिलषिताम्, सावित्रीरूपा वा इति। यत्किञ्चित् अस्य त्वमेव। तत् माहात्म्यम्। का नाम न कोपीत्यर्थ। अत्र हेतु सम्बुद्ध्या दर्शयति—परेति ॥ ११ ॥

निभात इति। निरस्तास्पृश्यत्व निरस्तम् अस्पृश्यत्व अस्पृश्यताबुद्धिर्येन तमिति सम्भ्रमविशेषणम्। अय नीचजातीय न स्प्रष्टव्य इति बुद्धिर्जनाना तदा नास्तीत्यर्थ। निरुपमेति। निरुपमस्य प्रेम्णो भक्तिरूपस्य लसित प्रकाश रूपमित्यर्थ ॥ १२ ॥

व्यतनुतेति ॥ भैरवाद्यैरिति। आदिपदेन शरभवीरभद्रादीना ग्रहणम्। निजाशै स्वावतारै। नलिनभवमुखाना ब्रह्मविष्णुपुरन्दरादीनाम्। ब्रह्मण पञ्चम

शिगे भरवेण छेदयित्वा तस्य मदमहरत्। हिरण्यकशिपार्वधानन्तरमप्रशान्तकोपो नहरि बहूनि क्रूरकर्माण्याचरन्नवर्तत। तदवलेप शरभेणोपसञ्जहार। एव दक्षाध्वरे पुरन्दरादिसकलदेवावलेप वीरभद्रेण प्राशमयत्। इमाश्च कथा पुराणादि प्रसिद्धा। अजिनेति। भगवता दारुकावनस्थमुनिकृताभिचारात्पन्नव्याघ्रचर्मधारणात्। यथाक्त स्कान्दे — 'ततो व्याघ्रो महान् क्रुद्ध आजगाम नखायुध। तेषामृषीणा मर्मस्थ कोपोऽस्य निर्गता यथा॥ तच्चादाय त्वचो भित्वा तदा चर्माम्बरोऽभवत्। शुशुभे चर्मणा तेन नानावर्णयुतेन च॥ इति। अथवा, काश्या शिवभक्तजिघासयागतस्य गजासुरस्य कृत्तिरत्र विवक्षिता। यथाक्त तत्रैव— 'वाराणस्या पुरा यातो गजरूपा महासुर। तापसाञ्छिवभक्ताश्च निहन्तु कोप दीपित॥' इत्युपक्रम्य, 'हत्वा त कुञ्जर भीममधृष्य दिग्गजैरपि। पादहस्तयुत चर्म विशस्याच्छिद्य तेन वै॥ प्रावृत्यात्मानमालेश स्तूयमानाऽसिलैस्सुरै।' इति। पद्मे वाराणसीमाहात्म्येपि—'हत्वा गजाकृतिं दत्य शूलेनावज्ञया हर। वास स्तस्याकरोत् कृत्ति कृत्तिवासेश्वरस्तत॥' इति। कूर्मेत्यादि। प्रमुखशब्देन कपाल ग्रहणम्। कूर्मावतारमुपसहृत्य तदीयास्थिधारणम्, वराहावतारमुपसहृत्य तदीयशृङ्ग धारणम्, स्वय नीतानन्तकल्पेषु पितामहानुपसहृत्य तदीयकपालमालाधारणञ्चापि पुराणादिप्रसिद्धमेव। अनेन परमेश्वरस्य सर्वतो बलवत्तरत्वमनितरग स्पष्टीकृतम्। रुद्रमिति। तापत्रयात्मक ससारदुःखम्, दुःखहेतुरज्ञान वा रुत्। रुद द्राव यतीति रुद्र। पृषोदरादित्वात्साधु। यथोक्त वायुसहितायाम्—रुद्दुःख दुःखहेतुर्वा तद्द्रावयति य प्रभु। रुद्र इत्युच्यते सद्भिश्शिव परमकारणम्॥' इति अथवा, रोदितीति रुद्र, ब्रह्मण प्रीत्यर्थं तस्य ललाटादाविर्भूतस्य परमेश्वरस्य शशवाभिनयार्थं रोदनस्य भारते शान्तिपर्वणि प्रतिपादनात्। 'सृष्ट्यर्थं ब्रह्मण पुत्रो ललाटादुत्थित स्वयम्। अरुदत्सुस्वर घार जगत प्रभुरव्यय॥' इति। रुत्या वेदरूपया धर्मादीन् बाधयतीति वा रुद्र। रुत्या प्रणवरूपया स्वात्मान प्रापयतीति वा रुद्र। रुद्यमाण घारशब्द कुर्वाणा द्रवति प्रविशति मर्त्यानिति वा रुद्र। रुत् शब्द वेदात्मान कल्पादौ ब्रह्मणे ददातीति वा रुद्र, 'यो ब्रह्माण विदधाति पूर्वं यो वै वेदाश्च प्रहिणोति तस्मै' इति श्रुते। एवमादिभि प्रकारैर्बहुधा रुद्रशब्दश्शिवतत्त्वरहस्यादौ निरूपित। ईड इति। ईड्यता च श्रूयते— तमीशाना पुरुष देवमीड्यम्' इति॥ ॥१३॥

समुद्भूता विष्णोः पदसरसिजाज्जन्मशमनी
महीभेदान् प्राप्ता सुरतटिनि साहस्रकमुखी ।
त्रयीसाराधारा जयसि विमला शङ्करगुरो-
र्मुखाब्जादाचार्यान् भणितिरिव तत्त्वाद्वयपरा ॥ १ ॥

---

समुद्भूतेति ॥ जन्मशमनीति । तदुक्तं काशीखण्डे,'पयोपि यत्रत्यमचिन्त्य वैभवं दिवि स्थितैः साधु सुधाप्यते मुधा । तथा प्रसूतेस्तु पयोधरे पयो न पीयते पीतमिदं यदि क्वचित् ॥' इति । अत्र यत्रत्यमिति । काशीस्थमित्यर्थः । आप्यते पीयते । प्रसूतेर्मातु इति व्याख्या । भणितिरपि तथा बोध्या । त्रयी साराधारेति । त्रयीसारः श्रुतिरस एवाधार उपादानविधया अवलम्ब यस्या सा । यद्वा, त्रयीसारः श्रुतिप्रतिपाद्यश्शङ्करः आधारः यस्यास्सा । भणितिपक्षे उपनिषन्मूलेत्यर्थः । गङ्गायास्त्रयीसारोपादानकत्वमुक्तं काशीखण्डे—'श्रुत्यक्षराणि निश्चोत्य कारुण्याच्छम्भुना मुने । निर्मिता तद्द्रवैरेषा गङ्गा गङ्गाधरेण वै ॥ योगोपनिषदां सारमेतमाकृष्य शङ्करः । कृपया सर्वजन्तूनां चकार सरितां वराम् ॥ इति च अयमर्थः — श्रुत्यक्षराणीति । हे मुने श्रुत्यक्षराणि उपनिषदक्षराणि निश्चोत्य निष्पीड्य उपनिषदर्थं निश्चित्येति यावत् । तद्द्रवैः तेषामुपनिषदक्षराणां द्रवैः रसैः । तत्प्रतिपाद्यैर्ब्रह्मानन्दैरित्यर्थः । 'रसो वै सः, रसं ह्येवायं लब्ध्वा आनन्दीभवति' इति श्रुतेः । 'कारुण्याच्छम्भुना सर्वेषामानन्दकारणेन गङ्गाधरेण एषा गङ्गा विनिर्मितेत्यर्थः । एतदेवोपपादयति—योगोपनिषदामितीति । महीभेदान् भूभागविशेषान् प्राप्ता सती साहस्रकमुखी पतनकाले सहस्रमुखैर्विशिष्टापि तत्त्वाद्वयपरा तत्त्वतः वस्तुतः अद्वयः एकरससागर एव परं परायणं यस्यास्तथाभूता त्वं जयसीति सम्बन्धः । यथा शङ्करगुरोः श्रीमच्छङ्कराचार्यपूज्यपादानां मुखाब्जात् समुद्भूता जन्मशमनी त्रयीसाराधारा भणितिर्वेदान्तसूत्रभाष्यरूपा आचार्यान् 'चतुर्भिस्सह शिष्यैस्तु शङ्करोऽवतरिष्यति' इति वायुपुराणनिर्दिष्टान् पद्मपादत्रोटकहस्तामलकसुरेश्वराभिधान् प्राप्ता तैर्गृहीता सती साहस्रकमुखी जीवेश्वरादिविषये विविधव्याख्यारूपेण अनेका

अशक्य नैवास्ति त्रिभुवनसहस्राद्भुतकृति-
प्रगल्भाया मायापरिकलितदास्ये किमपि ते।
अकीर्तिस्ते माभूद्भवमहिषि पादाग्रपतित
गृहाणैतं दीन शरणरहितं द्राक्करुणया ॥ २ ॥

भवाम्भोधेः शश्वद्दुरितनिरतस्तारणमय
न खल्वर्हत्येनं सुरधुनि विधत्से यदि मतिम्।
तदा भूयोप्यास्तां जनिरपि तु मुख्या मम भवे-
दमुख्या वा भक्तिस्तव चरणयोस्तत्र नियतम् ॥ ३ ॥

---

वान्तरभेदवती अपि तत्त्व ब्रह्म एवाद्वयमेक पर परमतात्पर्यविषयो यस्यास्तथाभूता जयति। बिम्बप्रतिबिम्बभावादिभिरभेदाध्यवसायादुपमा ॥ १ ॥

अशक्यमिति ॥ त्रिभुवनेत्यादि ते इत्यस्य विशेषणम्। मायाया स्वाधीनत्व सम्बुद्ध्या दर्शयति—मायेति। मायया जडशक्तिरूपया परिकलित स्वीकृत दास्य यस्या इत्यर्थ। गृहाणेति। अग्रहणे दोष सूचयति—अकीर्तिस्ते माभूदिति। अग्रहणे सा अवश्य भवेदित्यर्थ। भवमहिषीति। सम्भावितानामकीर्तिलेशोपि दुःसह, 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' इत्युक्तेरिति भाव द्राक् क्षिप्रम् ॥ २ ॥

भवेति ॥ शश्वद्दुरितनिरत इति। ससारसमुद्रात्समुत्तारणानर्हत्वे हेतुगर्भमिदम्। मुख्या उत्तमा। अपुनर्भवदा भक्तिरिति यावत्। ससारतारणानर्हत्वे ससारतारकमुख्यभक्तेरप्यनर्हता। अत एव स्मर्यते—'भोगाय मन्दा कथिता सालोक्याप्त्यै च मध्यमा। अपुनर्भवदा भक्तिस्तमा दुर्लभा नृणाम्॥' इति। तथाच तत्प्रार्थनाया नैष्फल्य मन्वान आह—अमुख्या वेति। मन्दादिरूपा या काचिद्वेत्यर्थ। भक्ति सेवा, 'भज सेवायाम्' इति स्मरणात्। तथाच लिङ्गपुराणम्—'भज इत्येष वै धातु सेवाया परिकीर्तित। तस्मात् सेवा बुधै प्रोक्ता भक्तिशब्देन भूयसी॥' इति। कायेन मनसा वाचा वा निष्पाद्यो भजनीयस्य तुष्टिहेतुर्व्यापार भजमानपुरुषनिष्ठो भक्तिरिति यावत्। भक्तेर्विभागो भागवतादावुक्त—'श्रवणं कीर्तन विष्णो स्मरण पादसेवनम्। अर्चन वन्दन दास्य

समारब्ध यद्वा निखिलमिदमीय करुणया
शरीर पाथोभिर्जनिषु तव मृत्स्नाभिरथवा।
भवद्भक्तार्चैर्वा जननि भसितैस्तत्पदलग-
स्परागैर्वा भूतैरुत भवतु तल्लेशमिलितैः ॥ ४ ॥

भवत्तीर मुक्तेश्शरणमखिल पापशमन
तथाप्याहुर्भूयोमहिममणिकर्ण्यारव्यसरसा।
लसत्पुण्याख्यान ग्रथितमविमुक्त परतर
महेशो यस्याम्ब क्षणमपि वियोग न सहते ॥ ५ ॥

---

सख्यमात्मनिवेदनम् ॥ पुमाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा।' इति। तत्र जनिषु। नियतमिति क्रियाविशेषणम्। नियतत्व व्यापकत्वम्। तथाच सर्वासु जनिषु भक्ति स्यादित्यर्थ ॥ १३ ॥

'ज्ञात्वा कलियुग घोर गङ्गाभक्ति सुगोपिता' इति स्मरणात् परमेश्वर गोपिता ता कथमह दास्यामीत्याशङ्काया कल्पान्तरमाह—**समारब्धमिति** ॥ समारब्ध समुत्पन्नम्। पाथोभिरित्यादितृतीयान्तानामत्रान्वय। तवेत्यत्रापि सम्बध्यते। भवद्भक्तार्चै यथाविधि भवद्भक्तनिधृतै। सस्कारादिपूर्वक सम्पादितैरिति वा। तत्पदेति। भवद्भक्तपादेत्यर्थ। भूतै पञ्चभूतै। उतेति पक्षान्तरे। तल्लेश मिलितै तादृशावादीना लेशसयुक्तै ॥ ४ ॥

**भवदिति** ॥ अखिल भवत्तीरमिति योजना। मुक्ते शरण मुक्तिप्रद मित्यर्थ। तत्र हेतु —पापशमनमिति। आहु, पुराणादय इति शेष। भूयो महिमेति। भूयास महिमान यत्र तादृशेन मणिकर्ण्यारव्यसरसा मणिकर्णी इत्याख्या यस्य तादृशेन सरसा। मणिकर्णिकयेत्यर्थ। 'मणिकर्ण्या विधानत' इत्यादिस्मरणात मणिकर्णीत्यपि सज्ञा। इदञ्च लसदित्यत्र सम्बध्यते। महिमानश्चात्र निखिल तीर्थसेव्यत्वमुक्तिदाननिजकैङ्कर्यादय। तदुक्तम्—'समासाद्य च मद्भयाद्दमभियान्ति च नित्यश। सस्मात् सर्वतीर्थानि मुक्तिदा मणिकर्णिकाम् ॥' इति ॥ 'मुक्तिर्हि तत्किङ्करी' इति च। पुण्याख्यानमिति। पुण्य महापापनाशकम् आख्यान नाम यस्य तथाभूतम्। तदप्युक्तम्—'नामापि गृह्णत काश्या सदैवास्त्वेनस क्षय।'

उपःस्नातः श्वेतांशुकमसितरुद्राक्षरुचिभृ-
जपन् सूक्तं रौद्रं तव दरगरिष्ठोदरभृतैः ।
कदा तीर्थैरम्भ त्रिभुवनपतिं खण्डपरशुं
समासिच्यार्चेयं स्थिरतरमतिः श्रीफलदलैः ॥ ६ ॥

---

इति । अपि च, 'ब्रह्महत्यादिपापानि यस्या नाम्नोपि कीर्तनात् । त्यजन्ति पापिनं काशी सा केनेहोपमीयते ॥ वाराणसीति काशीति महामन्त्रमिमं जपन् । यावज्जीवं त्रिसन्ध्यं तु जन्तुर्जातु न जायते ॥' इत्यादि । प्रथितं स्वप्रापकापरपुण्यक्षेत्रादिकत्वादिना प्रसिद्धम् । तदुक्तं काशीखण्डे—'अन्यानि पुण्यक्षेत्राणि काशीप्राप्तिकराणि हि' इति । अविमुक्तमिति । अविमुक्तं काशी । तन्नाम निरुक्तं तत्रैव—'क्षेत्रे त्रिशूलिन् भवतोऽविमुक्ते विमुक्तिलक्ष्म्या न कदापि मुक्ते ।' इति । तत्र अविमुक्तनामनिर्वक्तिर्विमुक्तिलक्ष्म्येतीति तद्व्याख्या । परतरं सर्वतोप्युत्तमम् । तथाच भगवत्पादाः—'गङ्गातीरमनुत्तमं हि सकलं तत्रापि काश्युत्तमा तस्यां सा मणिकर्णिकोत्तमतमा यत्रेश्वरो मुक्तिद.' इति । काशीखण्डेपि, 'प्रयागतोपि तीर्थेशात् सर्वेषु भुवनेष्वपि । अनायासेन वै मुक्तिः काश्यां देहावसानतः ॥ प्रयागादपि वै रम्यमविमुक्तं न संशयः ॥' इति । परमेश्वरनिर्मितत्वेनाप्युत्कर्षः । तदप्युक्तं तत्रैव—'मया सृष्टानि विप्रेन्द्र भुवनानि चतुर्दश । अस्याः पुर्या विनिर्माता स्वयं विश्वेश्वरः प्रभुः ॥' इति । अपि च, ब्रह्मात्मरूपत्वादिनाप्युत्कर्षः ॥ तदप्युक्तं तत्रैव—'ब्रह्मात्मरूपा काशीयं दहेत् पापानि सर्वशः । दृष्टा स्पृष्टा स्मृता वापि किं पुनर्धर्मवासिनाम् ॥ संसारदावदहने पतितानां स्वकर्मभिः ॥ काश्येव शरणं नान्यत् मुक्तानामपि पार्वती ॥' इति, 'यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः । यथेश्वराणां गिरिशः स्थानानामेतदुत्तमम्' इति, 'वाराणस्याः वरं स्थानं न भूतं न भविष्यति । यत्र साक्षान्महादेवो देहान्ते स्वयमीश्वरः ॥ व्याचष्टे तारकं ब्रह्म तत्रैव ह्यविमुक्तके ।' इति, 'मुक्तिरेकेन जन्मना' इत्यादि च पुराणवचनमत्र द्रष्टव्यम् ॥ न सहत इति । तदुक्तं तत्रैव—'लभते स्म न शर्म शङ्करः प्रसरत्काशिवियोगजज्वरः' 'इत्यादि ॥ ५ ॥

**उपःस्नात इति ॥** श्वेतेत्यादि । असितवस्त्रधारणनिषेधात्, 'सितेन भस्मना कुर्यात्त्रिसन्ध्यं यस्त्रिपुण्ड्रकम् । सर्वपापविनिर्मुक्तश्शिवलोके महीयते' इति वचनात्, ब्राह्मणस्य श्वेतरुद्राक्षधारणस्यैव श्रुतत्वाच्च श्वैत्यं त्रिषु विशेषणम् । भस्मादिधारणं विना शिवपूजाया निष्फलत्वं लैङ्गे स्मर्यते—'विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । पूजि

सुधातः स्वादीयस्सुरतटिनि तीरैकवसति -
स्त्वदीयं पानीयं विमलमखिलार्तिप्रशमनम्।
प्रकामं पीत्वातिप्रमुदितमना भक्तनिवहैः
प्रगातु त्वन्नामान्यवमरमसौ प्राप्स्यति कदा ॥ ७ ॥

---

सोऽपि महादेवो न स्यात्तस्य फलप्रद ॥' इति दरवरिष्ठोदरधृते श्रेष्ठशङ्खान्त सम्भृतैं। श्रेष्ठयङ्ख शुप्रतिष्ठितत्वादिना। तदुक्त ब्रह्मोत्तरखण्डे—'सुप्रतिष्ठितशङ्खस्य तीर्थे पञ्चामृतैरपि अभिषिच्य महादेव रुद्रसूक्तैस्समाहित ॥' इति। खण्डपरशु, परान् शृणातीति परशु गजासुरवधे खण्डा परशवोस्येनि खण्डपरशुरिति टीकासर्वस्वे। खण्डयतीति खण्ड परशुर स्येति वाचस्पत्ये। समासिच्य सम्यगभिषिच्य। श्रीफलदलै बिल्वदलै। तेपा भगवत ऽतिप्रियत्वादिति भाव। तदुक्त बृहद्धर्मपुराणे—'शिव पुण्य शिवप्रिय' इति। 'यथा मे श्रीफलतरुर्यथा गङ्गाजल मम। तथा प्रियतम लक्ष्मि श्रीपत्र श्रीफलच्छद ॥' इति पुराण न्तरवचन च। अत्र श्रीपत्र पद्मम्। 'श्रीपर्णं पङ्कजेपि च' इति कोशात। बिल्वदळ र्पणफलन्तु शिवरहस्यादावुक्तम्—'बिल्वपत्रैस्तत्फलैर्वा भस्मना वा महच्छ्रियम् प्राप्नोति मुक्तिसाम्राज्यमपुनर्भवदायकम् ॥' इति। मलयाचलखण्डेपि, 'ब्रह्मन् बिल्वस्य माहात्म्य वर्णितु को नु शक्यते। असारभूते ससारे सारमेतच्चतुष्टयम्। गङ्गा च बिल्वपूजा च सत्सङ्ग शिवकीर्तनम् ॥' इत्यादि। 'बिल्वस्य यत आदित्य उ तिष्ठन् ततो बिल्व' 'तव वृक्षोऽथ बिल्व' इति श्रुतिभ्यामादित्यमादरत्व लक्ष्म वृक्षत्वञ्च सिद्धमित्यतोप्युत्कर्षातिशयो बोध्य। आदिपुरमाहात्म्येपि, 'पत्राणि च प्रस नानि यानि सन्ति दिवि क्षितौ। कोटिजन्मसु तैस्सर्वैरर्चिते मयि यत् फलम्। एकेन बिल्वपत्रेण प्राप्नुयादर्चक फलम्।' इति। विस्तरस्तु तत एवावगन्तव्य श्रीफलदलार्चनप्रकारादि पुरुषार्थचिन्तामण्यादौ प्रपञ्चित। काश्या लिङ्गार्चन प्रति नारदीयवचनम्—'गङ्गायान्तु नर स्नात्वा यो लिङ्ग नित्यमर्चयेत्। एकेन जन्मन मोक्ष पर प्राप्नोति स ध्रुवम् ॥' इति। इदमत्र बोध्यम् – बिल्वदळार्पण शिवपूजाय उत्तराङ्गमिति सर्वत्र शिवपूजाया परिपूर्णतासिद्धये बिल्वार्पण कार्यम्। यथोक्त पत्रालाभे शुष्कजीर्णपत्रम्, तस्याप्यलाभे तद्रज, तस्याप्यलाभे यत्किञ्चित् पुष्प गृहीत्वा बिल्वमिदमिति सङ्कल्प्यार्पणीयम्। स्पष्टञ्चेद मलयाचलखण्डे इति ॥ ६ ॥

सुधात इति ॥ सुधात अमृतात्। स्वादीय मधुरतरम्। भक्तनिवहै रिति सहार्थे तृतीया ॥ ७ ॥

कृतस्नानो भक्त्या दुरितहरमृत्तोयभसितैः
प्रशस्तैं रुद्राक्षैः कलितकवचस्साञ्जलिपुटः ।
त्वयीमुग्ये गङ्गे नरसखतनूजे कुरु दया--
मिति क्रोशन्नुच्चैस्तटभुवि वसेयं तव कदा ॥ ८ ॥

---

कृतस्नान इति ॥ कृतनित्यस्नान सन्नित्यर्थ । नित्यस्नानानन्तरमिति यावत्। दुरितहरमृत्तोयभसितैरित्यत्राप्येतत् सम्बध्यते। अत्र क्रमो विवक्षित । पूर्वं मृदा, ततो जलेन, अनन्तरं भस्मनेति। मृत्तिकायास्सर्वाघहरत्वादिक तैत्तिरीयास्समामनन्ति—'मृत्तिके हन मे पापं यन्मया दुष्कृत कृतम्। मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता। मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्। मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके। तया हतेन पापेन गच्छामि परमा गतिम्।' इति। अत्र भाष्यम्—तृतीयमन्त्रमाह—हे मृत्तिके प्रशस्तमृत् यन्मया दुष्कृतमकर्तव्यं पापं कृतं तत् हन विनाशय। किञ्च यतस्त्व ब्रह्मणा परमात्मना दत्ता भूमिरूपेण स्थापिता ब्रह्मदत्तासि। ननु मामेवाभिमन्त्र्य क स्नाति स्मेत्यत आह—काश्यपेन तदुपलक्षितै परमर्षिभि स्नानादिकाले अभिमन्त्रिता तद्दुष्कृतञ्च हतवत्यसि। अतश्शिष्टाचारप्राप्तत्वाद्वयमप्यभिमन्त्रयाम इति भाव । किञ्च मे मह्य पुष्टिं देहि। यत पृथिवीरूपायां त्वयि सर्वं चतुर्विध भूतजातं प्रतिष्ठितं वर्तते। अतस्त्वय्यधिष्ठिताय मह्य पुष्टिं देहीत्यर्थ । अनन्यपदेन सम्बुद्धिस्वयं भस्त्यतिशयप्रयोजनम्। चतुर्थमन्त्रमाह—प्रतिष्ठन्ति प्राणिनोऽस्यामिति प्रतिष्ठिता तत्सम्बुद्धौ हे प्रतिष्ठिते मृत्तिके मे मत्सम्बन्धि तत् प्रसिद्धं सर्वं पापं निर्णुद विनाशय। हे मृत्तिके तया प्रसिद्धया त्वया पापेन हतेन सता। सति तृतीया। पापे हते सतीत्यर्थ । परमा गतिमपवर्गं गच्छामीति। स्नानपूर्वकाले दक्षिणहस्ते गृहीताया मृत्तिकाया अभिमन्त्रणमन्त्रावेतौ। मृत्तिकाभिमन्त्रणानन्तरमन्यानपि सम्प्रार्थ्य आपादतल मृत्तिकोपलेप कार्य । इदमेव च मृत्तिकास्नानमिति ध्येयम्। मृत्तिकास्नानप्रकार शिवार्चनाचन्द्रिकाया सविस्तर प्रतिपादित । बृहज्जाबालोपनिषदि भस्मसम्पादनोद्धूलनत्रिपुण्ड्रधारणादिविधानानन्तर श्रूयते—'तेनाधीत श्रुतं तेन तेन सर्वमनुष्ठितम्। येन विप्रेण शिरसि त्रिपुण्ड्र भस्मना धृतम्॥' इति। 'ये भस्मधारणं त्यक्त्वा कर्म कुर्वन्ति मानवा । तेषा

नास्ति निर्मोक्ष ससाराज्जन्मकोटिभि ॥ येषा कोपां भवेद्ब्रह्मन् ललाटे भस्म दर्शनात्। तेषामुत्पत्तिसाङ्कर्यमनुमेय विपश्चिता॥ धिक् भस्मरहित फाल धिग्ग्राम मशिवालयम्। धिगशिवार्चन जन्म धिग्विद्यामशिवाश्रयाम् ॥' इत्यादि पुराणवच नञ्च बोध्यम्। भस्मावलेप आग्नेयस्नानतया स्मृत। तथाच पराशर —'स्ना नानि पञ्च पुण्यानि कीर्तितानि महर्षिभि। आग्नेय वारुण ब्राह्म वायव्य दिव्य मेव च॥ आग्नेय भस्मना स्नानमवगाह्य तु वारुणम्। आपोहिष्ठेति च ब्राह्म वायव्य गोरज स्मृतम्॥ यत्तु सातपवर्षेण, तत्स्नान दिव्यमुच्यते। अत्र स्ना तस्तु गङ्गाया स्नातो भवति मानव ॥' इति। प्रशस्तैरित्यादि। रुद्रस्याक्षिभ्य सोमसूर्याग्निरूपेभ्यस्त्रिपुरसहारायाघोरास्त्ररूपेण जातत्वाद्रुद्राक्ष इति लोकाक्षि। कल्पित कवच इत्युक्त्या सर्वाङ्गेषु रुद्राक्षधारण प्रतीयते। तथाच सर्वाङ्गेषु मृत्युतारक नामप्रशस्तरुद्राक्षधारीति समुदितार्थ। 'नाभेरधोपि बध्नीयाद्रुद्राक्ष चरणावधि ॥ इति स्कान्दोक्ते सर्वाङ्गेषु धार्यता। त्रिसहस्त्ररुद्राक्षान् त्रिवर्षाणि धृत्वा साक्षाद्रुद्रो भवतीत्युपदिश्य श्रूयते च—'तस्मान्मृत्युतारक गुरुणा लब्ध रुद्राक्ष कण्ठे शिरसि बाह्वोर्वा निबध्नीत। तस्य सप्तद्वीपवती भूमिर्दक्षिणार्थं न कल्पते। तस्माद्या काञ्चिद्गा दद्यात्सा दक्षिणा भवति' इति। इदमत्र बोध्यम्— रुद्राक्षधारणमपि भस्म धारणवत् शिवपूजाया नित्यमिति पूर्वोक्तमनुसन्धेयम्। रुद्राक्षश्च ब्राह्मणादिभि क्रमेण श्वेतरक्तपीतकृष्णवर्ण आह्यम्। उक्तवर्णालाभे ब्राह्मणे इतरवर्णमपि धारणीयम्। रक्तादिवर्णत्रय क्षत्रियै, पीतादिद्वय वैश्ये, शूद्रैस्तु कृष्णमेव धार्यम्। परन्तु सूतकमृतकस्त्रीसङ्गतिमलमूत्रविसर्जनमासलशुनादिभक्षणसमयेषु मूर्धभुजकण्ठकर्णव्यतिरि क्ताङ्गेषु तद्धारण वर्ज्यम्। स्पष्टञ्चैतत् शिवार्चनाचन्द्रिकायाम्। गरुडाचारखण्डे तु पञ्चदशाध्याये, 'शुचिर्वाप्यशुचिर्वापि अभक्ष्यस्यापि भक्षक। म्लेच्छो वाप्यथ चण्डालो युक्तो वा सर्वपातकै ॥ रुद्राक्षधारणादेव स रुद्रो नात्र सशय। अमन्त्रधारणादेव गुणा एते प्रकीर्तिता ॥ य पुनर्मन्त्रसयुक्त धारयेद्यदि मानव। गुणाना तस्य माहात्म्य कथितु नैव शक्यते॥' इत्यपि दृश्यते। भस्मरुद्राक्षधारणयोर्माहात्म्यमादिपुरमाहत्म्येपि प्रपञ्चितम्। त्रयीमुख्ये इति। गङ्गाया आदिवेदरूपत्वात्। तथाच स्मर्यते—'ऋग्वेदमूर्तिर्गङ्गा स्यात् यमुना च यजुर्ध्रुवा। नर्मदा साममूर्तिस्तु स्यादथर्वा सरस्वती॥' इति। नरसखतनूजे इति। नर

प्रदीपानातोयं दृढघटितसोपानततिषु
प्रदीप्तान् विन्यस्य स्थिरतरमना जाह्नवि कदा ।
सवित्रीं कामानां पुलकिततनुर्दीनशरणं
समर्चान्युन्निद्रैः प्रियतरसुमैरत्र भवतीम् ॥ ॥ ९ ॥

कदा वा पश्येयं नवविकचपङ्केरुहभृत-
स्तरङ्गान् भूयोऽहं तव दलितजीमूतनिवहान् ।
पदाम्भोजे पूजां बलिविजयिनः सत्यनिलये
विधातुं प्रोत्क्षिप्तानमरधुनि बाहूनिव रसात् ॥ १० ॥

---

खस्य मुनेर्नारायणस्य शरीरोद्भूते इत्यर्थः। गङ्गाया नारायणसव्यकरोद्भूतत्वं वामनपुराणे द्वितीयाध्याये भगवता महेश्वरेण ब्रह्महत्यानिवृत्त्युपायं पृष्टस्य नारायणस्य वचनानन्तरं स्मर्यते —'नारायणवचः श्रुत्वा त्रिशूलेन महेश्वरः । सव्यं नारायणभुजं ताडयामास वेगवान् ॥ त्रिशूलाभिहतान्मार्गात् तिस्रो धारा विनिर्ययुः । एका गगनमाश्रित्य स्थिता ताराभिमण्डितम् ॥ द्वितीया न्यपतद्भूमौ तां जग्राह तपोधनः । अत्रिर्यस्मात्समुद्भूतो दुर्वासाश्शङ्करांशतः ॥ तृतीया न्यपतद्धारा कपाले रौद्रदर्शने ।' इत्यादि । इह कपाले इत्यस्य महेश्वरकरस्थिते ब्रह्मकपाले इत्यर्थः । पाद्मेपीयं कथा वर्तते। अत्र चिन्ताख्यो भावो व्यज्यते ॥ ८ ॥

प्रदीपानिति ॥ आतोयं तोयपर्यन्तम्। सवित्री जनयित्रीम्। गङ्गायाः सर्वकामसवित्रीत्वं निखिलदेवार्चनायास्तत्समर्चान्तर्भूतत्वादपि बोध्यम्। तथा च मुनिप्यवचनम् — 'पूजितायाञ्च गङ्गायां पूजितास्सर्वदेवताः । तस्मात्सर्वप्रयत्नेन पूजयेदमरापगाम् ॥' इति । दीनशरणं दीनानां महापातकिनामपि शरणं रक्षित्रीम्' [illegible]पुनदी दीनशरणं देहि देहनिवारिणी' इति स्मरणात् । किञ्च 'मातापि सन्त्यजेत् पुत्रं ब्रह्महत्यादिकारिणम् । त्वं पुनर्गर्हितं मत्र्यं [illegible] दीनवत्सले ॥' इति । उन्निद्रैः विकसितैः । प्रियतरसुमैः धत्तूरादिकुसुमैः । [illegible]प्रिये' इति 'कदम्बकुसुमप्रिये' इति च स्मरणात् । अत्रभवतीं [illegible] ॥ ९ ॥

कदेति ॥ पङ्केरुहभृत इति । भक्तैः पद्मादि[illegible] भावः । [illegible] पूजोपकरणसम्पत्तिर्दर्शिता। दलितजीमूतनिवहानिति। [illegible]

प्रवातप्रोद्गच्छद्विपुलतरकल्लोलनिवह-
प्रवाहप्रक्षोभप्रसरदतिरम्यारवभरैः।
कदा ते नृत्यन्त्या हरशिरसि रुद्धान्यनिनदै-
र्यियासुर्मूढात्मा पुनरयि पुनीयां श्रुतिपुटम् ॥ ११ ॥

---

दर्शितम्। बलिविजयिन इति। अनेन बलिजयसमये स्वोत्पत्तिस्थानत्वात् पदाम्भोजस्य विशेषतो भजनीयत्वं द्योत्यते। सत्यनिलये ब्रह्मलोकस्थिते। पदाम्भोज विशेषणमेतत्, 'यस्मात् दातं तोयम्' इति स्मरणात्। प्रोत्क्षिप्तान् उन्नमितान्। रसात् भक्त्या ॥ १० ॥

प्रवातेति ॥ प्रवातेन प्रकृष्टवातेन प्रोद्गच्छन् विपुलतरकल्लोलनिवहो यत्र तथाभूतात् प्रवाहप्रक्षोभात् प्रक्षुब्धप्रवाहात् प्रसरतां समुद्भूतानाम् अतिरम्यारवाणां भरैरतिशयैरित्यर्थः। रुद्धान्यनिनदैः रुद्धाः प्रतिहताः अन्यनिनदाः शब्दान्तराणि यैस्तैरित्यनेन शब्दान्तरश्रवणेन श्रोत्रस्य न मालिन्यप्रसक्तिरिति सूच्यते। मूढात्मेति। मौढ्याभावे देशान्तरगमनस्यैवाप्रसक्त्या नैतच्चिन्तावकाश इति भावः। उक्तञ्च—'कः काशीं प्राप्य दुर्बुद्धिरपरत्र यियासति। मोक्षनिक्षेपकलशीं तुच्छश्रीकृतमानसः॥' इति, 'वाराणसीह वरणासि सरिद्वरिष्ठा सम्भेदभेदजननी द्युनदी लसच्छ्रीः। विश्रामभूमिरचलामलमोक्षलक्ष्म्या हैनां विहाय किमु सीदति मूढजन्तु.' इति च। वाराणसीति। इह संसारे वाराणस्यस्ति। ह स्फुटम्। तामिमां विहाय मूढजन्तुः, उ वितर्के, किं सीदति गच्छति, अवसीदति वा। विहायागमने हेतुगर्भाणि विशेषणान्याह—वरणासीसरिद्भ्यां दक्षिणोत्तरतः सीमरूपाभ्यां वरिष्ठा श्रेष्ठा। तथा चोक्तम्—'असीवरणयोर्मध्ये पञ्चक्रोशं महत्तरम्। देवा मरणमिच्छन्ति का कथा इतरे जनाः॥' इति। सम्यग्भेदः सम्भेदः, भेदबुद्धिरिति यावत्। तत्खेदस्य तन्नाशस्य जननी कर्त्रीत्यर्थः। यद्वा, सम्भेदो वियोगः अर्थात् गङ्गायाः तस्मिन् खेदस्य जननीत्यर्थः। दमनीति वा पाठः। सम्भेदेन भेदबुद्ध्या यः खेदः संसारतापः तस्य दमनी नाशिनीत्यर्थः। एकपद्यपाठे, वरिष्ठो दृढो यः सम्भेदः तस्येत्यादि पूर्ववत्। यद्वा, वरिष्ठो यः सम्भेदः सङ्गमः तेन खेदजननी। पापस्य संसारस्य वा इत्यर्थात्। द्युनद्या गङ्गया लसन्ती श्रीर्यस्यास्सा तथेति। अमलाया मोक्षलक्ष्म्याः विश्रामभूमिः विश्रमस्थानम्। मोक्षलक्ष्म्या अमलत्वं नाम स्वप्रका

पिबन्नम्भः शृण्वन् मधुरमधुरं निर्झररवं
स्पृशन् जिघ्रन्मातस्तव सुरभिकल्लोलपवनम्।
प्रपश्यन् कादम्बै रुचिरमपि रूपं तव परं
स्मरन् सान्द्रानन्दं विविधमिह लप्स्ये वद कदा ॥ १२ ॥

विगतविकृतिजातं भासकं भासकाना—
मनुगतमखिलेषु स्वप्रकाशं विशुद्धम्।
करणविलयसिद्धं साक्षि तेजस्तमो मे
हरतु हृदयदस्रं काशिकानित्यदीप्रम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां षष्ठस्तरङ्गः ॥

---

त्वम्। अचला प्रळयेऽपि नाशरहिता इति तद्व्याख्या। 'दैनन्दिनेऽथ प्रळये' इति तत्रैव वक्ष्यमाणत्वात् काश्या अचलत्वं बोध्यम् ॥ ११ ॥

पिबन्निति ॥ मधुरमधुरमित्यम्भस्यप्यन्वेति। सुरभीति। सुरभि यः कल्लोलपवनः तमिति स्पर्शने घ्राणने च कर्म। सौरभ्यं भक्तार्पितकल्लोलगतप्रसून सम्पर्कात्। कल्लोलसम्बन्धोक्त्या शैत्यञ्च स्पष्टम्। कादम्बैः नीलहंसैः रुचिरं विजातीयवर्णव्यतिकरविराजमानम्। कादम्बानां नैल्यं रघुवंशे त्रयोदशसर्गे 'क्वचित् खगानां प्रियमानसानां कादम्बसंसर्गवतीव पङ्क्तिः' इत्यत्र स्पष्टम्। विशेष णैष्पडिन्द्रियाणां गङ्गासम्बन्धिनो विषया उक्ताः। परं प्राकृतादप्युत्कृष्टं दिव्यं रूपं स्मरन्निति योजना। इह अस्मिंस्तीरे, ॥ १२ ॥

विगतेति ॥ विगतविकृतिजातं निर्विकारम्। 'कूटवन्निर्विकारेण स्थितः कूटस्थ उच्यते' इति पञ्चदश्युक्तलक्षणं कूटस्थमिति यावत्, सविकारस्य साक्षित्वा नभ्युपगमात्। तदुक्तं बिन्दौ—'एकस्य कूटस्थस्यैव सर्वसाक्षित्वात्' इति। अत्र व्याख्या—एकस्य सर्वानुस्यूतस्य कूटस्थस्येति। स्वसमानसत्ताकं रूपान्तरमापद्यते यस्तदन्यस्येत्यर्थ इति। भासकाना सूर्यादीनामपि, 'तमेव भान्तमनुभाति सर्वं यस्य भासा सर्वमिदं विभाति' इति, 'येनेदं सर्वं विजानाति तं केन विजानी यात् विज्ञातारमरे केन विजानीयात्' इति च श्रुतेः, 'यद्भासा भासतेऽर्कादि' इति स्मृतेश्च। द्वितीयश्रुतेरयमर्थः—येन साक्षिचैतन्यरूपेणात्मना इदं सर्वं दृश्य जातं विजानाति प्राणी, तं साक्षिणमात्मानं केनान्येन साक्ष्यभूतेन जडेन विजा

उच्चैःस्थानादुदितमगजे नाशक पातकानां
चिन्तारत्नं किमपि भवती भूपण चन्द्रमौलेः ।
देशे देशे स्वयमभिसरत् प्रार्थनानिर्व्यपेक्ष
सर्वान् कामान् प्रदिशदमृतप्रापकोधत्प्रकाशम् ॥ ॥ १ ॥

---

नीयात्। पुमानिति शेष । अस्यैव वाक्यस्य स्वय तात्पर्यमाह—विज्ञातारमि त्यादीति। अखिलेषु अनुगतम् अधिष्ठानविधया निखिलवस्तुसत्ताप्रदम्। स्वप्रकाश मिति। भासकान्तरापेक्षायामनवस्थानप्रसङ्गादिति भाव । आत्मन स्वप्रकाशत्वञ्च 'स वेत्ति वेद्य न च तस्यास्ति वेत्ता अन्यदेवैतद्विदितादथो अविदितादधि' इति श्रुति सिद्धम्। विशुद्धम् आवरणादिविहीनम्। इदञ्च स्वप्रकाशत्वे हेतु । यद्वा, पञ्चदश्युक्त रीत्या स्वप्रकाशत्वमेवानावृतत्वे हेतु । तथाच तत्रोक्तम्—'स्वप्रकाशे कुतो विद्या ता विना कथमावृति ' इति। तत्रैव व्याख्या—भवन्मते आत्मन स्वप्रकाशत्वात् तस्मिन्न विद्या नोपपद्यते, तेजस्तिमिरयोरिव विरुद्धस्वभावत्वेन तयोस्सम्बन्धानुपपत्ते । अविद्या भावे च तत्कृतमावरण दुर्निरूप्य स्यादिति। करणेति। करणविलय सुषुप्ति तत्र सिद्धमवबुद्धम्। उत्थानानन्तर सुखमहमस्वाप्स, न किञ्चिदवेदिप मिति स्मृत्यन्यथानुपपत्त्या सुषुप्तावज्ञानाद्यनुभवस्यावश्य कल्पनीयत्वादित्याशय । तदुक्तं पञ्चदश्याम्—'सुप्तोत्थितस्य सौषुप्ततमोबोधो भवेत्स्मृति । सा चावबुद्धविषयाव बुद्धन्तत्तदा तम ' इति। सिद्धान्तबिन्दावपि, 'आत्मन सुषुप्तिसाक्षित्वान्न तत्र तदभाव , अन्यथा मूढोऽहमासमिति परामर्शानुपपत्ते ' इति। साक्षीति। 'कूटवन्निर्विकारा चित्सर्वदृश्यविभासिका । अनुस्यूता च सर्वेषु साक्षिणी समुदा हृता ॥' इत्युक्तलक्षणम्। साक्षात् अव्यवधानेन पश्यति सर्वमिति साक्षी। 'साक्षा द्द्रष्टरि सञ्ज्ञायाम् ' इतीन्। 'कर्माध्यक्षस्सर्वभूताधिवास साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुत्या, 'अतस्साक्षी शिव साम्ब स्वप्रकाशैकलक्षण । तेन सर्वमिद गम्य गम कोऽसौ न गम्यते' ॥ इत्यादिस्मृत्या च ईश्वरस्यैव साक्षित्वं प्रतिपादितम् ॥ १३ ॥

उच्चैरिति। उच्चै स्थानात्, न तु नीचै स्थानात् समुद्रकुहरात्। उच्चै स्थानादितत्वमेव सम्बुद्धया दर्शयति— अगजे इति। किमपि प्रसिद्धाद्व्यतिरिक्तम्।

कामारातेर्हृदयमकरो धैर्यसिन्धावगाधे
गाढं मग्नो हिमधरसुते कामकैवर्तकेन।
आवध्य त्वत्कुवलयरुचिस्पर्धिनेत्रान्तलीला-
जालेन द्राङ्निजवशमहो नीयते विस्तृतेन ॥ २ ॥

वीक्षालक्ष्मीस्त्रिभुवनपतेर्लोकरक्षैकदीक्षा
यातायाते ननु विदधतीं रागलज्जाप्रणुन्नाम्।
आरुह्याम्बारमति सततं तावकापाङ्गदोळां
लीलालोला शरणमधुना कं प्रयाति त्रिलोकी ॥ ३ ॥

---

देशे देशे इति। चिन्तारत्नं तु स्वदेशस्थितमुपागतेभ्यः प्रार्थ्यमानं सत् कांश्चित् कामानेव सुखसाधनान्येव ददाति, न तु सुखस्वरूपां मुक्तिमित्यर्थः। अमृतेति। अमृतस्य सुधाया मोक्षस्य च प्रापकं च तत् उद्यन् प्रवृद्धः प्रकाशो यस्य तच्च इत्यर्थः। यद्वा, उद्यन् प्रकाशः उद्यत्प्रकाशः अपरोक्षदर्शनम्, अमृतप्रापकः उद्यत्प्रकाशो यस्य तत्। तथाच गङ्गाप्रत्यक्षं स्वर्गापवर्गप्रापकमिति यावत्। अधिकताद्रूप्यं रूपकम्। अस्मिन्नुत्तरस्मिंश्च तरङ्गे मन्दाक्रान्तावृत्तम्॥ ॥ १ ॥

कामारातेरिति॥ हृदयमकरः हृदयमेव मकरः। धैर्यसिन्धौ धैर्यमेव सिन्धुः तस्मिन्। कामकैवर्तकेन काम एव कैवर्तको धीवरस्तेन। लीलाजालेन लीला विलास एव जालम् आनायस्तेन। विस्तृतेन विस्तारितेन ॥ २ ॥

वीक्षालक्ष्मीरिति॥ वीक्षालक्ष्मीरालोकनश्रीः। त्रिभुवनपतेः तादृशस्य परमेश्वरस्य। लोकरक्षैकदीक्षा लोकरक्षैव एका मुख्या दीक्षा यस्यास्सा। लोकरक्षाविधात्रीत्यर्थः। यातायाते यातमायातञ्च। नन्विति सम्बोधने। विदधतीं कुर्वतीम्। अत्र हेतुमाह—रागलज्जाप्रणुन्नामिति। रागेण लज्जया च प्रणुन्नां प्रेरितामित्यर्थः। रागेण पुरोनयनम्। लज्जया पश्चान्नयनमिति बोध्यम्। आरमतीति। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। तावकेति। अपाङ्ग एव दोळेति रूपकम्। प्रयातीति। इदानीं भगवद्दृष्टिपातानां प्रपञ्चपालनादन्यत्रैव संरूढकौतूहलतया ततो विश्वरक्षाया दुर्लभत्वादिति भावः ॥ ३ ॥

पीनोत्तुङ्गस्तनतटलसच्छुभ्रपट्टायमाना-
मीशप्राणप्रणयिनि भवन्मञ्जुमन्दस्मिताभाम्।
ज्योत्स्नां मन्ये नयनकुमुदोल्लासमेषा पुरारे-
राधत्ते हि प्रसवशरभूर्नन्दयन्ती समस्तम् ॥ ४ ॥

चेतःक्षेत्रे वपति सुकृती त्वत्पदाम्भोजबीजं
श्रेष्ठं शास्त्रप्रमुखकलनालाङ्गलप्राप्तसाम्ये।
काले सिक्ते त्रिदशविनुते भक्तिपीयूषवर्षैः
संवित्सस्यप्रभवमधिकं भावयन् कर्षकाग्र्यः ॥ ५ ॥

संसाराख्ये प्रबलदुरितोच्चण्डचण्डांशुतप्ते
गच्छन् व्यापद्विषममरुभूदुर्गमाध्वन्यजस्रम्।
सन्तप्तोऽहं विषयमृगतृष्णाकुलस्त्वत्पदाब्ज-
छायादन्यत् किमपि शरणं जह्नुकन्ये न मन्ये ॥ ६ ॥

---

पीनेति॥ पीनोत्तुङ्गस्तनतटलसन् यः शुभ्रपट्टः तद्वदाचरन्तीम्। तत्त्वे नीत्वेक्ष्यमाणामिति यावत्। मन्दस्मिता भायाः स्तनतटाभिव्याप्तिरुत्प्रेक्षाहेतुः। मन्दस्मिताभां ज्योत्स्नां मन्ये इत्युत्प्रेक्षा। कुत इत्याह—नयनेत्यादि। एषा मन्दस्मिताभा। प्रसवशरभूः प्रसवशरस्य पुष्पेषोर्भूरुत्पत्तिस्थानम्। कामसंवर्धिनीति यावत् ॥ ४ ॥

चेत इति॥ चेतःक्षेत्रे चेत एव क्षेत्रं तस्मिन्। सुकृती एव कर्षकाग्र्यः वपतीति सम्बन्धः। रूपकम्। शास्त्रप्रमुखेति। शास्त्रप्रमुखस्य वेदपुराणादेः कलना स्मरणमेव लाङ्गलं हलं तत्क्रियेत्यर्थः। तेन प्राप्तसाम्ये सञ्जातसमावस्थे इत्यर्थः। चेतसः साम्यं समभावना, रागद्वेषादिराहित्यं वा। काले सुकृतपरिपाककाले, पक्षे बीजावापाद्युचितकाले। संविदिति। संवित् ज्ञानं तदेव सस्यं तस्य प्रभवः उत्पत्तिः तम्। भावयन् चिन्तयन्। तत्कामनयेति यावत्। शास्त्रस्मरणकलनया विगतवैषम्ये मनसि भक्त्या त्वत्पदध्यानेन सुकृतिनां ब्रह्मप्रकाशो जायत इत्यर्थः। कर्षकाग्र्यः कृषीवलश्रेष्ठः। श्रैष्ठ्यञ्च बहुविधाश्चर्यकरदोहळनिर्माणादिचातुर्यम् ॥ ५ ॥

संसारेति॥ प्रबलेति। प्रबलं दुरितमेव उच्चण्डः कठोरः चण्डांशुः सूर्यः तेन तप्ते इत्यर्थः। व्यापदिति। व्यापद्भिर्विषमो यो मरुभूदुर्गमाध्वा मरु

चित्तारण्ये विचरति भवद्भक्तिकासारलक्ष्मी-
मुन्मथ्यालं प्रकृतिचपलो जाड्यहस्ती मदीये ।
एनं दूरं गमय तरसा तीक्ष्णनेत्रान्तबाणैः
साधुष्वेव त्रिदशमहिते साम्प्रतं सूरतत्वम् ॥ ७ ॥

वेलातीतप्रसृमरपरीवाहकारुण्यसारैः
सद्यः फुल्लजलजसुषमाप्रौढिधिक्कारदक्षैः ।
लीलालक्ष्मीविहृतिसदनैर्दीनदीनं सकृन्मां
गङ्गे मातः स्नपय विबुधप्रार्थनीयैरपाङ्गैः ॥ ८ ॥

---

भूरूपो दुर्गममार्गस्तस्मिन्नित्यर्थः। विषयमृगतृष्णाकुलः विषय एव मृगतृष्णिका तया इतस्ततो भ्रमणेनातिखिन्नः। त्वत्पदाब्जच्छायादिति। 'विभाषा सेना सुरा छाया' इत्यादिना क्लीबत्वम्। अब्जेत्युक्त्या तृष्णाशमनोपायमधुरतरमाध्वीलाभोपि सूच्यते ॥ ६ ॥

चित्तेति ॥ चित्तारण्ये चित्तमेवारण्यं तस्मिन्। भवद्भक्तीति। भवद्भक्तिरेव कासारः पद्माकरः तस्य लक्ष्मीमित्यर्थः। जाड्यमज्ञानम्। अनाद्यविद्येति यावत्। तदेव हस्तीति रूपकम्। दूरं गमय अपसारय। तव जाड्यहरत्वादिति भावः। तदुक्तम्—'जाड्यविध्वंसनकरी जगद्योनिर्जलाविला' इति। नन्व साधवि मे चिरकालं सकुटुम्बोऽत्रैव वसन् मे दयापात्रम्, तत् कथमेनमपसारयामीति चेदाह—साधुष्विति। साम्प्रतं युक्तम्। सूरतत्वं दयालुत्वम्। 'स्याद्दयालुः कारुणिकः कृपालुस्सूरतस्समाः' इत्यमरः ॥ ७ ॥

वेलातीतेति ॥ वेलातीतः सन् प्रसृमरो व्याप्नुवन् परीवाहः प्रवाहो यस्य तादृशो यः कारुण्यस्य सारः प्रधानांशो येषां तैरित्यर्थः। सद्यः तदात्व एव। लीलेति। लीलालक्ष्म्या विलासशोभाया विहृतिसदनैः क्रीडागृहैः। श्रियो विहारस्थानैरित्यपि प्रतीयते। सकृत् सकृदपि। स्नपय। तावतैव सर्वदैन्यनिवृत्तिर्भवेदिति भावः ॥ ८ ॥

पादाब्जाते किसलयततिः कातरा वेपमाना
यातारण्यं कठिनतपसा मध्यतो दाववह्नेः।'
रुद्रावासप्रणयवति तन्मत्स्यचक्रादिरेखा
भूत्वा नित्यं श्रयति भजते चाश्रितत्राणदास्यम् ॥ ९ ॥

आम्नायाम्भोनिधिकुहरगं भूषणं शम्भुमूर्ध्नो
भ्राम्रा भूयो हसितशशभृद्देवि ते रूपरत्नम्।
दैत्यारातेश्चरणनिकषोल्लेखदेदीप्यमानं
मोहध्वान्ते मनसि गिरिजे भासतां मे क्षणार्धम् ॥ १० ॥

---

पादाब्जादिति॥ ते पादाब्जात् कातरा भीता। वेपमानेति। किसलयगतो वातादिजनितः कम्पो भयानुभावत्वेनाध्यवसितः, दावपरीते अरण्ये स्थितिस्तपस्त्वेन च। मध्यतो मध्ये। रुद्रावासेति। रुद्रावासः काशी तत्र प्रणयः तन्निवासाभिरुचिः, तद्वतीति सम्बुद्धिः। रुद्रे आवासः स्थितिः तत्र प्रणयवतीति वा। 'वाराणसीति काशीति रुद्रावास इति द्विजाः। महाश्मशानमित्येवं प्रोक्तमानन्दकाननम्॥' इति काशीखण्डे। तत् पादाब्जं श्रयतीति सम्बन्धः। मत्स्यचक्रादिरेखा इति। 'दण्डाङ्कुशौ चक्रचापौ श्रीवत्सं कुलिशं तथा। मत्स्यश्चैतानि चिह्नानि कल्प्यन्ते चक्रवर्तिनाम्॥' इति सामुद्रिकपरिगणिता इत्यर्थः। रेखा भूत्वा रेखात्वेन रूपान्तरं परिगृह्य। स्वरूपतः समाश्रयणे कातर्यात्सततसमाश्रयणा चेति भावः। श्रयतीति। शत्रोर्भीतानां गत्यन्तराभावे कथञ्चित्तत्समाश्रयणस्यैव युक्तत्वादिति भावः। आश्रितेति। गङ्गापदसम्बन्धितया रेखानामपि स्वाश्रिताभीष्टप्रदानसामर्थ्यं बोध्यम् ॥ ९ ॥

आम्नायेति॥ आम्नायाम्भोनिधिकुहरगं वेदनिगूढमित्यर्थः। रूपमेव रत्नमिति रूपकम्। दैत्यारातेः त्रिविक्रमस्य चरणेति। चरण एव निकषः शाणः तत्र उल्लेखेन देदीप्यमानं पूर्वाधिकप्रकाशमित्यर्थः। तत्पदासङ्गेन गङ्गायाः उत्कर्षातिशयात्। मोहध्वान्ते मोहः अज्ञानमेव ध्वान्तः अन्धकारो यत्र तस्मिन्। क्षणार्धं क्षणार्धमपि ॥ १० ॥

तुच्छानेतान् विविधविषयान् 'दूरतो दुःखमिश्रा-
नुज्झित्वा ते जननि कृपया' हंसवर्योपसेव्यम् ।
पादाम्भोजं स्मरहरशिरोलालितं मोक्षलक्ष्मी-
नित्यावासं श्रयतु सततं मन्मनश्चञ्चरीकः　　॥ ११ ॥

कारुण्यार्द्रः श्रितजनभवक्लेशशब्दासहिष्णुः
संसारार्तिं जननि शमयेत् किन्न मे दुर्निवाराम् ।
पद्मभ्रान्त्या भृशमभिपतन्मत्तपुष्पन्धयानां
सद्योलज्जाकरणनिपुणस्तावकीनः कटाक्षः　　॥ १२ ॥

मुनिसमुदयचेतःपेटिकासद्मरत्नं
श्रुतिमहितमहेलामौलिदेदीप्यमानम् ।
निरुपमनिजभासा भासिताशेषविश्वं
किमपि हृदि चकास्तात् काशिकाख्यानखानि　　॥ १३ ॥

इति गङ्गातरङ्गिण्यां सप्तमस्तरङ्गः ॥

---

तुच्छानिति ॥ तुच्छत्वञ्चालास्थिरत्वाल्पत्वादिना । एतान् अनुभूयमानान् विविधविषयान् । स्रक्चन्दनवनितादिरूपाण्युपभोगसाधनानि । दुःखमिश्रान् दुःखोदर्कानित्यर्थः । हंसेति । हंसवर्याः हंसा एव हंसाः तेषां वर्याः परमहंसा राजहंसाश्च, तैरुपसेव्यमित्यर्थः । मन्मनश्चञ्चरीकः मन्मन एव चञ्चरीकः भ्रमरः ॥ ११ ॥

कारुण्येति ॥ श्रितजनेति । भक्तानां भवक्लेशशब्दमप्यसहमान इत्यर्थः । तथाचायं विलम्बोऽनुचित इति भावः । पुष्पन्धयानां मधुपानां लज्जाकरणेति । स्वातिशायिकान्तिमत्त्वादिति भावः　　॥ १२ ॥

मुनीति ॥ मुनिसमुदयस्य मुनिसमुदायस्य चेत एव पेटिका सैव सद्म यस्य तत् । मुमुक्षुभिर्ध्येयमिति यावत् । 'कारणन्तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्ये' इति श्रुतेः । रत्नमिति । इदञ्च विशेष्यम् । श्रुतीति । श्रुतय एव महितमहेळाः सुन्दर्यस्तासां मौलिषु देदीप्यमानम् । उपनिषत्प्रकाशमानमित्यर्थः । भासिताशेषविश्वमिति । 'तमेव भान्तमनुभाति सर्वम्' इत्यादिश्रुतेः । किमपि अनिर्वचनीयमहिमशालि । काशिकेति । काशिका श्रीकाशीत्याख्यानमभिधा यस्यास्तथा भूता खानिः खनिर्यस्य तदित्यर्थः । 'खनिरेव मता खानिः' इति द्विरूपकोशः ॥ १३ ॥

आनन्दाब्धेः कमपि च घनीभावमीशैकभोग्यं
चिच्छक्त्याख्यं शिवमुपनिषत्सुन्दरीस्तूयमानम् ।
गङ्गे दिव्यं निखिलमपि यच्छक्तिलेशे समाप्तं
तन्मे चित्ते चरमसमये भासतां त्वत्स्वरूपम् ॥ १ ॥

धूमाङ्कूरो मदनशिखिनस्तावकीनः कटाक्षः
सौभाग्यश्रीहसितहरिणीशावनेत्रान्तलक्ष्मीः ।
चित्रं मन्ये मदनदहने यद्विधत्ते प्रवृद्ध-
ज्वालाजालं मदनदहनं पर्वताधीशपुत्रि ॥ २ ॥

---

आनन्दाब्धेरिति ॥ आनन्दाब्धेः गङ्गायाः परब्रह्मस्वरूपतया तदानन्द एवापः सुधाः तासां निधेः । कमपि अनिर्वचनीयम् । घनीभावं क्षीरस्य नवनीतमिव सारात्मकं घनीभूतवस्तु । चिच्छक्त्याख्यमिति । चिदेव शक्तिः चिच्छक्तिः । मायात्मकजडशक्तिव्यावर्तनाय चित्पदम् । अयं भावः—परमेश्वरस्य . शक्तिद्वयम्, चिच्छक्तिर्जडशक्तिश्चेति । तत्र जडशक्तिरेव माया । चिच्छक्तिस्तु चिदेव । तदुक्तं संक्षेपशारीरके—'चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते सत्यैवास्य जडा परा भगवतः शक्तिस्त्वविद्योच्यते ॥' इति । यद्वा, चितः मायोपहितचितः परमेश्वरस्य शक्तिः परमेश्वरनिष्ठा विविधजगत्सृष्ट्यादिनिर्वाहिका शक्ति. तदाख्यमित्यर्थः । शक्तेस्तादृशचिन्निष्ठत्वं तादात्म्यसम्बन्धेन । शिवं शुद्धम् । अत एव पूर्वोदाहृत शारीरकपद्ये विमलेति । निखिलकल्याणगुणनिधानमिति च । निखिलमपि चराचरात्मकं निखिलमपि कार्यम् । यच्छक्तिलेशे यस्याः शक्तीनां लेशे कस्याञ्चित्सत्त्वायां समाप्तं कृतं भवति । यच्छक्तिलेशजन्यमित्यर्थः । यद्वा, यच्छक्तिलेशे यद्विभूतिलेशे समाप्तं अन्तर्भूतमित्यर्थः ॥ २ ॥

धूमाङ्कूर इति ॥ अङ्कुर एवाङ्कूरः । धूमस्य वह्निव्यञ्जकत्ववत् कटाक्षस्य रागव्यञ्जकत्वात्तथा रूपणम् । अनेन कटाक्षस्य भगवत्प्रीतिभाजनत्वं व्यज्यते ।

भास्वत्तारा सुरतटिनि यं तावकापाङ्गलीला-
रात्रिर्गच्छत्यभिमुखमहो मर्त्यमप्यस्वरूपम् ।
हासज्योत्स्नापटलविमला तं स्वयं रूढरागा
वामाक्षीव द्रुतमभिसरत्येव कैवल्यलक्ष्मीः ॥ ३ ॥

मुक्ताहारैरभिनवबिसैः कुन्दकर्पूरमल्ली-
फेनैः क्षीरैः शशधरकरैः कान्तिलेशावभासात् ।
येषां साम्यं कविभिरगजे वर्ण्यते यत्तदेत-
न्निन्दा तेषां ददतु कुशलं तानि ते सुस्मितानि ॥ ४ ॥

---

मदनशिखिनः मदनः शिवविषयकः अनुराग एव शिखी तस्य । तापकत्वाद्रूपणम् । मदनदहने मदनस्य कामदेवस्य दहने दाहकर्तरि शिवे । मदनदहनं मदनः देव्यालम्बनोऽनुरागः स एव तापकत्वात् दहनः वह्निः तम् । स्वस्मिन् स्वापादनात्, कार्यभूतस्य धूमस्य कारणवह्निजनकत्वप्रतीतेश्च चित्रत्वम् ॥ २ ॥

भास्वदिति ॥ भास्वन्ती प्रकाशमाना प्रसन्नेति यावत् । तारा कनीनिका यस्यां सेत्यर्थः । भास्वन्त्यस्तारा नक्षत्राणि यस्यां सेत्यपि । यम् अभिमुखं गच्छतीत्यन्वयः । अभिमुखमिति क्रियाविशेषणम् । तावकेति । रात्रिरिव तावकापाङ्गलीलेत्युपमितसमासः । अभिमुखं गच्छतीत्यनेन रात्र्या दूतीत्वं प्रतीयते । अस्वरूपम् अविद्वांसम् । पक्षे असुन्दरम् । विरोधद्योतकोऽपिरत्र सम्बध्यते । 'प्राज्ञरूपस्वरूपाभिरूपा बुधमनोज्ञयोः' इत्यमरः । हासेति । ज्योत्स्नेव हासः इत्यत्राप्युपमितसमासः । स्वयमित्यनेन साधनान्तरनैरपेक्ष्यं द्योत्यते । द्रुतम् अविलम्बेन । अभिसरति अभिगच्छति । कैवल्यलक्ष्मीः कैवल्यसम्पत् । यस्मिंस्त्वत्कटाक्षपातः, तस्य सद्योमुक्तिरिति सारम् ॥ ३ ॥

मुक्तेति ॥ कान्तीति । इदञ्च गुणान्तराणामुपलक्षणम् । निन्देति । उत्कर्षप्रतिपिपादयिषया औपम्यकल्पनस्यापकर्ष एव पर्यवसानादिति भावः । अनेन निरुपमत्वं व्यज्यते ॥ ४ ॥

चञ्चत्पुष्पायुधजयपटीचारुहासाच्छफेन-
 व्याकीर्णोद्यद्वदनसुषमासञ्चयक्षीरसिन्धौ ।
प्रक्रीडन्ती विबुधतटिनि त्वत्कटाक्षेन्द्रनीला-
 न्याप्यानन्दं व्रजति परमं पारमेशाक्षिलक्ष्मीः ॥ ५ ॥

व्रीळानम्रं मृदुकिसलयं तन्वती काननान्तः
 सान्ध्यं वन्ध्यं दिनकररुचां सञ्चयं संविधात्री ।
लब्धुं स्वीयं गुणमभिलषत् कुर्वती चातपस्य-
 द्रक्ताम्भोजं पयसि हृदये भासतां त्वत्पदश्रीः ॥ ६ ॥

श्रुत्यन्तस्थं नयनमिव सद्वृत्तशुद्धद्विजेन्द्रै-
 र्जुष्टं दन्तच्छदमिव समैः पादपङ्केरुहं ते ।
मुक्तासेव्यं स्तनयुगमिव स्वाश्रिताभीष्टदान-
 प्रोद्यत्ख्याति क्षितिधरसुते सर्वदा संश्रयेऽहम् ॥ ७ ॥

---

चञ्चदिति ॥ चञ्चन्ती या पुष्पायुधजयपटी कामजयपताका तद्वच्चारुर्हास एवाच्छः निर्मलः फेनः तेन व्याकीर्णः व्याप्तो य उद्यद्वदनसुषमासञ्चय एव क्षीरसिन्धुः तस्मिन्नित्यर्थः । आप्येति । सिन्धोः रत्नाकरत्वादिति भावः । परम् अत्युत्कृष्टम् । व्रजतीति । तथाच त्वदीयवदनसुषमादर्शनेन कृतार्थम्मन्यः परमेश्वरश्चिरात्त्वदनुकूल त्वदपाङ्गलाभेन नितरां प्रमोदत इति भावः ॥ ५ ॥

व्रीळेति ॥ अत्र किसलयानां काननान्तर्नम्रतावस्थाने पदश्रीदर्शनजनित व्रीळाहेतुकत्वमुत्प्रेक्ष्यते । सान्ध्यमिति । वन्ध्यं निष्फलम् । बालं मन्दप्रभमित्यर्थः । रक्ताम्भोजं पयसि आतपस्यत् तपः कुर्वाणं च कुर्वतीत्यन्वयः ॥ ६ ॥

श्रुत्यन्तेति ॥ श्रुत्यन्तस्थं वेदान्तप्रतिपाद्यम् । पक्षे कर्णान्तविश्रान्तम् । सद्वृत्तेति । सद्वृत्तैः सदाचारैः । पक्षे सम्यग्वर्तमानैः । शुद्धैर्द्विजेन्द्रैः ब्राह्मण श्रेष्ठैः । पक्षे दन्तश्रेष्ठैः । जुष्टं सेवितमित्यर्थः । समैः सर्वत्र समभावनैः । पक्षे भया शोभया सहितैः । ते इति नयनमित्यादिनापि सम्बध्यते । मुक्ता सेव्यं जीवन्मुक्तैरासेव्यम् । पक्षे मुक्ताफलैः सेव्यम् । स्वाश्रितेति । देवीसम्बन्धितया निखिलावयवानामपि पूजार्हत्वात् । नयनादिसर्वसाधारणोऽयं धर्मः ॥ ७ ॥

चित्तोन्मत्तद्विरदहतकं दुर्ग्रहं तावकश्री–
पादालाने पशुपतिशिरोदेशगाढप्रतिष्ठे ।
योगोपायान् दृढपरिचितान् केचिदालम्ब्य धीराः
संवित्पाशैर्विजहति भयं देवि सम्यङ्निबध्य ॥ ८ ॥

याने मन्दं वरवितरणे सत्वरं वेदशाखा–
स्वैराचारं स्वरसविकसत्पद्मसौभाग्यचोरम् ।
गङ्गादेवि स्फुरतु हृदये कालकाले त्वदीयं
पादद्वन्द्वं त्रिदशतरुणीसङ्घसंवाह्यमानम् ॥ ९ ॥

हृद्येष्वाद्यं विरलसुकृतैर्दुर्लभं नित्यवाणी–
दिव्योद्याने विरचितपदं दुष्प्रधर्षप्रभावम् ।
त्वत्पादाम्भोरुहभवमहाव्याधिसिद्धौपधाग्र्यं
धीराः केचित्सुरधुनि चिरं मार्गयन्तो लभन्ते ॥ १० ॥

---

चित्तेति ॥ चित्तमेवोन्मत्तद्विरदहतकः दुष्टमत्तहस्ती, तमित्यर्थः। तावकेति। तावकश्रीपादमेवालानं करिबन्धस्तम्भस्तस्मिन्नित्यर्थः। पशुपतीति। पशुपतिशिरोभुवि दृढप्रतिष्ठित इत्यर्थः। योगोपायान् योगा एवोपायास्तान्। आलम्ब्येति। मत्तहस्तिबन्धने हस्तिशास्त्रप्रतिपादितानां चिरपरिचयवशंवदानां केषाञ्चिदुपायानां समाश्रयणीयत्वादिति भावः। धीराः 'विकारहेतौ सति विक्रियन्ते। येषां न चेतांसि त एव धीराः।' इत्युक्तलक्षणा धैर्यशालिनः। पक्षे विद्वांसः। केचित् आधोरणाः। पक्षे महाभागधेयाः। केचिदिति तादृशानां वैरळ्यं द्योतयति। संवित्पाशैः ज्ञानपाशैः। भयं संसारभयम्। पक्षे हस्तिनिमित्तकभीतिम्। निबध्य विजहतीत्यन्वयः ॥ ८ ॥

यान इति॥ वेदशाखेति। वेदशाखासु स्वैरः स्वेच्छः आचारः आ समन्तात् चारः सञ्चारो यस्य तदित्यर्थः। स्वरसेति। स्वस्य रसेन वीर्येण परिपाकवशेन विकसितेत्यर्थः। कालकाले कालस्य मृत्योः काले अवसरे ॥ ९ ॥

हृद्येष्विति॥ आद्यमिति। मुख्यमित्यर्थः। विरळसुकृतैः, 'न लोक' इत्यादिना षष्ठीनिषेधात्तृतीया। नित्येति। नित्यवाण्यः वेदाः ता एव ५

त्वत्पादाब्जप्रचुरभजनक्षीणपापा विरागाः
सन्तस्तत्त्वं निगमवचसां देशिकेन्द्राद्गृहीत्वा ।
सत्तर्कार्कक्षपितविविधायुक्तताधीतमस्का
मोदन्तेऽन्ते विबुधतटिनि ध्यानधारास्तमायाः ॥ ११ ॥

फुल्लन्मल्लीकुसुमसुपमं पौरुषं मान्मथीयं
तारानाथप्रतिमवदनं शम्भुसम्भोगयोग्यम् ।
शैलोत्तुङ्गस्तनभरनतं पादसञ्जत्सुकेशं
पश्येयं ते सुरधुनि कदा दिव्यकाम्यं स्वरूपम् ॥ १२ ॥

व्यहरदृषिकुलं यो मोहयित्वा समस्तं
द्रुकिलिमविपिनेऽमा मायया धर्मशास्ता ।
स्मरशतलटभस्तं नौमि काश्यामलिङ्गं
विधृतविरतिलिङ्गं दुर्विभाव्यान्तरङ्गम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यामष्टमस्तरङ्गः ॥

---

राणि तदन्तः विरचितं कृतं पदं स्थानं येन तदित्यर्थः। वेदस्य नित्यता 'वाचा विरूपनित्यया' इति श्रुत्या, 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः॥' इत्यादिस्मृत्या च सिद्धा। दुष्प्रध र्षेति। दुष्प्रधर्षः अभिभवितुमशक्यः प्रभावः सामर्थ्यविशेषो यस्य तदित्यर्थः। त्वत्पादेति। त्वत्पादाम्भोरुहमेव भवमहाव्याधेः संसाराख्यमहारोगस्य सिद्धौषधा प्रथमित्यर्थः। 'गङ्गैव परमं विष्णो भेषजं भवरोगिणाम्' इति स्मरणात् ॥ १० ॥

त्वत्पादेति। अनेनाधिकारप्राप्तियोग्यता प्रदर्शिता। विरागा नित्यानित्य विवेककृतेहामुत्रफलभोगवैराग्यशालिनः। एतच्च शमादिषट्कमुमुक्षयोरप्युपलक्षणम्। सत्तर्केति। सत्तर्कः श्रुत्यनुसारियुक्तिः स एवार्कस्तेन क्षपितं नाशितं विविधायुक्तता धीः असम्भावितत्वधीरेव तमो यैस्त इत्यर्थः। एतच्च मननफलम्। मोदन्ते कैवल्यरूपपर मानन्दभाजो भवन्ति। ध्यानधारास्तमाया इति। साक्षात्कारद्वारा ध्यानधारया निरस्तमाया इत्यर्थः। अत्राधिकारप्राप्तिश्रवणमनननिदिध्यासननिश्रेयसाधिगमा उक्ताः ॥ ११ ॥

फुल्लदिति॥ पादसञ्जत्सुकेशम् आपादलम्बिप्रशस्तकेशम् ॥ १२ ॥

व्यहरदिति॥ ऋषिकुलमिति। कुलशब्देन स्त्रीपुंसयोर्द्वयोरपि ग्रहणम्। मोहयित्वा कामपरवशं कृत्वा। द्रुकिलिमविपिने देवदारुवनप्रदेशे। 'भद्रदारु

सृजन्तु कविपुङ्गवा द्रुतमनेकधा ते नुतीः
परन्तु तदपेक्षया विगतवासनोऽहं कृती।
चिरन्तुहिनशैलजे स्तुतिरसेन यन्मान्द्यतो
भवन्तुदभवत्तनोर्मधुरचिन्तनान्तां भजे ॥ १ ॥

द्रुकिलिमं पीतदारु च दारु च। पूतिकाष्ठं च सप्त स्युर्देवदारुणि' इत्यमरः। द्रौ स्कन्धे किलिमं निर्यासो यस्येति तद्व्याख्या। अमा सह। 'अमा सह समीपे' इत्यमरः। मायया विष्णुमायया। धर्मशास्तेति। अत एव ऋषिकुलं धर्मं बोधयितुमेवं चकारेति भावः। स्मरशतललमः मदनशतसुन्दरः मदनाधिकसुन्दर इत्यर्थः, 'अप्राकृतशरीरं तमतिमन्मथरूपिणम्' इति शिवपुराणवचनात्। इदञ्च मोहने हेतुगर्भम्। अलिङ्गं न विद्यते लिङ्गं सूक्ष्म शरीरं शेफश्च यस्य तम्। अत्र लिङ्गपदं स्थूलदेहस्याप्युपलक्षणम्। विधृतविरतिलिङ्गं विधृतानि विरतिलिङ्गानि वैराग्यचिह्नानि कपालास्थिमालादिगम्बरजटादीनि येन तम्। सौरे एकोनविंशाध्याये, 'विटवेषमथास्थाय ययौ दारुवनं प्रति। स्त्रीरूपधारी विष्णुश्च शङ्करेण समागतः॥ विष्णुना सह विश्वेशो देवदारुवनौकसः। मोहयन् मायया शम्भुर्विचचार वने तदा॥ मुनिस्त्रियश्शिवं दृष्ट्वा मदनानलदीपिताः। त्यक्तलज्जा विवस्त्राश्च ययुस्ता अनु शङ्करम्॥ स्त्रीरूपधारिणं विष्णुं सर्वे मुनिकुमारकाः। अन्वगच्छन्त देवर्षे कामबाणप्रपीडिताः॥ तदद्भुतं तदा ज्ञात्वा कुपिता मुनयस्तदा। लिङ्गहीनं हरं चक्रुर्गोपवेषधरं हरिम्॥' इति। एवं भैक्षार्थं पर्यटन्तं मोहितानुयातनिखिलमहर्षिकुलं सभार्यं दिगम्बरं दृष्ट्वा कुपितानां जरन्मुनीनां शापेन भगवतोऽलिङ्गता। मलयाचलखण्डे तु, ऋषयः—'तिष्ठ तिष्ठ सदा स्त्रीणां मोहकोऽस्यधमाधमः। लिङ्गमेतत् समुत्पाट्य अनया भार्यया विना॥ कृत्वा कर्म सदाचारो वनेऽस्मिन् विहराधम। इत्युक्तस्तु तदा शम्भुस्तेषां मध्ये तथाऽकरोत्॥ लिङ्गमुत्पाट्य सन्त्यज्य तया चान्तर्हितोऽभवत्।' इति। अन्तर्धानानन्तरं ब्रह्मवचसा ते मुनयस्तपश्चेरुः। अथ पुनः प्रादुर्भूतेन तादृशवेषधारिणा परमेश्वरेण धर्मोपदेशः कृत इत्यपि कथा तत एवावगन्तव्या। दुर्विभाव्यान्तरङ्गमिति। दुर्विभाव्यं दुर्बोधं अन्तरङ्गं मनः अभिप्राय इति यावत्। यस्य तमित्यर्थः। भगवदभिप्रायस्य दुर्बोधत्वम् 'अहो ईश्वरचर्येयं दुर्विभाव्या शरीरिणाम्।' इति ब्रह्मोत्तरखण्डवचनादिसिद्धम्। काव्यलिङ्गं विरोधाभासश्चालङ्कारः ॥ १३ ॥

**सृजन्त्विति॥** सृजन्तु रचयन्तु। अतिसर्गे लोट्। अतिसर्गः कामचाराभ्यनुज्ञानम्। अनेकधा शब्दतोऽर्थतश्च विविधप्रकाराः। ते तव। नुतीः

शरत्तुहिनदीधितिप्रकरमेव खद्योतिका-
समं विदधती स्वया सुषमया सुमेषुद्विपः ।
हरन्त्ययमसुते मनो रतिसुमङ्गलीत्वप्रदा
तवाश्रितजनावने जयति मूर्तिरव्याहता ॥ २ ॥

त्वमेव जगदम्बिके विविधनामरूपादिभि-
र्विशेषितमिदं जगत्सृजसि केवलं लीलया ।
त्वमेव करुणाकुला समदृशा समारक्षसि
त्वमेव हि विलापयस्यथ च शिष्यसे शाश्वती ॥ ३ ॥

---

स्तोत्राणि। कृती धन्यः। चिरमिति चिन्तनायामन्वेति। यावत्समुचितशब्दार्थ स्फूर्तिः, तावत्पर्यन्तं चिन्तनायास्समाश्रयणीयत्वात्। स्तुतिरसेन तनुवर्णनादिरूप स्तोत्रनिर्माणकौतूहलेन। अस्यापि तत्रैवान्वयः। यत् यतः। मान्द्यतः वास नादिवैरल्येनानुगुणशब्दार्थस्फुरणविलम्बात्। भवन्तुदेत्यादि। भवन्तुदायाः संसार हन्त्र्याः। 'अरुर्द्विप' इत्यादिना मुम्। भवत्तनोः भवद्विग्रहस्य मधुरां परमानन्द कारिणीं चिन्तनामित्यर्थः। तां परमहंसैरपि दुर्लभाम्। भजे धारयामि। महा कवयस्तु भवतीं तुष्टूषवस्तत्तदवयववर्णनोचितविविधचित्रार्थपदसमूहालम्बनज्ञानवन्तो वश्यवाचः सन्तः क्षणेन भवत्स्तोत्ररूपं प्रबन्धं सृजन्तीति न तैर्भवत्तनोश्चिरचिन्तनाभाग्यं लभ्यत इत्यर्थः। अत्र दोषस्य गुणतया वर्णनाल्लेशोऽलङ्कारः। अस्मिन्नुत्तरस्मिंश्च तरङ्गे पृथ्वीवृत्तम् ॥ १ ॥

शरदिति ॥ शरत्तुहिनदीधितिप्रकरमेव शरच्चन्द्रसमूहमेव, नत्वेकं शरच्चन्द्र मित्यर्थः। खद्योतिकासमं खद्योतवन्मन्दप्रभम्। सुमेषुद्विपः मन्मथारेः। रतीति। रतेर्वैधव्यपरिहारिणीत्यर्थः। कामोज्जीवनत्वादिति भावः। आश्रितजनावने अव्या हतेति सम्बन्धः। अव्याहता अप्रतिरुद्धा। जयतीति। गुणोत्तरमूर्त्यन्तरेणाधःकरण रूपपरिभवराहित्यादिति भावः ॥ २ ॥

त्वमेवेति ॥ विशेषितं युक्तम्। सृजसीति। नन्वेवं परमेश्वरस्य जग त्कारणत्वव्यवहारः कथं सङ्गच्छत इति चेन्न, तादृशव्यवहारस्य शक्तिसाहचर्यमात्रा धीनत्वात्। तदुक्तं नीलकण्ठदीक्षितैः—'निर्मासि निर्वहसि संहरसि त्रिलोकीं

निसर्गकुटिलः कचः श्रयति विश्लथस्ते पदं
यदा भरहतस्तदा करयुगेन देवि त्वया ।
शिरोऽदरकृतादरं समधिरोप्य सम्भाव्यते
समादृतगुणैस्ततः सुमनसां गणैस्सेव्यते ॥ ४ ॥

---

वृत्तान्तमेतमपि वेत्ति न वा महेशः। तस्येश्वरस्य गिरिजे तव साहचर्याज्जातः श्रुतिष्वपि जगज्जनकत्ववादः ॥' इति। विलापयसि विलयं नयसि। शिष्यसे इति। स्मर्यते च गङ्गां प्रस्तुत्य ब्रह्मवैवर्ते—'तस्या विनाशः प्रलये नास्त्येव दुहितुर्मम' इति। शाश्वतीति। तदुक्तम्—'आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे। त्वमेव मूलप्रकृतिः त्वं पुमान् पर एव हि ॥ गङ्गे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ।' इति। अत्र व्याख्या—आदाविति। आदौ त्वं कारणत्वेन, अन्ते त्वमवधित्वेन, मध्ये च किञ्चित्सत्तास्फूर्तिप्रदत्वेन। तत् सर्वं त्वमेवेत्यर्थः। शिवे परमसुखस्वरूपे। मूलप्रकृतिः अविद्या, पुमान् पुरुषः, परः ईश्वरः, हे गङ्गे शिवः सुखस्वरूपः परमात्मा च त्वमेवेत्यर्थः। हिः श्रुतिप्रसिद्धिमाह। शिवे हे शिवशक्ते इति ॥ ३ ॥

निसर्गेति ॥ कुटिलः कुञ्चितः, खल इति च। विश्लथः शिथिलबन्धः, दुर्बल इति च। पदं श्रयतीति। पदपर्यन्तमायतत्वात् तत्स्पृशतीत्यर्थः। अन्यत्र पदे पतित्वा शरणमभियातीति। भरहत इति। केशस्य गुरुतरत्वादिति भावः। पक्षे संसारतापस्यात्यन्तं दुर्भरत्वादिति। अदरकृतादरम् अमन्दादरपूर्वम्। यथापुनर्न विश्लेषो भवेत्, तथेत्यर्थः। पक्षे कारुण्यनिमित्तकेन अमन्दादरेण यथा पुनः संसारपतनं न स्यात्तथेति। शिरः समधिरोप्य सम्भाव्यते इत्यन्वयः। यथापूर्वं शिरसि निबध्यत इत्यर्थः। पक्षे रक्ष्यत्वेनाङ्गीकरोतीति। समादृतगुणैः सूत्रनिबद्धैः, मानितसहजसौरभ्यसम्पत्तिभिरिति च। सहजं कचसौरभ्यमुपलब्धुकामैरित्यर्थः। पक्षे श्लाघितगुणसम्पत्तिभिरिति। सुमनसां पुष्पाणाम्, पक्षे दिव्यानाम्। गणैः समूहैः। सेव्यते अलङ्क्रियते, पक्षे आराध्यते। समासोक्तिरलङ्कारः। स्वभावतो दुराचाराः खला अपि संसारतापेन निर्विण्णा यदा त्वां शरणमुपयान्ति, तदा ते त्वया सकरुणमङ्गीकृत्य विमुक्ततापाः क्रियन्ते, देवैरप्यादरणीयाश्च भवन्ति। अहो तव करुणाति

अतर्कितमुपागते प्रियतमे मुखाब्जान्नता-
च्छिवे तव दृशोः प्रभा निपतति स्म या भूतले।
द्विरेफपटलीव सा लसति पर्यटन्त्यन्तिके
भवत्पदपयोरुहद्वयमरन्दपानोत्सुका ॥ ५ ॥

प्रफुल्लदसितोत्पलं तव दृगन्तलेशश्रिया
स्मरान्तकमनोमुपा समरनिर्जितं चञ्चलम्।
समेत्य समयाऽम्ब तां श्रितजनानुकम्पाकुलां
करोत्यभययाचनां श्रवणपूरतामाश्रिता ॥ ६ ॥

नवीनजलदावली लसति नीलकण्ठप्रिया
मरुद्गणवशंवदा भवदपाङ्गमाला शिवे।
अधःकृतकुशेशया लसदराळचिल्लीलता-
शचीपतिशरासना निखिलतापसंहारिणी ॥ ७ ॥

---

रेको महिमातिशयश्चेत्यर्थस्यात्र प्रतीतिर्बोध्या ॥ ४ ॥

अतर्कितमिति ॥ उपागते समीपायाते। शिवे इति सम्बुद्धिः ॥ ५ ॥

प्रफुल्लदिति ॥ चञ्चलमिति भयानुभावोऽयम्। तां समया समेत्य इत्यन्वयः दृगन्तलेशश्रियं समुपेत्य इत्यर्थः। 'समयानिकषाशब्दौ सामीप्ये त्वव्ययौ मतौ' इति हलायुधः। 'अभितः परितः समया निकषा हा प्रतियोगेपि' इति द्वितीया। श्रवणपूरयोः कर्णावतंसयोः। गम्योत्प्रेक्षा ॥ ६ ॥

नवीनेति ॥ नीलकण्ठप्रिया नीलकण्ठः परमेश्वरः, अन्यत्र मयूरः तस्य प्रिया। मरुद्गणवशंवदा मरुद्गण. देवगणः तस्य वशंवदा तदधीना। तदभीष्टप्रदेत्यर्थः। अन्यत्र वात्यानुसारिणीति। भवदिति। भवदपाङ्गमालैव नवीनजलदावलीति व्यस्त रूपकम्। अध.कृतकुशेशया कान्त्या तदतिशायित्वात्। अन्यत्र वर्षाकाले जलजानां जलनिमज्जनात्। लसदिति। शचीपतिशरासनं इन्द्रधनुः तदिव चिल्लीलता भ्रूलता चिल्लीलताशचीपतिशरासनम्। लसत् शोभमानम् अराळं कुटिलञ्च चिल्लीलताशिचीपति शरासनं यस्यास्सेत्यर्थः। अन्यत्र चिल्लीलतासदृशलसत्कुटिलेन्द्रचापेत्यर्थः ॥ ७ ॥

प्रनृत्यति कृपानटी विततचिल्लिवल्लिप्रभा-
वितानकविराजिते भवदपाङ्गरङ्गेऽम्बिके ।
पुरःस्थितबुधावलिप्रमदभारमातन्वती
मृदुस्मितशुचिद्युतिप्रततिदीपिकाभासुरे ॥ ८ ॥

मणिश्रवणभूषणप्रसृतकान्तिसप्तस्त्रपा-
सरित्कृतनिमज्जनः स्मितविभूतिलेपश्शुचिः ।
रदच्छदनशोभया धृतकषायरक्ताम्बरः
समाश्रयति शङ्करं भवदपाङ्गयोगी शिवे ॥ ९ ॥

सुदुस्सहभवज्वरप्रशमनार्थमभ्यर्थित-
प्रशान्तगुरुराड्भिषक्करुणयाद्यवैद्यादृतम् ।
यथा पुरमिदं कृती तव दृगञ्चलं भेषजं
सुदुर्लभमवाप्तवान् व्रजति शाश्वतीं निर्वृतिम् ॥ १० ॥

---

प्रनृत्यतीति ॥ कृपैव नटी कृपानटी। वितेतेति। वितता चिल्लिवल्लि प्रभैव वितानकम् उल्लोचस्तेन विराजिते इत्यर्थः। द्युतिप्रततिदीपिकेति। द्युतेः प्रततिः विस्तारः। विस्तृतद्युतिरिति यावत्, 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इति न्यायात्। सैव दीपिकेत्यर्थः। पुरःस्थितेत्यादि। प्रमदभारः देवपक्षे कृपालाभप्रयुक्तः, विद्वत्पक्षे च रसास्वादरूप इति विवेकः ॥ ८ ॥

मणीति ॥ मणिभिः खचितं सहितं वा श्रवणभूषणमिति मध्यमपदलोपी समासः। यद्वा, मणिरेव श्रवणभूषणं मणिमयं कर्णभूषणम्, तत्प्रसृतया शोभया सप्तः सप्ता जटया सहित इत्यर्थः। 'सा जालिनी गरुडा जटा' इति वैजयन्ती। विशेषणैर्यतिधर्मा उक्ताः। समाश्रयतीति। इदमुचितमिति। भावः ॥ ९ ॥

सुदुस्सहेति ॥ अभ्यर्थितेति। अभ्यर्थितो यः प्रशान्तः शमदमादिसम्पन्नः गुरुराट् उत्तमगुरुः स एव भिषक् तस्य करुणयेत्यर्थः। 'तदुपदेशादिति यावत्। आद्यवैद्यादृतं परमेश्वरसम्भावितम्। आद्यवैद्यैः पुरातनभिषग्भिः आदृतमङ्गीकृतमिति च। इदं पुरं श्रीकाञ्चीम्। यथा इव। कृती सुकृती। सुदुर्लभमिति। 'सम्प्राप्य काशीं दुष्प्रापां ब्रह्मनारायणादिभिः' इत्यादिना काश्या अत्यन्तदुर्लभत्वस्मरणात् ॥ १० ॥

मुखाम्बुजविभूषणं कुसुमसायकोज्जीवनं
 मखाशनतरङ्गिणि प्रमथनाथदृक्पारणा ।
विलासमहिमश्रियो ललितवस्त्रमुच्चाटनं
 कलानिधिकरावलेर्जयति सुन्दरं ते स्मितम् ॥ ११ ॥

उदीक्ष्य यमुरुत्नपस्सितकरः पयोदोदरे
 कुशेशयततिर्जले बिसकदम्बकं कर्दमे ।
अमर्त्यधुनि शुक्तिकाजठर एव मुक्तावली
 निलीयत इमं कदा सुखयतात्स हासाङ्कुरः ॥ १२ ॥

घटवदखिलकार्यं कर्तृजन्यं जडो नो
 प्रभवति न च भोक्ता को नु देवः स कर्ता ।
चिरमिति विमृशद्भिर्यः कटाक्षेण देव्या
 यमिभिरवधृतस्तं सोममानौमि काश्याम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां नवमस्तरङ्गः ।

---

मुखेति ॥ विषमसायकोज्जीवनं कामोज्जीवनम् । उद्दीपकत्वात्तथात्वम् । प्रमथेति प्रमथ्नन्ति अवैदिकानिति प्रमथाः पारिषदाः तेषां नाथः शिवः तस्य दृशोः पारणा व्रतान्तभोजनवदतिशयेनास्वाद्यमित्यर्थः । विलासमहिमश्रियः विलासमहिम्नां श्रियः । ललितवस्त्रं मनोहरवस्त्रम् । प्रधानशोभाधायकत्वाद्वस्त्रत्वेन रूपणम् । कलानिधिकरावलेरुच्चाटनमिति योजना ॥ ११ ॥

उदीक्ष्येति ॥ यं हासाङ्कुरम् । उरुत्नप इति लिङ्गविपरिणामेन तत्यादावप्यन्वेति । बिसकदम्बकं मृणालसमूहः । शुक्तिकाजठरे शुक्तिकाया जठरे अन्तर्भागे । एवकारस्य उदीक्ष्येत्यत्र सम्बन्धः । तेन स्मितस्य जयार्थमायासलेशस्याप्यभावः सूचित. ॥ १२ ॥

घटवदिति ॥ यथा घटादि कुलालादिकर्तृजन्यं तथा क्षित्यादिकमपि कर्तृजन्यम्, तस्य कार्यत्वेन कर्त्रधीनत्वादिति भावः । जड· कालस्वभावादिः । न प्रभवति न कर्तुमीष्टे । सृष्टेः ज्ञानपूर्वकत्वादिति भाव. । भोक्ता कर्मफलभोक्ता जीवश्च न प्रभवति । जीवानां स्वकर्मफलभूतविविधदुःखानुभोक्तृत्वेनानीशत्वादिति भावः । को नु देव इति । देवानां मध्ये निखिलभुवनानां कर्ता क इति चिर

कालं विचारं कुर्वद्भिरित्यर्थः। कटाक्षेण प्रसादेन । देव्याः ब्रह्मविद्याधिदेवतायाः पराशक्तेरम्बिकायाः। यभिभिः विमृश्यमानार्थनिर्णयो देव्याः प्रसादादेव भविष्यती त्यभिप्रायेण तां ध्यायद्भिः ऋषिभिः। अवधृतः कर्तृत्वेन निश्चितः। श्वेताश्वतराणां मन्त्रोपनिषदुपक्रमे ब्रह्मवादिनो वदन्ति—'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठा अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्' इति केषाञ्चिद्‌ब्रह्मवादिनामृषीणां ब्रह्म जगन्मूलकारणमित्येतावन्निश्चितवतां कारणभूतं ब्रह्म को देव इति विशिष्याबुध्यमानानां कारणं ब्रह्म किमित्यादिरूपान् संशयान् प्रदर्श्य, 'यः कारणानि निखिलानि तानि कालात्मयुक्तानि अधितिष्ठत्येकः' इत्या रभ्य 'संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः। क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' इत्यादिभिस्तैर्निर्णीतमर्थं प्रदर्शयद्भिर्मन्त्रैः कालाद्य वान्तरकारणवृन्दस्य अधिष्ठाता ईशहरादिशब्दवाच्यो भगवान् परमशिव एव कारणं ब्रह्म इति स्फुटीकृतम्। यः कारणानीति। अत्र भाष्यम्—कोऽसौ देवो यस्येयं विश्वजननी शक्तिरभ्युपगम्यते तत्राह—यः कारणानीति। यः कारणानि निखि लानि तानि पूर्वोक्तानि कालात्मयुक्तानि कालात्मभ्यां युक्तानि कालपुरुषसंयुक्तानि स्वभावादीनि कालस्वभाव इति मन्त्रोक्तानि अधितिष्ठति नियमयति, एकोऽद्वितीयः परमात्मा तस्य शक्तिं कारणमपश्यन्निति वाक्यार्थः इति। ननु क्षरं प्रधानमिति मन्त्रे हरशब्दस्य न क्षराक्षरेश्वरदेवताविशेषसमर्पणपरत्वेनान्वयः, किन्तु संयुक्तमेतत् क्षरमक्षर ञ्चेत्यादिमन्त्रश्रुतक्षराक्षरशब्दार्थबुभुत्सायां क्षरं प्रधानमिति क्षरशब्दविवरणानन्तरम क्षरशब्दविवरणवाक्ये विधेयपरत्वेन, अन्यथा तद्वाक्यापरिपूर्तेः। नच अमृताक्षरमिति पदद्वयसत्त्वात् अमृतपदेन अक्षरपदविवरणं क्रियत इति तत् परिपूर्णमिति वा च्यम्, एकप्रसरताभङ्गापत्त्या समासस्य एकपदार्थोद्देश्यकापरपदार्थविधेयकबोधपरत्वसम्भ वादिति चेन्न, यतोऽमृताक्षरमित्यत्र अमृतेति भिन्नं पदं 'नारायणपरं ब्रह्म'इत्यत्र नारायण पदमिव लुप्तविभक्तिकं जीवपरम्' 'क्षरञ्च विद्या ह्यमृतन्त्वविद्या विद्याविद्ये ईशते यस्तु सोऽन्यः' इत्यस्यामेव श्रुतौ तत्र तस्य दृष्टप्रयोगत्वात्। 'जीवापेतं वावकिलेदं न जीवो म्रियते' इति श्रुत्यन्तरे तत्र तदर्थसम्भवोक्तेश्च। तेन च बुभुत्सिताक्षरशब्दविवरणं क्रियते। हरशब्दस्तु क्षराक्षरेश्वरदेवताविशेषनिर्धारणपरत्वेन उत्तरत्रान्वेति। तथाच य एको देवः क्षरात्मानौ प्रधानजीवौ ईशते ईष्टे सः हरः इति मन्त्रार्थः पर्यवसित इति।

महेश्वरशिरःस्फुरत्तुहिनदीधितिप्रस्रव
त्सुधाबहुलधारया विहितशीतसेवा शिवे ।
नियुक्तरमणीन ते पदयुगी प्रवालोज्ज्वला
विभात्यनिमिषाङ्गनाकलितमन्दसंवाहना ॥ १ ॥

---

उपबृंहणमपि वायुसंहितायां तथैव दृश्यते। 'द्वे इदं क्षरमव्यक्तं द्वावमृतमक्षरम्। तावुभौ य क्षरात्मानावेको देव स्वयं हर ॥' इत्यादि। एता श्रुतय क्रमेण संक्षेपत उपबृंहिता —'समेत्य ते महात्मानो मुनयो ब्रह्मवादिन। वितेनिरे बहून् वादानात्मविज्ञानसंश्रयान् ॥ किमस्य जगतो मूलमात्मा वाऽस्माकमेव हि। कोऽपि स्यात्सर्वभूताना ध्यानकर्मावलम्बिनाम् ॥ आविरासीन्महादेवी गौरी गिरिवरात्मजा।' इत्यारभ्य 'निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम्। पश्यन्ति शम्भु कवि मीशितार रुद्रं बृहन्त पुरुष पुराणम् ॥' इत्यादि। अत्र किमस्य जगतो मूलमिति किं कारण ब्रह्म कुतस्माज्जाता इत्येतदर्थो दर्शित। जीवाम केनेत्यादिविमर्शजातार्थं आत्मा वा अस्माकमेव हीति दर्शित, आत्मशब्दस्याधिष्ठातृपरत्वात्। शिवपुराणेऽपि अम्बिकामाहात्म्य प्रस्तुत्य, 'मुमुक्षया पुरा केचिन्मुनयो ब्रह्मवादिन। संशयाविष्ट मनसो विमृशन्ति यथायथम् ॥ किं कारणं कुतो जाता जीवाम केन वा वयम्। क्वास्माक सम्प्रतिष्ठा केन वाऽधिष्ठिता वयम् ॥ केन वर्तामहे शश्वत् सुखेष्वन्येषु वाऽनिशम्। अविलङ्घ्या च विश्वस्य व्यवस्था केन वा कृता ॥ कालस्स्वभावो नियति यदृच्छा नात्र युज्यते। भूतानि योनि पुरुष योगो वैषा परोऽथवा ॥ अचेतनत्वात् कालादेश्चेतनत्वेपि चात्मन। सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते ॥ ते ध्यान योगानुगता प्रापश्यन् शक्तिमैश्वरीम्। पाशविच्छेदिका साक्षान्निगूढा स्वगुणैर्भृशम् ॥ तथा विच्छिन्नपाशास्ते सर्वकारणकारणम्। शक्तिमन्त महादेवमपश्यन् दिव्यचक्षुषा ॥ य कारणान्यशेषाणि कालात्मसहितान्यपि। अप्रमेयोऽनया शक्त्या सार्कमेकोऽधितिष्ठति ॥' इति। सोमम् उमया सहित सोमस्तम्। 'उमासहाय परमेश्वर प्रभुम्' इति श्रुतेरिति। विस्तरस्तु शिवतत्त्वविवेके द्रष्टव्य ॥ १३ ॥

महेश्वरेति ॥ ईश ऐश्वर्ये इति धातो 'स्थेशभासपिसकसो वरच्' इति कर्तरि वरच्प्रत्यये ईश्वर। महांश्चासावीश्वर इति विग्रहे 'सन्महत्परमोत्तमा' इति समास।

नखप्रसृमरामलद्युतिसरोवराधिष्ठिता
कपर्दविपिनोदरे प्रचुरमाचरन्ती तपः
तवाङ्घ्रिकमलद्वयी कनकनूपुरोद्यच्छवि-
च्छटाघनजटा शिवे जयति लोकरक्षाकरी ॥ २ ॥

तवाम्ब नखरप्रभासरसि राजहंसायते
सुधांशुमुकुटच्छटा पदयुगी च कूर्मायते ।
सरोजमुकुलायते मुनिजनाञ्जलिश्रेणिका
महेशि मकरायते त्रिदशयोषिदक्ष्यावली ॥ ३ ॥

---

महत्त्वञ्चेश्वरे समभिव्याहृतधातूपात्तेशितृत्वद्वारकमसङ्कुचितविषयकत्वरूपम् । स्वर्गादि यत्किञ्चिदीशितृत्वयोगादीश्वरत्वं हीन्द्रादीनामप्यस्ति, तदादाय षड्विंशब्राह्मणे उत्पात शान्तिप्रकरणे 'इन्द्रयमादिषु ईश्वराय स्वाहा' इति मन्त्रः प्रवृत्तः । शिवस्तु महेश्वर., तेषामपीश्वरत्वात् । 'ध्येयस्सर्वैश्वर्यसम्पन्नस्सर्वेश्वरश्शम्भुराकाशमध्ये' इति श्रुतेः, 'सेन्द्रादिषु च देवेषु तस्य त्वैश्वर्यमुच्यते ।' इति महाभारतवचनाच्च इति भावः । महेश्वरस्य शिरसि स्फुरन् यस्तुहिनदीधितिश्चन्द्रस्तस्मात् प्रस्रवत्या अमृतधारया। प्रणयकलहशान्त्यै प्रणामावसरे चूडाशशाङ्कोद्गलितसुधाधाराया देवीपादयोः पतनादित्या शयः । प्रवालोज्ज्वला आरुण्यमार्दवाभ्यां प्रवालवदुज्ज्वला, प्रवालैरुज्ज्वला इति च । विरहिणीनां जलधारापल्लवादिभिः शीतोपचारः प्रसिद्धः । विभातीति । वियुक्तरमणीव विभातीति योजना। अनिमिषेति। अनिमिषाणां देवानामङ्गनाभिः, पक्षे अनिमिषं निर्निद्रं यथा तथा अङ्गनाभिः कलितं मन्दसंवाहनं शनैस्संवाहनं यस्यास्तथाभूतेत्यर्थः ॥ १ ॥

नखेति ॥ नखानां प्रसमरा परितो व्याप्रियमाणा अमलद्युतिरेव सरोवरः तमधिष्ठितेत्यर्थः । कपर्दविपिनोदरे कपर्द एव विपिनं तदुदरे तन्मध्ये। कनकेति। कनकनूपुरयोरुद्यन्ती छविच्छटा कान्तिसमूहः सैव घना निबिडा जटा यस्याः सेत्यर्थः । लोकरक्षाकरीति। स्वस्यास्तपश्चरणे प्रयोजनान्तराभावादिति भावः। गम्योत्प्रेक्षा ॥ २ ॥

तवेति ॥ नखरेति। नखरप्रभैव सरस्तस्मिन्। अस्य राजहंसायत इत्यादौ सर्वत्र सम्बन्धः। राजहंसायते राजहंसः हंसानां राजा श्रैष्ठ्यात् । राजदन्तादित्वात् परनिपातः। 'राजहंसास्तु ते चञ्चुचरणैर्लोहितैस्सिताः' इत्युक्त

पुरान्तकतनु श्रिता धवळता हि तुङ्गश्रियं
रमापतिकळेवरं श्रयति काळिमा कोमळम् ।
ममापि दिश तादृश पदमितीव सम्प्रार्थिनी
सरोजमृदुनाऽऽहता पदतलेन ते शोणता ॥ ४ ॥

महेश्वरि मनोमणिं प्रबलरागपाटच्चरा-
दुदूढभयतो यतो निजजनो विकल्पं विना ।
समर्पयति सन्तत सरसपङ्कजोद्यन्छ्रिय
स चोरयति तावकश्चरण एव हन्त स्फुटम् ॥ ५ ॥

द्विभावमुपगच्छती तव पदे निरस्य द्वितां
कथन्नु भवतः शिवे श्रितजनाय कैवल्यदे ।
फलं किमुत युक्तिभिर्लघुभिरत्र तत्सङ्गिनः
स्फुरन्ति विमला यतस्सततमेव मुक्ता नखाः ॥ ६ ॥

---

लक्षण । स सेवानम्राणा सुधाशानाममराणा मुकुटच्छटा किरीटपरम्परेत्यर्थ । लिद शेति । सेवार्थं समागताना पश्यन्तीना देवनारीणामक्ष्यावली नेत्रपङ्क्ति रित्यर्थ. ॥ ३ ॥

पुरान्तकेति ॥ ममेति । अत इत्यादि । सजातीययोस्तयोर्महनीयस्थान लाभादित्यर्थ । पदं स्थानम् । अत्र स्वाभाविके देवीपादयोर्लौहित्ये वस्तुत. उक्तप्रार्थनापूर्वकत्वाभावेपि तत्पूर्वकत्वोत्प्रेक्षणाद्धेतूत्प्रेक्षा ॥ ४ ॥

महेश्वरीति ॥ मनोमणिं मन एव मणिस्तम् । प्रबलेति । प्रबलो यो राग एव पाटच्चरश्चोर तस्मात् । यत यत्र चरणे । विकल्पं विना संशयं विना । सरसेति । अम्लानेत्यर्थ । अत्र श्रीशब्देन सम्पदपि प्रतीयते । इदञ्च चोरणे कर्म । हन्तेति । चोरेभ्यो रक्षणाय यं समाश्रयति, स एव चोर इत्याश्चर्य द्योतयति ॥ ५ ॥

जीवेश्वरयोर्भेदनिराकरणपूर्वकमुक्तिप्रदातृत्वेन देवीपादयुगं स्तौति— **द्विभाव मिति** ॥ द्विभाव द्वित्वम् उपगच्छती अङ्गीकुर्वतीत्यर्थ । द्विता द्वित्वम् । जीवेश्वर योर्भेदमिति यावत् । निरस्य निवर्त्य अभेदसाक्षात्कारविरोधिनीं भेदबुद्धिमनुत्पाद्य

भवत्पदनटीद्वयी सततभावनाशोधिते
महानटवधूटि मे हृदयरङ्गदेशे सदा ।
तनोतु नटनं कनत्कनकनूपुरोद्यद्ध्वनि-
र्मनोहरगतिक्रमा विविधविभ्रमालङ्कृतिः ॥ ७ ॥

अघौघलघुभञ्जना मदनजिज्जटारञ्जना
भवत्पदसरोरुहद्वयनिकेतनाः पांसवः ।
पुनीयुरिममद्रिजे सततमेव येषां कणा-
नशेषसुरमण्डली शिरसि धर्तुमाकाङ्क्षति ॥ ८ ॥

---

त्यर्थः । कैवल्यदे ऐकात्म्यरूपमुक्तिप्रदे । द्वैतिनोर्द्वैतनिरासपूर्वकम् ऐकात्म्यात्मक मुक्तिप्रदातृत्वम् , स्ववशे अविद्यमानैकत्वयोस्तद्दातृत्वं चासम्भाव्यमिति भावः । अत्र पादगतसंख्यारूपद्वित्वस्य जीवेश्वरद्वित्वरूपभेदस्य चाभेदाध्यवसायाद्विरोधः । किंशब्द आक्षेपे । उतेति पक्षान्तरे । लघुभिः प्रत्यक्षापेक्षया दुर्बलैः । अत्र कैवल्यदाने । प्रत्यक्षमेवाह—तत्सङ्गिन इति । त्वत्पादसक्ता इत्यर्थः । तत्संसर्गिण इति च । विमला विगतरागादिदोषाः, स्वच्छाश्च । मुक्ताः मुक्तिं प्राप्ता एव सन्तः, मौक्तिकान्येव सन्त इति च । सततं स्फुरन्ति ॥ ६ ॥

भवदिति ॥ भवत्पदे एव नट्यौ तयोर्द्वयीत्यर्थः । सततभावनाशोधिते सततभावनया सन्ततध्यानेन शोधिते विगतरागद्वेषादिमले । भावनाशब्दस्य भवनानुकूलव्यापारार्थकतया सम्मार्जनादिव्यापारेण संशोधिते इति च । कनत्कनकेति । भास्वत्सुवर्णेत्यर्थः । विविधेति । विविधा विभ्रमा विलासा अलङ्कृतयश्च यस्यास्सेत्यर्थः ॥ ७ ॥

अघौघेति ॥ अघौघानां लघु क्षिप्रं भञ्जयन्तीति भञ्जनाः । मदनजिदिति । मदनजितो जटानां रञ्जयन्तीति रञ्जनाः । येषां पांसूनाम् । कणान् लेशान् ॥ ॥ ८ ॥

पदाम्बुजरजश्चयैरमरनिम्नगे स्वोल्लस-
त्कपर्दकुहरेशयैः स्फुटकलङ्कनिर्मुक्तये ।
जपारुचिमलिम्लुचैस्समुदयन् करासादितै-
स्सुधांशुररुणायते निजशरीरलेपाद्ध्रुवम् ॥ ९ ॥

भवच्चरणशारदारुणसरोजसंसर्गिभि-
र्महन्महितरेणुभिः कलितघर्षणावर्तने ।
अपाकृतमले मनोमुकुरबिम्बमध्ये स्फुटं
नदीनदशताश्रिते प्रतिफलत्यशेषं जगत् ॥ १० ॥

---

पदाम्बुजेति ॥ स्वोल्लसदिति। स्वेन आत्मना चूडामणीभूतेन उल्लसन् यः कपर्दकुहरः तद्गतैरित्यर्थः। स्वोल्लसदित्यनेन सामीप्यात्तमोनिवारणाच्च कपर्दकुहरगत रजश्चयसम्पादने सौकरी प्रोक्ता। स्फुटेत्यादि। लेपे अन्वेति। कलङ्के स्फुटत्वविशेषणेन तत्परिहारे औत्सुक्यं द्योत्यते। मलिम्लुचैः तस्करैः। तत्त्वञ्च रजश्चये लाक्षा रागादिकृतम्। समुदयन्निति। समुद्यन्नित्यर्थः। उदयावसर इति यावत्। उत्पूर्वकात् इटकिटकटिगतौ इत्यत्र प्रश्लिष्टादिकारात्मकाद्धातोः शतरि रूपम्। यद्वा, उत्पूर्वकादयधातोर्गत्यर्थकादेव शता। अनुदात्तेत्वलक्षणमात्मनेपदमनित्यमिति वचनात् शानज भावः इति ध्येयम्। करासादितैः करसम्पादितैः। ध्रुवमित्युत्प्रेक्षायाम् ॥ ९ ॥

भवदिति ॥ महन्महितरेणुभिः महद्भिः शिरसि धारणादिना महितैः पूजितैः रेणुभिः कलितघर्षणावर्तने पदाम्बुजस्य निरन्तरध्यानेन मनोनिहितत्वात् पुनः पुनः कृतघर्षणे। अत एवापाकृतमले निरस्तरागादिमले। मनोमुकुरबिम्बमध्ये मन एव मुकुरबिम्बं दर्पणतलं तन्मध्ये। अशेषं जगत् स्फुटं प्रतिफलति। सदातन त्वदीयचरणध्यानेन विशुद्धान्तरङ्गः सर्वज्ञो भवतीति पर्यवसितार्थः। नदीति। प्राचीमुखं प्रवहन्त्यो नद्यः, प्रतीचीमुखं प्रवहन्तो नदा इति विशेषः। तेषां शतैरसंख्यैराश्रिते इत्यर्थः। असंख्यातैर्नदीनदैराश्रिते इति यावत्। 'विश्वं शतं सहस्रञ्च सर्वमक्षय्यवाचकम्' इति निघण्टूक्तेः ॥ १० ॥

विलोक्य विधुना कृतां सरसिजेषु पादैर्व्यथां
भवत्पदसुहृत्सु तत्प्रतिविधेरिवाधित्सया ।
प्रणम्रपतिमस्तके कुटिलचन्द्रमर्मस्पृशो
जयन्ति विहितास्त्वया पदतलप्रहाराश्शिवे ॥ ११ ॥

चलद्दुरितवासनामरुदुदीततृष्णोर्मिका-
समाकुलभवाम्बुधौ विविधतापयादोगणे ।
निपत्य परितो भ्रमन्नहह देवि तान्तः पुन-
र्भवत्पदमहातरिं नृपशुरम्ब लप्स्ये कदा ॥ १२ ॥

परिहसितमनोभूकोटिलावण्यपूरं
जटिलमहिविभूषं नीलकण्ठं त्रिनेत्रम् ।
शवभसितविलेपं नौमि संहारलीलं
यतिवरमविमुक्ते वामसंश्लिष्टवामम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां दशमस्तरङ्गः ॥

---

विलोक्येति ॥ पादा रश्मय एव पादाश्चरणास्तैरिति कृतामित्यत्र करण तयान्वेति । भवत्पदसुहृत्स्विति । अत एव प्रतिविधानेच्छा । तत्प्रतिविधेः व्यथाप्रतीकारस्य । आधित्सया चिकीर्षया इव विहिता इत्यन्वयः । प्रणम्रेति । प्रणयकोपशमनार्थं प्रणामः । कुटिलेति । कलारूपत्वात् कुटिलस्य चन्द्रस्य मर्माणि स्पृशन्तीति तादृशाः । कुटिलत्वोक्त्या व्यथाकरणयोग्यत्वात् दण्डयत्वं सूच्यते । पदतलप्रहारा इति । अनेन दण्डनस्यापराधानुरूप्यं सूच्यते । अत्र पतिमस्तकस्य पीडानुक्त्या प्रणयकोपस्याभिनय एव । अतः चन्द्रप्रतिकारेच्छैव पादप्रहारे निमित्तमित्याशयः ॥ ११ ॥

चलदिति ॥ चलन्ती दुरितवासना कर्मवासनैव मरुद्वायुस्तेन उदीताः प्रवृद्धास्तृष्णा एव ऊर्मिकाः तरङ्गा यत्र तादृशे भवसागरे इत्यर्थः । दुरितवासनायाश्चलनं कालादिकृतं प्रेरणम् । विविधेति । विविधाः आध्यात्मिकादिभेदेन बहुप्रकारास्तापा एव यादांसि तेषां गणा यत्र तादृशे । भवत्पदमहातरिं भवत्पद एव महती नौस्ताम् , 'संसाराब्धितरण्डिके' इति स्मरणात् । नृपशुरिति । तदुक्तं काशीखण्डे, 'प्राप्य काशीं त्यजेद्यस्तु समस्ताघौघनाशिनीम् । नृपशुस्स परिज्ञेयो महासौख्यपराङ्मुखः' इति ॥ ॥ १२ ॥

परिहसितेति ॥ नीलकण्ठमिति । कण्ठस्य नैल्यं हालाहलप्रयुक्तम् । उक्तञ्च भग

तव चरणसरोजं दिव्यभृङ्गावलीढं
शिरसि वहति नित्यं देवदेवस्तदेतत्।
भजति हि भवदीये विश्वविश्वातिशायि-
न्यमरधुनि महत्त्वे साक्षिभूयं किमन्यैः ॥ २ ॥

निटिलनयनकोणादुत्थितैर्विस्फुलिङ्गै-
स्सुरतटिनि निकामं दह्यमानः सुधांशुः।
तव समधिगतो यत्सन्निकर्षं कपर्दे
मदन इव न नष्टः किन्तु लेशावशिष्टः ॥ ३ ॥

---

आरभ्य शुक्लैकादश्या दिनानि दश यानि तु ॥ पञ्चम्या यानि सा स्वर्गे भवेत् सन्निहिता सदा।' इति। 'न संख्यादेः समाहारे' इत्यह्नादेशनिषेधात् टच्। अत्यन्तसंयोगे द्वितीया। गर्भकालस्य मासदशकात्मकत्वेन तावत्कालं वासस्य मुख्यत्वेपि अशक्तौ तत्प्रातिनिध्येन वृद्धसम्मतं कालसङ्कोचमाश्रित्येत्थमभिहितम्। अभगः अभगोपि। तन्विति। तनुभिः अल्पैः। मन्दैरिति यावत्। लहरिसमीरैः वीचिवातैः। आ समन्तात् सेवितमित्यर्थः। अनेन सुखवासयोग्यता सूचिता। पीयूषयूषं पीयूषसारम्। अस्मिन्नुत्तरस्मिंश्च तरङ्गे मालिनीवृत्तम् ॥ १ ॥

तवेति ॥ दिव्यभृङ्गावलीढमिति। दिव्यभृङ्गाः—'ऋच एव मधुकृतः ऋग्वेद एव पुष्पम्, यजूंष्येव मधुकृतः यजुर्वेद एव पुष्पम्' सामान्येव मधुकृतः सामवेद एव पुष्पम्, अथर्वाङ्गिरस एव मधुकृतः इतिहासपुराणं पुष्पम्।' इति छन्दोगोपनिषदुक्ता ऋगादयः तैरवलीढं प्रतिपाद्यतया सेवितमित्यर्थः। साक्षिभूयं साक्ष्यम्। किमन्यैः प्रमाणान्तरं नापेक्षितमित्यर्थः। तदुक्तं काशीखण्डे— 'परं स्वर्गतरङ्गिण्याः कोट्यंशोपि न तत्र वै। अनेनैवानुमानेन बुध्यस्व कलशोद्भव॥ दध्रे गङ्गोत्तमाङ्गेन देवदेवेन शम्भुना' इति। अत्र तवेति तीर्थान्तरेष्वित्यर्थ· इति व्याख्या ॥ २ ॥

निटिलेति ॥ विस्फुलिङ्गैः अग्निकणैः। सुधांशु· सुधांशुरपि। तेन दहनायोग्यत्वं द्योत्यते। तथा सत्यपि दाहेन विस्फुलिङ्गानां दाहकत्वातिशयश्च। मदनः सर्वं मदयति मोहयतीति मदनः स इव न नष्ट इति व्यतिरेकेण दृष्टान्तः।

वसति हि भवदीयभ्रूलताभङ्गवश्यो
मदनरिपुरुपान्ते दासवद्विश्वनाथः।
अनितरसुलभा ते हन्त सौभाग्यलक्ष्मी-
र्जयति कुसुमबाणप्राणनाथाशरण्ये ॥ ४ ॥

क्षपितविषयतृष्णां भक्तिमेकां प्रदद्या-
स्त्वयि यदि वृषसाध्यां तर्हि जन्मप्रवाहः।
त्रिपुरमथनमान्ये कल्प्यतां मे यथेच्छं
न हि भयकणिकापि प्रत्युताहं कृतार्थः ॥ ५ ॥

---

अत इत्यादिः। लेशावशिष्ट इति। अत एवेदानीं कलाधरोऽभवद्भगवानिति भावः। गम्योत्प्रेक्षा ॥ ३ ॥

वसतीति॥ हिरवधारणे। हेतौ वा। यतस्तथा वसति, ततः अनितर सुलभेत्यर्थः। भ्रूलतेति। भ्रूलता इव भङ्गास्तरङ्गास्तेषां वश्य इत्यर्थः। भङ्गा *इव भ्रूलते इत्यपि। मदनरिपुः मदनरिपुरपि। इदञ्च वश्यतायां विरोधमुद्भाव्य* सौभाग्यस्यानन्यसौलभ्ये निमित्ततामावहद्विस्मयं पोषयति। एवं दासवद्विश्वनाथ इत्य त्रापि। हन्तेति विस्मये। कुसुमेति। स्नानादिना पतिलाभोपायभूतेन प्राण धारकत्वादिति भावः। परमेश्वरेण भस्मीकृते कामे *निर्विण्णा प्राणान्* परित्यक्तुं चितामारचयन्ती रती,'मन्दाकिन्यान्तु वैशाखे प्रातः स्नानं तथा कुरु। नूनं ते भविता पत्युरुपलब्धिर्न संशयः॥' इत्यशरीरिवचनं श्रुत्वा देहत्यागान्निवृत्ता गङ्गास्नाना दिकं *यथावदनुष्ठितवती स्वप्राणनाथं कामं* विलोकयामासेति वैशाखमाहात्म्यप्रसिद्धा कथात्रानुसन्धेया। सम्बुद्ध्या स्वरिपुमदनोज्जीवनेपि भगवतो न प्रतिकूलता जाते ति सौभाग्यस्यानन्यसौलभ्यत्वमेव सूच्यते ॥ ४ ॥

क्षपितेति॥ भक्तिमेकामिति। मुख्यां भक्तिमित्यर्थः। परानुरक्तिरूपां साध्यभक्तिमिति यावत्। भक्तिलक्षणं तु भक्तिरसायने उक्तम्—'*श्रुतस्य भगवद्धर्मा* द्धारावाहिकतां गता। सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥' इति। भगवद्धर्मो ऽत्र भगवद्गुणश्रवणम्। भगवद्धर्मेण वक्ष्यमाणकामक्रोधाद्युद्दीपनद्वारा द्रवावस्थां प्राप्तस्य चित्तस्य धारावाहिकी या सर्वेश्वरविषया वृत्तिः भगवदाकारकतेत्यर्थः। सा भक्ति

घटयितुमतिदक्षं कामितार्थानशेषां-
स्तव यदि करुणाया लेशलेशं लभेय।
अपि विबुधवराणां दुर्लभं वल्लभं ते
पुनरपि पुरमेतद्रागुपेयां पुरारेः ॥ ६ ॥

कथमपि करणानां दुर्नयानां समूहं
प्रबलमिह निरोद्धुं नैव शक्नोमि मातः।
बलमथननिषेव्ये त्वत्पदाम्भोजयुग्म-
प्रपदनपरिवर्जं नात्र पश्याम्युपायम् ॥ ७ ॥

---

रित्यभिधीयते शास्त्रविद्भिरिति तट्टीका। वृषसाध्यामिति। बहुविधपूर्वजन्मसुकृतमात्र लभ्यामित्यर्थः। तदुक्तं काशीखण्डे—'दुर्बुद्धयो दुराचारा हैतुका बहुसंशयाः। पश्यन्ति मोहिता विष्णो गङ्गामन्यां नदीमिव॥ जन्मान्तरकृतैर्दानैस्तपोभिर्नियमैर्व्रतैः। इह जन्मनि गङ्गायां नृणां भक्तिः प्रजायते॥' इति। कल्प्यतामिति। मुक्त्यानन्दापेक्षया भक्त्यानन्दस्य स्पृहणीयतरत्वस्मरणात्। प्रार्थनायां लोट्। अत एव 'अहं कृतार्थः' इति वक्ष्यते। यथेच्छमिति। नरतिर्यगादिशरीरेष्यनास्थैवेति भावः। तदुक्तं भगवत्पादैश्शिवानन्दलहर्याम्—'नरत्वं देवत्वं नगवनमृगत्वं मशकता पशुत्वं कीटत्वं भवतु विहगत्वादिजननम्। सदा त्वत्पादाब्जस्मरणपरमानन्दलहरीविहारासक्तं चेद्धृदयमिह किं तेन वपुषा॥' इति ॥ ५ ॥

घटयितुमिति ॥ दुर्लभमिति। 'देवानामपि दुर्लभं स्थलमिदम्' इति भगवत्पादोक्तेः। वल्लभं प्रियम्। पुरारेरेतत् पुरं श्रीकाशीम् ॥ ६ ॥

कथमपीति ॥ करणानाम् इन्द्रियाणाम्। दुर्नयानां दुष्टवृत्तीनाम्। श्रेयः परिपन्थिषु विषयेषु आत्मनः प्रेरकाणामिति यावत्। समूहमित्यनेन व्यक्तिबाहुल्या न्निरोधनाशक्यत्वं द्योत्यते। इह अस्मिन् जन्मनि। बलमथननिषेव्ये इति। तथा भूतायाः प्रबलनिरोधो निष्प्रयास इत्यभिप्रायः। बलमथनः इन्द्रः। तत्सेव्यत्वम् 'अहं स्नाम्यत्र सततम्' इत्यादिवक्ष्यमाणवचनसिद्धम्। प्रपदनपरिवर्जं शरणप्राप्तिं परिवर्ज्य। अत्र करणसमूहनिरोधने ॥ ७ ॥

भगवति भवदाज्ञोल्लङ्घनागस्विनं मां
विषयिणमपि दासं सर्वथा मा जहीहि ।
तव यशसि कलङ्को नूनमेवान्यथा स्या-
त्त्रिदशपुरवधूटीगीयमाने नवीनः ॥ ८ ॥

चरणसरसिजे ते दिव्यहंसैः परीते
सुरतटिनि मुनीनां मानसे भासमाने ।
रजनिकरकलाभृज्जालिनीशैवलोद्य-
द्द्युतिनि हृदयभृङ्गः सर्वदा मे रमेत ॥ ९ ॥

तव वदनसुधांशुः पार्वतीलोचनाम्भो-
रुहमुकुलनकारी कल्मषध्वान्तहारी ।
हरनयनचकोरस्वैरपेपीयमान-
प्रतिनवरुचिरन्तर्व्योम्नि मे व्याचकास्तु ॥ १० ॥

---

भगवतीति ॥ भवदिति । भवत्या आज्ञा श्रुतिस्मृत्यादिरूपा तदुल्लङ्घनेन आगस्विनम् अपराधिनम् । अपिरत्र सम्बध्यते 'श्रुतिस्मृती ममैवाज्ञे यस्त उल्लङ्घ्य वर्तते। आज्ञोच्छेदी मम द्वेषी मद्भक्तोपि न वैष्णवः ॥' इत्याश्वमेधिकवचनात्, 'तदाज्ञसक्रियां कुर्वन्मुच्यतेऽन्यस्तु बध्यते। श्रुतिस्मृतीतिहासाद्यं पुराणं भारतादिकम् ॥ ईश्वराज्ञेति विज्ञेयं न लङ्घ्या वैदिकैः क्वचित् ।' इति भगवत्पादवचनाच्च । विषयिणमिति आज्ञोलङ्घने हेतुगर्भम्। जहीहि उपेक्षस्व। 'ईहल्यघोः' इतीत्वम्। अन्यथेति । उपेक्षणे इत्यर्थः ॥ ८ ॥

चरणसरसिजे इति ॥ चरणसरसिजे चरणमेव सरसिजं तस्मिन् । दिव्य हंसैः दिव्यहंसा देवश्रेष्ठा एव दिव्यहंसाः दिव्यमरालास्तैः। मानसे मानसं मन एव मानसं तदाख्यं सरस्तस्मिन् । रजनीति। रजनिकरकलाभृत् इन्दुकलाधरस्तस्य जालिनी जटा सैव शैवलस्तया उद्यद्द्युतिनि प्रवृद्धशोभे इत्यर्थः। शैवलानुविद्धस्य सरसिजस्य रम्यतरत्वं प्रसिद्धम्। 'सा जालिनी गरुडा जटा' इति वैजयन्ती। प्रार्थनायां लिङ् ॥ ९ ॥

तवेति ॥ वदनमेव सुधांशुः । पार्वतीति । पार्वत्या लोचने एवाम्भोरुहे तयो र्मुकुलनकारी सङ्कोचकारीत्यर्थः। सपत्नीमुखदर्शनस्य दुस्सहत्वादिति भावः । हरनयनेति । हरस्य नयने एव चकोरौ ताभ्यां स्वैरं यथा तथा पेपीयमाना पुनः

अमरधुनि लभेय स्नानमत्राप्सरस्त्री-
स्तनकलशनितम्बाघातघूर्णत्तरङ्गे ।
सुहुरपि मुनिवर्यैः काङ्क्षितं सागराणा-
मजनिजनिनिदाने निर्मले वारिपूरे ॥ ११ ॥

स्वयमुपचितभक्त्या मज्जतामन्तरङ्गा-
दुपसि किमवकृष्टैर्मिश्रिता रागभारैः ।
अरुणकिरणरक्ता कोटिसिद्धेशलिङ्गे
मम मनसि समिद्धानाहरेस्तान् कदा नु ॥ १२ ॥

विगलितपदशक्ति लक्षणालक्ष्यमाणं
श्रुतिशिखरसमुत्थाखण्डधीगोचरं तत् ।
अवितथमविकारं मायिनं साङ्गमीशं
निरुपममहिमाब्धिं नौमि वाराणसीशम् ॥ १३ ॥

इति गङ्गातरङ्गिण्याम् एकादशस्तरङ्गः ।

---

पुनरास्वाद्यमाना। पौनःपुन्यकथनेन तृप्तिराहित्यं द्योत्यते । प्रतिनवा प्रतिक्षणं नूतना रुचिर्यस्य स इत्यर्थः। प्रतिनवेति । पेपीयमानत्वे हेतुगर्भम्। अन्तर्व्योम्नि हृदयान्तर्वर्त्याकाशे। दहराकाशे इत्यर्थः। व्याचकास्तु विशेषेण समन्ताच्चकास्तु ॥ १० ॥

अमरेति ॥ अप्सरःस्त्रीत्यादि। अप्सरःस्त्रीणां जलक्रीडां कुर्वतीनां स्तनकलशनितम्बानामाघातैः घूर्णन्तः तरङ्गा यत्र तस्मिन्नित्यर्थः। सुचिरं काङ्क्षितं स्नानमित्यन्वयः। अमलपूरे निर्मलजलप्रवाहे। सागराणामिति। सागराश्च सागरश्च तेषाम् अजनिश्च जनिश्च तयोर्निदाने। सगरसुतानां जन्माभावनिदाने, समुद्रस्योत्पत्तिनिदाने चेत्यर्थः, गङ्गाजलैरेव सगरसुतानामुद्धृतेस्समुद्रस्य च पूरणात् ॥ ११ ॥

स्वयमिति ॥ मज्जतां तथाभूतानां जनानामन्तरङ्गात् हृदयात् स्वयं स्वेन अवकृष्टैः आहृतैरित्यन्वयः। किमित्युत्प्रेक्षायाम्। रागभारैः रागो विषयासङ्गः रक्तवर्णश्च तयोरभेदाध्यवसायः। कोटीति। षष्टिकोटिमितशिवलिङ्गाश्रये इत्यर्थः। तदुक्तं काशीखण्डे—'गङ्गाम्भस्यपि तिष्ठन्ति षष्टिकोटिमितानि हि। सिद्धलिङ्गानि तानीशे तिष्ये ऽदृश्यत्वमाययुः ॥' इति। तिष्ये कलाविति व्याख्या। समिद्धान् प्रवृद्धान्। तान् रागभारान् ॥ १२ ॥

विगलितेति ॥ विगलितपदशक्ति विगलिता पदशक्तिर्यस्मात्तम्। शक्त्या

पदेन प्रतिपादयितुमशक्यमित्यर्थः। अत एव लक्षणालक्ष्यमाणं लक्षणया तदाख्यया वृत्त्या लक्ष्यमाणं बोध्यमानम्। तथा च वाचकाभावादुपनिषदापि कथञ्चिल्लक्षणयैव प्रतिपाद्यमानमिति समुदितार्थः। श्रुतीति। श्रुतिशिखरादुपनिषदः। महावाक्यादिति यावत्। समुत्था समुद्भूता या अखण्डधीः संसर्गाविषयकज्ञानम्, प्रातिपदिकार्थमात्रविषयकं ज्ञानं वा। तदुक्तम्—'संसर्गासङ्गि सम्यग्धीहेतुता या गिरां मिथः। उक्ताखण्डार्थता यद्वा तत् प्रातिपदिकार्थता॥' इति। निर्विकल्पकज्ञानमिति यावत्। तस्या गोचरं विषयमित्यर्थः। तत् ब्रह्म, 'ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति स्मृतेः। अवितथं परमार्थभूतम्। अविकारमिति। वार्ष्यायणपरिगणिता जननादयः षड्विकाराः तद्रहितमित्यर्थः। तत्पदस्य लक्ष्यं निर्गुणरूपमुक्त्वा वाच्यं सगुणरूपमाह—मायिनमिति। मायोपाधिकमित्यर्थः, 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।' इति श्रुतेः। साङ्गमिति। सर्वज्ञतादीनि षडङ्गानि, तत्सहितमित्यर्थः। तथा च स्मर्यते—'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥' इति। अत्र सर्वज्ञता सामान्यरूपेण विशेषरूपेण च सर्वविषयकज्ञानवत्त्वम्। तृप्तिर्भोजनाद्यभावजन्यदुःखाभाववत्ता, स्वीयसुखेच्छावान् यस्तदन्यता वा। स्वतन्त्रता अप्रतिहतेच्छा, धर्माधर्मानधीनता वा। अलुप्तशक्तिर्नित्यकृतिः। अथवा अक्षय्यशक्तिः। शक्तिः सामर्थ्यम्। अनन्तेति। शक्तेः सर्वोपादानविषयकत्वम्, सर्वविषयकत्वं वा आनन्त्यम्। अथवा असंख्येयत्वम्। विधिज्ञा वेदतत्त्वविदः इति बौद्धाधिकारदीधितौ तद्व्याख्या। ईशमिति। निखिलप्रपञ्चस्वामिनमित्यर्थः। निरुपमेति। निरुपमा असदृशा। असाधारणा इति यावत्। महिमानः महालिङ्गप्रादुर्भावे ब्रह्मविष्णुभ्यामनेकवर्षान्वेषणेनाप्याद्यन्तयोरदर्शनम्, बाणसारथ्याद्युपकरणभूतैर्ब्रह्मविष्ण्वादिभिरज्ञातनिरीक्षणमात्रत्रिपुरदाहः, समुद्रमथनोद्भूतकालकूटविषकीलाभिर्दग्धसर्वाङ्गेन्द्रोपेन्द्राद्यपेक्षितकृपावशेन तादृशकालकूटकवलीकरणम्, ब्रह्मविष्ण्वाद्यनेयकामदाहः, देव्याः स्वयंवरे शिशुरूपेण परमेश्वरेण विष्ण्वादिदेवताङ्गस्तम्भनम्, मत्स्यकूर्मवराहनारसिंहविष्वक्सेनादिनिग्रहः, ब्रह्मणः पञ्चमशिरश्छेदः, एवञ्जातीयका निरवधिप्रभावास्तेषामब्धिमित्यर्थः। वाराणसीश, वाराणसी श्रीकाशी तस्या ईश पतिम्। असिवरणया सङ्गमात् काश्या वाराणसीति

बलिमथनपदाम्भोजातराजन्मृणाली ।
स्मरमथनकपर्दोदारमन्दारमाला ।
श्रितजनसुरवल्ली मोक्षसाम्राज्यलक्ष्म्या
जयसि जयपताका शैलजे काशिकायाम् ॥ १ ॥

---

संज्ञा। तथाच काशीखण्डे—'असिश्च वरणा यत्र क्षेत्ररक्षाकृतौ कृते। वाराणसीति विख्याता तदारभ्य महामुने॥ असेश्च वरणायाश्च सङ्गमं प्राप्य काशिका।' इति। असिवरणापदे अपि तत्रैव निरुक्ते—'असिं महासिरूपाश्च पापासन्मतिखण्डिनीम्। दुष्प्रवेशं धुन्वानां धुनीं देवा विनिर्ममुः॥ वरणाञ्च व्यधुस्तत्र क्षेत्रविघ्ननिवारिणीम्। दुर्वृत्तदुष्प्रवृत्तेश्च निवृत्तिकरणी सुराः॥ दक्षिणोत्तरदिग्भागे कृत्वाऽसिं वरणां सुराः। क्षेत्रस्य मोक्षनिक्षेपरक्षां निर्वृतिमाययुः॥' इति वरणा च असिश्च तयोर्नद्योरदूरभवा। अदूरभवश्चेत्यण्, ङीप्। पृषोदरादित्वात् साधुः। 'वरणासीति नद्यौ द्वे पुण्ये पापहरे शुभे। तयोरन्तर्गता या तु सैषा वाराणसी स्मृता॥' इति शब्दकल्पद्रुमे। वामनपुराणेप्युक्तम्—'योऽसौ प्राङ्मण्डले पुण्ये मदंशप्रभवोऽव्ययः। प्रयागे वसते नित्यं योगशायीति विश्रुतः॥ चरणाद्दक्षिणात्तस्य विनिर्याता सरिद्वरा, विश्रुता वरणेत्येव सर्वपापहरा शुभा॥ सव्यादन्या द्वितीया च असिरित्येव विश्रुता। ते उभे सरितां श्रेष्ठे लोकपूज्ये बभूवतुः॥ तयोर्मध्ये तु यो देशस्तत् क्षेत्रं योगशायिनः॥ त्रैलोक्यप्रवरं तीर्थं सर्वपापप्रमोचनम्॥ न तादृशोऽस्ति गगने भूम्यां न च रसातले। तत्रास्ति नगरी पुण्या ख्याता वाराणसी शुभा॥' इति ॥ १३ ॥

बलीति ॥ बलिमथनस्य वामनमूर्तेः पदमेवाम्भोजातं जलजं तस्य राजन्ती शोभमाना स्वच्छेति यावत्। मृणालीत्यर्थः। उदारा उत्कृष्टा मोक्षसाम्राज्यलक्ष्म्याः जयपताका जयस्य पताका जयमूलकतया विजयसूचकत्वात् वैजयन्ती जयसि। मालारूपकम् ॥ १ ॥

त्रिदशदनुजपालीमन्दरोन्मथ्यमान-
प्रचलितकलशाब्धिस्फीतकल्लोलतुङ्गाः ।
हरशिरसि लसन्त्यो देवि पीयूषसारा
विषहरणसमर्था वीचयस्ते जयन्ति ॥ २ ॥

अलिकभुवि कृशानुः सर्वतः सर्पमाला
गरळमपि गळान्ते भूतसङ्घाश्च पार्श्वे ।
जगति हरमुपेतः को नु सेवेत न स्या-
त्तव यदि महिमाब्धे सन्निधानं कपर्दे ॥ ३ ॥

क्वचिदुपलतलान्तापातसञ्चूर्णिताङ्गी
क्वचिदगकुलमूलद्रोहिकूलाभिघाता ।
क्वचिदुदितनिमज्जत्प्रोच्चलन्मीनकेळि-
र्ननु न हरसि चेतः कस्य वा जह्नुकन्ये ॥ ४ ॥

---

त्रिदशेति ॥ त्रिदशानां दनुजानाञ्च पाळीभिः पङ्क्तिभिः मन्दरेण करणेन उन्मथ्यमानस्य अत एव प्रचलितस्य कलशाब्धेः क्षीरसागरस्य स्फीताः प्रवृद्धा ये कल्लोलास्त इव तुङ्गा इत्यर्थः। पीयूषसारा इति। तव वीचयः पीयूषस्य साराः, कलशाब्धिकल्लोलास्तु पीयूषस्य जनका एव। विषहरणसमर्था इति। विपूर्वकात् षोन्तकर्मणीत्यस्मात् कप्रत्यये विषशब्दः। विशेषेण हन्तीति विषं काळकूटादि, काळकूटादपि क्रूरतरः संसारो वा, तस्य हरणे विनाशने समर्था इत्यर्थः। 'स्थाणुजङ्गमसम्भूतविषहन्त्र्यै नमो नमः। दन्दशूकविषघ्नी च दारिताघौघसन्ततिः॥' इत्यादिस्मरणात्। कलशाब्धिकल्लोलास्तु विषस्योत्पादका इति भावः। उत्कर्षरूपो व्यतिरेकः ॥ २ ॥

अळिकेति ॥ अळिकभुवि ललाटदेशे। अर्थात् हरस्य। सर्वतः सर्वाङ्गेषु। हरं संहारस्वभावं, हरति उपसंहरति सर्वमिति हरः पचाद्यच्। को नु सेवेतेति। कपर्दे अमेयमहिमशालिन्यास्तव सान्निध्यादेव जना निर्भयं पुरहरमुपसृत्य सेवन्त इत्यर्थः ॥ ३ ॥

क्वचिदिति ॥ तलान्तं तलप्रदेशः। अगेति। अगकुलस्य वृक्षसमूहस्य पर्वतसमूहस्य च। मूलं द्रोग्धि उत्पाटयतीति तथाभूतः कूलाभिघातः तीरे आस्फा

स्वरसकलितलीलालोलवर्षश्रियोंसा-
द्गलितधवलपट्टः किन्नु वातोत्तरङ्गः।
इति सुरधुनि शङ्कां तावकीना ददाना
कलयतु जनमेतं वेणिका वीततापम् ॥ ५ ॥

कमलजनिलये वा नाकिनामालये वा
स्मरमथनजटायां वाथवा काशिकायाम्।
विहर हिमधरे वा स्वेच्छया भृत्यतां मे-
वितर गिरिसुते ते पादसंवाहिनीनाम् ॥ ६ ॥

भवनमिदमियम्मे प्राणनाथा सुतोऽयं
सुहृदयमियमम्बा बान्धवोऽयं पितायम्।
इति बहुविधमोहैः पाशयित्वा भवाब्धौ
पशुमिममभिपात्य प्राप्तमम्ब त्वया किम् ॥ ७ ॥

---

लग्नं यस्यास्सेत्यर्थः। उदितेति। उदिता प्रवृद्धा निमज्जतां प्रोच्चलताम् उन्मज्जतां मीनानां केळिर्यत्र तथाभूते इत्यर्थः। नन्वित्यादि। नन्वित्यामन्त्रणेऽवधारणे वा। सर्वेषां चेतो हरस्येवेत्यर्थः ॥ ४ ॥

स्वरसेति॥ स्वरसेन स्वेच्छया कलिता कृता या लीला तया लोलाया श्चलाया वर्षश्रियः भारतवर्षलक्ष्म्या इत्यर्थः। लोलेत्यन्तेन गळने हेतुः प्रदर्शितः। स्वरसेत्यनेन लीलायामौत्सुक्यं द्योत्यते। अंसादिति। अत्रांसत्वेन रूपणं हिमवतः। गळितधवळपट्टः स्खलित्वा लम्बमानोत्तरीयांशुकः। किन्विति सम्भावनायाम्। अनया भारतभूमेर्मुख्यालङ्कारत्वं गङ्गायाः सूच्यते। वातोत्तरङ्गः वातेन उद्धूतः, वातेन उद्गततरङ्ग इति च। वेणिका जलप्रवाहः ॥ ५ ॥

कमलजेति॥ कमलजनिलये इत्यादि। सत्यलोकादीनां पञ्चानां गङ्गाया मुख्यस्थानत्वात्। विहरेति। कामचारे लोट्। वक्ष्यमाणमदभीष्टप्रदाने पुनर्मदर्थेऽश्रद्धा त्वया न कर्तव्या, यथावत्स्वेच्छाविहारेणैव स्थीयतामिति भावः। वितरेति। तावतैव मे कृतार्थतेति भावः। पादसंवाहिनीनां तादृशीनां परिचारिकाणाम् ॥ ६ ॥

भवनमिति॥ मोहैः भ्रमैः। पाशयित्वा निबध्य। उक्तमोहैर्निबन्धनञ्च तेष्वात्मीयत्वभ्रममुत्पाद्य तत्सुखसम्पादनाय तद्दुःखनिवर्तनाय चायासनेन तद्दुःखदुःखि

भ्रमणनिचयमेवं प्रापितो मोचनीयः
श्रममधिकमवाप्तो दीनशाखामृगोऽयम्।
तव गतमतिमेनं ताडयित्वा फलं किं
दशनविवृतिमार्ये कष्टमालोकयन्त्याः ॥ ८ ॥

शिशिरकिरणकोटिप्रौढशोभासुपीमै-
रशरणमनुकम्पासारपूराभिपूर्णैः ।
स्नपय गिरिसुते मां दिक्षु कर्पूरधूळी-
निकरमिव किरद्भिर्मङ्क्षु मातः कटाक्षैः ॥ ९ ॥

---

स्वकरणेन च श्रेयोमार्गप्रवेशप्रतिबन्धविधानम्। पशुम् अविवेकिनम्। किं प्राप्तमिति। स्वार्थसत्तायामपि परपीडनमनुचितमिति स्थिते स्वार्थस्य लेशमपि विना तदिदम नार्यचेष्टितं जगदम्बायास्तव नो युज्यत इत्येवं मा कृथा इति भावः ॥ ७ ॥

भ्रमणेति॥ भ्रमणनिचयो जननमरणप्रवाहरूपः। एवं यथा मयाऽनुभूयते तथा। सर्वस्यापि स्वस्वेरणाधीनत्वात् प्रापित इत्युक्तम्। मोचनीयः भ्रमणान्मोचयितुमर्हः। तत्र हेतुमाह—श्रममधिकमिति। दीनशाखामृग इति। दीनो दुर्बलः। तेन पीडासहत्वं त्वत्कृपामन्तरा विमुक्त्यक्षमत्वं च द्योत्यते। भीत इति वा। स चासौ शाखामृगः। शाखास्विव विषयेषु चक्रमशीलत्वात् शाखामृगत्वरूपणम्। ननु त्वया बहुधा दुष्कृतानि कृतानि, तदेवं दण्ड्यसे इत्यत आह। गतमतिमिति। कृत्याकृत्यविमूढमित्यर्थः। तथाचापराधस्याबुद्धिपूर्वकत्वात् दण्डितस्यापि इतः परं नैवमपराधः कर्तव्य इति विवेकानुदयाच्च बालवन्न दण्डार्ह इति भावः। ताडयित्वेति। ताडनञ्च प्रकृते बहुविधं विपदा क्लेशनमेव। दशनविवृतिं दन्तप्रकटनम्। विपज्जनितदुःखानुभावानां दशनविवृतित्वेन रूपणम्। आर्ये दयादिसद्गुणशालिनि। हीनजनः कीशं पाशेन बध्वा प्रतिग्रामं प्रतिद्वारं समाकृष्य तत्र तत्राभिनयं कारयित्वा तां तां भिक्षामादाय वृत्तिं करोति। तस्य हि तज्जन्तुहिंसा स्वाभाविकी सप्रयोजना च। आर्यायास्तव तद्वन्मद्दुःखदर्शनेन किं वा फलमिति भावः ॥ ८ ॥

शिशिरेति॥ शोभायां प्रौढत्वोक्त्या शिशिरकिरणानां पूर्णता प्रतीयते। तथाचानन्तपूर्णचन्द्रकिरणवत् सुपीमैः शीतलैरित्यर्थः। अनुकम्पेति। अनुकम्पायाः

अमृतनिकरवर्षि त्र्यक्षमान्याभिपातं
विकसदरुणपद्मप्रौढिसर्वस्वहारि ।
दुरितकलितपीडातापितस्याद्रिकन्ये
शिरसि मम निधेहि श्रीपदं तावकीनम् ॥ १० ॥

यमसदनकवाटीबन्धघोषो महीयान्
त्रिदिवनवपदव्या देवि निर्माणघोषः ।
अररदलनघोषो मोक्षलक्ष्मीगृहस्य
श्रवणयुगमियात्त्वन्नामघोषस्सदा मे ॥ ११ ॥

अमरपुरपुरन्ध्रीदिव्यमत्तेभकुम्भ-
प्रतिभटकुचलेपैर्वासिते सेविते च।
सुरमुनिमनुजैस्ते स्वच्छतीर्थेऽत्र गङ्गे
जरितदुरितजातः स्नामि भूयः कदा नु ॥ १२ ॥

---

सारः तस्य पूरेण प्रवाहेण अभिपूर्णैरित्यर्थः। स्नपय आसिञ्च। गततापं कुर्वि त्यर्थः। मङ्क्षु क्षिप्रम्। कटाक्षैः अपाङ्गदर्शनैः। 'अपाङ्गे तारविक्षेपः कटाक्ष इति कथ्यते' इति भावप्रकाशः ॥ ९ ॥

अमृतेति ॥ स्पर्शे निरतिशयसौख्यप्रदत्वात् सर्वतापापनोदकत्वाच्च तथोत्प्रेक्षा। त्र्यक्षेति। त्र्यक्षेण प्रणयकलहावसरेषु मान्यः शिरसि अभिपातो यस्य तदित्यर्थः। अत्र अमृतनिकरवर्षीति विशेषणम् अभिपातस्य त्र्यक्षमान्यतायाम्, निधानस्य प्रार्थनायाञ्च हेतुगर्भम् ॥ १० ॥

यमसदनेति ॥ कवाटी कवाटम्। 'कवाटश्च कवाटी च त्रिषु स्यादररं न ना' इति वाचस्पतिः। अत्र रूपकम्। एवमुत्तरत्रापि। त्रिदिवनवपदव्याः त्रिदिवस्य स्वर्गस्य तत्प्रापिकाया इत्यर्थः। नवपदव्याः नूतनमार्गस्य। अररेति। अररस्य कवाटस्य दळनम् उद्घाटनम्। तस्य घोष इत्यर्थः ॥ ११ ॥

अमरेति ॥ अमरपुरपुरन्ध्रीणां स्वर्वेश्यानां ये दिव्यमत्तेभस्य ऐरावतस्य कुम्भयोः प्रतिभटाः कुचास्तेषां लेपैः कस्तूर्यादिभिः स्नानकाले गळितैः वासिते सुरभीकृते। स्तनानामैरावतकुम्भसादृश्योक्त्या पीनत्वलाभात् नलिप्तकस्तूर्यादीना

निखिलमपि नमो यल्लक्षणं मुख्यवृत्त्या
न हि वदति यदन्यानीश्वरेशादिशब्दः ।
अविषयहृदयानां यः परस्ताद्यतीनां
सुरसरिदनुरक्तं नौमि काश्यान्तमुग्रम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां द्वादशस्तरङ्गः

माधिक्यं प्रतीयते। तेन सौरभ्यबाहुल्यं च। सेवित इति। सुरमुनिमनुजैः सेविते इत्यन्वयः। अनेन देवनद्या हिमवतः पृथ्व्यां प्रवहन्त्या नद्याश्चैवयं 'येयं गङ्गा नरैस्सेव्या सेव्यते सा सुरैरपि। सर्वेषां पावनी सैका प्रयच्छति परं पदम् ॥' इति न्यायरत्नावल्यामुदाहृतवचनसिद्धं सूचितम्। स्वच्छेति। निर्मलजलेत्यर्थः अनेन सुखस्नानयोग्यता प्रदर्शिता। जरितदुरितजातः जरितानि निश्शेषं नाशितानि दुरितजातानि येन तथाभूतस्सन्। यद्वा, भूते क्तः,स्नानपूर्वकालिकदर्शनादिना दुरितानां नाशात्। स्नामीति। सामीप्ये लट् ॥ १२ ॥

निखिलमिति ॥ नमः नमस्कारः। यल्लक्षणं यस्य लक्षणम्। स्वामितया व्यावर्तकम्। 'यस्मै नमः तस्मै त्वा जुष्टं निर्युनज्मि', 'यस्मै नमस्तच्छिरः' इत्यादिश्रुतिभ्यः परमेश्वरस्यैव नमस्कारस्वामित्वावधारणादिति भावः। तथाच हरदत्ताचार्याः—'देव त्वदेकविषयाणि नमांसि पुंसां यस्मै नमः श्रुतिबलादवधारयामः। देवान्तरेषु विहितान्यपि तान्यमूनि स्रोतांसि सागर इव त्वयि सम्पतन्ति ॥' इति। अत्र यस्मै नमः श्रुतिबलादिति। शिवाय पशुनियोजनादिप्रतिपादिकाया मुक्तश्रुतौ नमस्त्वावच्छेदेन यत्पदोक्तचतुर्थ्यन्वयबलादित्यर्थः। 'दत्तं नमः क्रिमुप शुश्रुम देवताभ्यस्त्वामन्तरेण नमसामवसानभूमिम्। तास्तद्ग्रहीतुमनलं नहि कश्चिदीष्टे चोरोपनीतमिव धारयितुं किरीटम् ॥' इति च। अत्र अनलमिति। असमर्था इत्यर्थः। न हि कश्चिदीष्ट इति। अन्यदीयत्वान्नैवेश्वर इति भावः। मुख्यवृत्त्या शक्त्या। 'यस्मिन्नीश्वर इत्यनन्यविषयश्शब्दो यथार्थाक्षरः' इति कालिदासः। अविषयहृदयानां विषया हृदये येषां ते विषयहृदयाः, ते न भवन्तीत्यविषयहृदयाः विरक्तास्तेषां परस्तात् श्रेष्ठ इत्यर्थः। तथापि सुरसरिदनुरक्तमिति विरोधाभासः। लोकोत्तरत्वेन दर्शितविरोधं परिहरिति। उग्रमिति। सर्वोत्तरमित्यर्थः।

## त्रयोदशस्तरङ्गः ।

क्षीरोदवारिधवळो विपभृद्वतंसः
सिन्धौ समर्पिततनुश्च सहस्रवक्त्रः ।
लोकाश्रयो हरिपदस्पृगहो बिभर्ति
शेपस्त्वयाम्ब कुटिलस्तुलनाभिमानम् ॥ १ ॥
वीक्षेय किन्तु पुरुहूतपुरीपुरन्ध्री-
व्याधूतचामरमरुच्चलिताळकाग्रम् ।
स्वप्नेपि वा तव सुधांशुशतायुताभ-
मास्यं दरस्मितममन्दकृपाकुलाक्षम् ॥ २ ॥

---

उग्रशब्दः उत्तरवाच्यप्यस्ति, 'उग्रोऽस्युग्रोऽहं सजातेपु भूयासम्, इत्युग्रत्वस्या शास्यत्वश्रवणात् । तथाच 'उत्पूर्वात् गमेः उद्गच्छत्युत्तरो भवतीत्यस्मिन्नर्थे 'ऋज्रेन्द्राग्रवज्र' इत्यौणादिकसूत्रेण रन्प्रत्ययान्ततया निष्पन्नोऽयमुग्रशब्दः। तदुक्तं ब्रह्मतर्कस्तवे—'उग्रस्त्वमुत्तरतया जगतः समस्ताद्भूयासमुग्र इति तत्परता हि दृष्टा' इति ॥ १३ ॥

क्षीरेति ॥ क्षीरोदवारिधवळ इत्युभयत्र समानम्। विपभृद्वतंसः सर्पश्रेष्ठः, अन्यत्र विपभृतो नीलकण्ठस्य वतंसः शिरोभूपणम्। सिन्धौ क्षीरसागरे समर्पित तनुः शयानः, अन्यत्र सागरे समर्पिततनुः तत्रैव गङ्गायाः पतनात् । सहस्रवक्त्र इति । शेपस्य सहस्रफणत्वात्, पक्षे गङ्गायाः सहस्रमार्गैरेव सागरे पतनात्। लोकाश्रय इति । अनन्तस्य जगतीधारणात् , जगद्रक्षकत्वाच्च। 'पाता विश्वस्य शश्वत्' इति भगवत्पादाः। पक्षे पापहरणादिति बोध्यम्। हरिपदस्पृगिति। एकत्र पादविन्यासात् , परत्र पादोद्भूतत्वात् । कुटिलः कुटिलगतिः। तुलनाभिमानमिति। न परमार्थतस्तुलना, पारम्यस्यानन्तत्वादिति भावः। इतः प्रभृति तरङ्गत्रये वसन्त तिलकं वृत्तम् ॥ १ ॥

वीक्षेयेति ॥ स्वप्नेपि वा वीक्षेय किन्वित्यन्वयः। दरस्मितेति। मन्दस्मि तेत्यर्थः ॥ २ ॥

स्वान्ते सदा शरदुदाशयसाधुजात-
व्याकोचनव्यसरसीरुहकान्तिचोरम् ।
उद्भासतां पदयुगं तव देवपाळी-
कोटीरकोटिघटितामलरत्नदीप्रम् ॥ ३ ॥

क्वाहं सदैव विषयाभिनिविष्टदृष्टि-
र्देवि क्व ते बुधवरार्थितरूपवीक्षा ।
आशा तथापि भवतीह तवानुकम्पा
जायेत चेत् किमिव दुर्घटमस्ति लोके ॥ ४ ॥

भूयस्समीरणमहाहतिजातरोषा—
दुद्गच्छतः सपदि तत्पदवीं निरोद्धुम् ।
सालानिवाम्ब बृहतः क्रमिकांस्तरङ्गा-
नभ्रङ्कषांस्तव मुहुः पुरतो नतोऽस्मि ॥ ५ ॥

---

स्वान्त इति ॥ शरदुदाशयः शरत्कालिकजलाशयः । साधुजातेति । जलचरादिबाधारहितं यथा तथा जातेत्यर्थः । व्याकोचं विकसितम् । देवपालीति । देवपालीनाम् अर्थान्नमस्कुर्वतां देवसङ्घानां कोटीराणां कोटिषु अग्रेषु घटितैः प्रत्युप्तैः अमलरत्नैः दीप्रं प्रकाशमानमित्यर्थः । अत्र विशेषणाभ्यां क्रमेण स्वाभाविकः कृत्रिमश्च शोभातिशय उक्तः ॥ ३ ॥

क्वाहमिति ॥ बुधवरेति विशेषणं प्रार्थनायां हेतुः । आशेति । एवं दुरितार्जनबद्धदीक्षाणां त्वद्रूपवीक्षणमसम्भाव्यमपि दुर्घटघटनापटीयस्यास्तवानुकम्पाया लाभे तस्याः सुशकत्वात्तत्र प्रत्याशा जायत इत्यर्थः । परन्तु तादृशानुकम्पालाभमावश्यकमिति भावः । इह रूपवीक्षायाम् । पूर्वार्धे विषमालङ्कारः, उत्तरार्धे अर्थान्तरन्यासः ॥ ४ ॥

भूय इति ॥ तत्पदवीं वायुमार्गम् । निरोद्धुमुद्गच्छत इति योजना । सालान् प्राकारान् । बृहतः पीनान् । क्रमिकान् क्रमेणोत्पन्नान् । अत्र निरोद्धुमिति गम्या फलोत्प्रेक्षा । सालानिवेत्युपमा ॥ ५ ॥

धर्मे गत प्रबलया कलिबाधया स्वां
शक्तिं समर्प्य निखिलां त्वयि निर्भयायाम् ।
प्राणेश्वरि श्रुतिमिते वृषवाहनस्य
सर्वात्मनाद्य जगतां शरणं त्वमेव ॥ ६ ॥

---

धर्म इति॥ कलिबाधयेति । बाधा चानादरस्य वैकल्यस्य च सम्पादनरूपा। शक्तिं पापनाशकत्वसुकृतोत्पादकत्वादिरूपाम् । समर्प्येति । समर्पणं तु लोकानुग्रहण रूपं स्वकृत्यं निर्वहणीयमित्यभिप्रायेण, यथा चोराद्युपद्रवेण स्वकीयं धनं रक्षितुमशक्त स्तद्रक्षार्थं विश्वस्ते बलवत्यर्पयति, तथेति भावः। एतेनास्मिन् युगे गङ्गाया एव निखिलधर्मकार्यकारितेति सूचितम्। निर्भयायां कुतोपि भयहीनायाम् , 'अत्युदाराऽभयाऽशोका' इति स्मरणात् । अभया न विद्यते भयं यस्याः सा, अद्वितीयत्वात् । 'द्वितीयाद्वै भयं भवति' इति श्रुतेरिति तद्व्याख्या । तथाच कलिबाधाराहित्यात् धर्म स्त्वयि स्वां शक्तिमार्पयदिति भावः। प्राणेश्वरीति। वृषवाहनस्य प्राणेश्वरीति सम्बन्धः। अनया सम्बुद्ध्यापि निखिलधर्माणां गङ्गाधीनत्वं सिद्ध्यति, वृषो धर्मः वाहनं यस्य तथाभूतस्य परमेश्वरस्य प्राणेश्वरीति तदर्थत्वात्। धर्मस्य वाहनत्वञ्च स्कान्दे स्मर्यते —'कल्पान्ते संहृतिं कृत्वा स्वयमेको महेश्वरः। ननर्त परमं भावं स्वातन्त्र्यञ्चात्मनः स्मरन्॥ एकोमा साक्षिणी विद्या चतुष्पष्टिकलेश्वरी। यस्यां वेदाश्च मन्त्राश्च सं स्थिता ह्यङ्गताङ्गताः॥ तदा नाहो न रात्रिश्च न विष्णुर्न प्रजापतिः। नाकाशादीनि भूतानि किम्पुनर्भौतिकं जगत्॥ धर्मः स्वावतनुः शम्भोर्दृष्ट्वा नष्टञ्चराचरम्। नाशो ममेति भीयुक्तो वृषो भूत्वेशमाश्रितः॥ मा भून्नाशो वृषस्येति तच्चक्रे वाहनं शिवः। सर्वदा त्वविनाशाय वाहनत्वं भजस्व मे॥ कृते चर चतुष्पात्त्वं परिपूर्णमनोरथः। त्रेतायान्तु त्रिभिः पादैर्द्वापरे त्वं द्विपाद्भव॥ त्वं चरैकेन पादेन कलौ धर्म कथञ्चन। अत एव कलौ सर्वे प्राणिनः पापकारिणः॥' इत्यादि। श्रुतिमिते श्रवणमात्रगोचरे। विरलीभूते इति यावत्। सति सप्तमी। इदानीं वर्तमानयागादीनामङ्गवैकल्यादिना नापूर्वोत्पादकत्वमिति धर्माभासत्वमेवेति भावः। अद्येति। इदमत्राकूतम्—देवालयादीनि हि स्वत उपासनादिधर्मानुष्ठानस्थानानि, इदानीन्तु तानि सर्वाण्यप्याचण्डालं सर्वेषां प्रसभप्रवेशनेन देवसान्निध्यशून्यानि पूजनाद्यनर्हाणि च संवृत्तानि। तदुक्तं तत्त्वप्रदीपिकायाम्—'चोरपातकिचण्डालचातुर्वर्ण्यबहिष्कृताः। श्वानः पाषण्डका वर्ज्या

धर्मप्रभावरहितेऽत्र युगे त्वहीन-
शक्तिं विहाय कश्चित्सुलभामपि त्वाम्।
क्लेशोत्कटानभिलपन्ति पुनर्विधातुं
यागादिकांस्त्रिपथगे कियदस्ति मौढ्यम् ॥ ७ ॥

सन्तस्त्यजन्ति दुरितानि महान्त्यजस्र
हन्त त्वदम्भसि न तैस्तव लेपलेशः।
त्वन्मज्जने कलयतां सरिदन्तराणा-
मुत्कीर्तनं विमलसत्त्वतनो विलेपः ॥ ८ ॥

---

म्लेच्छदेशसमुद्भवा ॥ जम्बुका पतिता नारी पुष्पिता च तथैव च। तैस्तु सम्मिश्रितै रन्यैरन्त्यजैश्चैव पद्मज॥ देवे सन्निहिते स्पृष्टे पुन कलशसम्भव। मृते गर्भगृहासन्ने रक्तादिपतने तथा॥ अद्भुतोक्तक्रमेणैव शान्तिं कुर्याद्विचक्षण।' इति। ज्ञानोदये च, 'चण्डालपतितोदक्याद्दुर्जनस्पर्शनादिपु। स्नानशुद्धिश्च कर्तव्या बिम्बशुद्धिश्च शान्तये॥' इति। विष्णुस्मृतौ च, 'हारेष्वन्तर्मण्डले च प्रासादेपु प्रवेशनम्। पातन्याशौचिपापण्ड वप्तृणा रजकस्य च॥ म्लेच्छाना तन्तुवायादिवर्णबाह्यजनस्य च। पुष्पिता सूतिका कारुचण्डालाना क्रमाद्गुरु॥ वितानाग्निनिभ विष्णोर्बिम्बमुत्पातदूषितम्। अकृतायान्तु निष्कृत्यामपूज्य सर्वथा बुधै॥' इति। एवञ्चैवविधे कालेयकालकालुष्य विजृम्भणे विश्वपावनी त्वमेव जगता गतिरिति ॥ ६ ॥

धर्मेति॥ अहीनशक्तिम् अविलुप्तशक्तिम्, पुष्करादिभिरिव गङ्गया निजशक्तेरन्यत्रासमर्पणादिति भाव। तथाच नारदीयवचनम्— 'कलौ तु सर्व तीर्थानि स्व स्व वीर्यं स्वभावत। गङ्गाया प्रतिमुञ्चन्ति सा तु देवी न कुत्र चित्॥' इति। सुलभा निर्यत्नसेव्याम्। त्वा विहाय त्वत्सेवा विहायेत्यर्थ। क्लेशोत्कटान् विषमान्। बहुविधक्लेशैरनुष्ठातुमशक्यानित्यर्थ। त्रिपथगे इति। त्रिभिर्लोकत्रयगतै पथिभिर्मार्गै गच्छति प्रवहतीति त्रिपथगा, तस्या सम्बुद्धि। तदुक्त स्कान्दे—'तारयेत् क्षितिजान् मर्त्यानध स्थाश्च सरीसृपान्। स्वर्गे स्वर्ग सदो विष्णो गङ्गा त्रिपथगा तत॥' इति ॥ ७ ॥

सन्त इति॥ सन्त बहव सज्जना। गङ्गानिषेवणोद्योगितया सत्त्वम्। त्यजन्ति स्नानादिनेत्यर्थ। दुरितानि, अत्रापि बहुत्व विवक्षितम्। महान्ति

दैवात्त्वदीयमहिमामृतलेशलेशं
पीत्वापि जाह्नवि भवद्विमुखो भवाब्धौ।
व्यर्थीकृतद्विजजनिः करणैकवश्यः
पारं स्पृशन्निव कथञ्चन हाऽस्मि मग्नः ॥ ९ ॥

प्राणप्रयाणसमये समुपस्थिते मां
भूयः कृतागसमपि प्रबलामयैस्त्वम्।
दीनं भिपक्तमकुटुम्बिनि मा त्यजैनं
दासं तदा गणय मा विविधापराधम् ॥ १० ॥

---

ब्रह्महत्याप्रभृतीनि। हन्तेत्याश्चर्ये। ते दुरिते। न लेपलेश न संक्रमलेश, 'निर्लेपायै नमो नम' इति स्मरणात्। निर्लेपत्वञ्च उपाधिगुणदोषसम्बन्धराहित्यम्। तच्च गङ्गाया तटाके सुराया मूत्रादौ वा प्रतिबिम्बमानस्य रवेरिव गङ्गायामुपपन्नम्। पुनस्तल्लेप केपाञ्चिदस्तीत्याह—त्वदिति। विमलेति। विमलं रजस्तमोभ्यामसङ्कीर्णं सत्त्वं सत्त्वगुण एव तनुर्मूर्तिर्यस्यास्तादृशीति सम्बुद्धया लेपलेशाभावे हेतु प्रदर्शित। तदुक्तं काशीखण्डे—'विभावरी च विरजा विक्रान्तानेकविष्टपा' इति। अत्र विगतं रज यस्या. सा विरजा. शुद्धसत्त्वेत्यर्थ इति व्याख्या। विलेप इति। गङ्गास्नानविधौ तीर्थान्तरसङ्कीर्तनस्य 'तीर्थमन्यत् प्रशंसन्ति गङ्गातीरे स्थिताश्च ये। गङ्गां न बहुमन्यन्ते ते स्युर्निरयगामिन ॥' इत्यादिवचनेन निषिद्धत्वादिति भाव। तीर्थान्तरस्नाने च गङ्गासङ्कीर्तनस्य न निषेध, 'स्नानकालेऽन्यतीर्थेषु जप्यते जाह्नवी जनै। विना विष्णुपदीं कान्यत् समर्थमघमोचने ॥' इति काशीखण्डवचनात्, 'यो गृहे स्वे स्थितोपि त्वा स्नाने सङ्कीर्तयिष्यति। सोपि यास्यति नाक वै इत्याह वरणश्च ताम् ॥' इति नारदीयवचनाच्चेति बोध्यम् ॥ ८ ॥

दैवादिति ॥ त्वदीयेति। त्वदीयमहिमैव अमृतं तस्य लेशलेश शीकरकणं पीत्वापि त्वन्महिमातिशय किञ्चित् किञ्चित् ज्ञात्वापीत्यर्थ। साकल्येन ज्ञातुमशक्यत्वात् लेशलेशमिति। अमृतेत्यनेन आस्वाद्यता सूचिता। पारमित्यादि। अम्भोधिं सन्तरन् परं पारं कथञ्चिदुपागत सन्नपि तमधिरोढुमशक्तो भूत्वा यथा मग्नो भवति, तथेत्यर्थ ॥ ९ ॥

प्राणेति ॥ प्रबलामयैर्दीनमिति सम्बन्ध। सम्बुद्धया आमयप्रशमनसामर्थ्यं द्योत्यते। तदा प्राणप्रयाणसमये ॥ १० ॥

यस्याः प्रभावमवगन्तुमशक्नुवन्तो
मुह्यन्त्यकुण्ठमतयो मुनिमार्कभौमाः।
तस्याः स्तुतौ तव तरङ्गितमाहसिक्यः
कुर्वे क्षमार्थनमह बहुशः कृपाब्धे ॥ ११ ॥

याता यदीयपरिपावनतोयलेश-
सस्पर्शतः परगतिं सगरात्मजास्ते।
आनन्दकाननकृताधिकवैभवे ते
स्नायां कदा पुलकितः पुनरत्र तीर्थे ॥ १२ ॥

स्फुटतरमभिनेतु शङ्खिनो पद्मिनी श्री-
मुरजिदजसुरेशान् वज्रिणी चापि मुद्रा।
भवति भरतकलसा य तु बद्धोऽञ्जलिस्मा
शिरसि नतिनिधान नौमि त काशिकेशम् ॥ १३ ॥

इति गङ्गातरङ्गिण्या त्रयोदशस्तरङ्ग ।

---

यस्या इति ॥ मुह्यन्ति यत्प्राभवविषये मूढा भवन्ति, गङ्गाप्रभावस्य स्कन्दमात्र विदितत्वादिति भाव । स्मर्यते च—'त्वत्तो न वेद स्कन्दान्यो गङ्गागर्भसमुद्भव। पर स्वर्गतरङ्गिण्या महिमान महामते॥' इति। अकुण्ठमतय अप्रतिहतबुद्धयोपि। तस्या तथाभूतप्रभावशालिन्यास्तव। तरङ्गितसाहसिनय जृम्भितसाहस,। तव स्तुतौ कस्यापि सामर्थ्याभावादिति भाव । तदुक्त भगवत्पदै —'प्रायश्चित्त यदि स्यात्तव जलकणिका ब्रह्म हत्यादिपापे कस्त्वा स्तोतु समर्थस्त्रिजगदघहरे देवि गङ्गे प्रसीद॥' इति ॥ ११ ॥

याता इति॥ ते कपिलवासुदेवकोपाग्निदग्धा। आनन्देति। आनन्द कानन श्रीकाशी, तत्र तस्य च कृत उत्पादित प्रकटितो वा अधिकवैभवा महि मातिशय येन तस्मिन्। सम्बुद्ध्यन्त वा। आनन्दकाननपदस्य काशीपर्यायत्व काश्या गङ्गाया प्रभावाधिक्यञ्च 'अस्यानन्दवन नाम पुराऽकारि पिनाकिना। क्षेत्र स्यानन्दहेतुत्वात्' इति, 'सर्वत्र सिन्धु सर्वत्र पुण्या ब्रह्महत्यापहारिणी। काश्या विशेषतो विष्णो यत्र चोत्तरवाहिनी॥ गङ्गैव केवला मुक्त्यै निर्णीता परितो हरे। अविमुक्ते विशेषेण ममाधिष्ठानगौरवात्॥' इति च काशीखण्डवचनसिद्धम ॥ १२ ॥

स्फुटेति॥ श्रीमुरजिदजसुरेशान् श्रीविष्णुब्रह्मेन्द्रान्। स्फुटतरमभिनेतु मिति। यथा मुद्रया तथा नेतरेणाभिनय स्फुटो भवतीत्यत उक्तम्—स्फुटतर

विश्वंम्भराधरवरान्वयभाग्यवल्लीं
विश्वम्भरस्य चरणध्वजवैजयन्तीम् ।
कन्दर्पदर्पहरमङ्गलमौलिभूषां
भागीरथीं भगवतीं भवतीं भजेऽहम् ॥ १ ॥

---

मिति। भरतक्लृप्ता श्रीभरतमुनिविहिता मुद्रा क्रमेण शङ्खिनी पद्मिनी वज्रिणी चापि भवति। यं तु अभिनेतुं भरतक्लृप्तेरयनुपपद्यते। सा मुद्रा शिरसि बद्ध अञ्जलिर्भवति। अतो विशदं य एव नमोभूमिरितीति भावः। तदेवाह—नति निधानमिति। नतीनां निखिलनमसां निधानम् अवसानभूमिम्। अन्ततः प्राप्य स्थानमित्यर्थः। तथाच मरुतः प्रस्तुत्य बह्वृचास्समामनन्ति—'स्तोमं वो अद्य रुद्राय शिकसे क्षयद्वीराय नमसा दिदिष्टन। येभिश्शिवस्स्ववान् एवयावभिर्दिवः सिषक्ति स्वयशा निकामभिः' इति। अस्य मन्त्रस्यायमर्थः—हे मरुतः स्तोमं स्तोत्रं वो युष्माकं शिकसे शक्ताय निग्रहानुग्रहक्षमाय क्षयद्वीराय क्षयन्ति निवसन्ति वीरा वीरभद्रादयो गणा यमाश्रित्य तस्मै रुद्राय नमसा नमस्कारेण सह दिदिष्टन दिशत। येभिः स्तुतिनमस्कारैः स्ववान् तेषां स्वामीत्यर्थः। स्वयशाः अनन्यसाधारणयशाः एवयावभिः एतव्याः कामाः तेषु यावभिः आपतद्भिः कामे कामे समापतद्भिरित्यर्थः। निकामभिः नितरां कामैः कामितैः दिव्यन्तीति दिवः देवाः तान् युष्मान् सिषक्ति संयोजयतीति तस्मादन्यविषयाणामपि नमसामीश्वर एव पर्यवसानम्। एतदभिप्रायिकैव 'यस्मै नमस्तच्छिरः'इत्यादितैत्तिरीयकश्रुतिः। ननु केशव एव नमस्कारभूमिः, 'आकाशात् पतितं तोयं यथा गच्छति सागरम्। सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥' इति स्मृतेरिति चेत्सत्यम्, अस्य वचनस्य स्मृतित्वेन 'स्तोमं व.' इत्यादिश्रुतिविरोधात् विरोधाधिकरणन्यायेन सर्ववेष्टनस्मृतिवदप्रामाण्यात्। स्पष्टमेतत् श्रुतिसूक्तिमालायामिति ॥ १३ ॥

विश्वेति॥ विश्वम्भराधरवरः भूधरश्रेष्ठो हिमवान् तस्य अन्वयस्य कुलस्य भाग्यवल्लीम्। हिमवत्कुलनिखिलभाग्यहेतुत्वादिति भावः। विश्वम्भरस्य विष्णोः

शोकं भुवश्शमयितुं त्रिदिवात् स्खलन्ती
　बद्धाऽसि यत् स्मरहरेण कपर्दमध्ये।
अत्रापराध्यति परं घनवेणि लोभं
　निर्लोभहृत्स्वपि तवाकलयन् गुणौघः　　॥ २ ॥

नित्यं विधिर्वितनुतां बहुधा समाधिं
　शेतां हरिः कमलया फणिराजतल्पे।
शम्भुः प्रनृत्यतु मुदा सह भूतसङ्घै-
　र्जागर्षि चेज्जननि कामभिदासवित्री　　॥ ३ ॥

---

चरण एव ध्वजस्तस्य वैजयन्तीम्। कन्दर्पदर्पहरः परमेश्वरः तस्य मङ्गळ मौलिभूषाम्। कन्दर्पदर्पहरेत्यनेन कामाधिकसुन्दरत्वमपि प्रतीयते। भगवतीम् ऐश्वर्यादिषड्गुणसम्पन्नाम्। अत्र प्रथमं हिमवतः समुत्पत्तिः, ततः पुण्डरीकाक्षस्य पावतामाप्तिः, तदनन्तरं महेश्वरशिरःपातः, ततश्च सागराणामुन्नयनश्चेति क्रमो विशेषणैः सूच्यते　　॥ १ ॥

शोकमिति॥ स्खलन्ती पतन्ती। कपर्दमध्ये कं शिरः पिपर्ति पूरयतीति कपर्दः जटाजूटः तन्मध्ये। अत्र बन्धने। गुणौघः अपराध्यतीति सम्बन्धः, बन्धनस्य गुणमूलकत्वात्। दृश्यन्ते हि लोके जनाः गुणवत्सान्निध्यसम्पादनाय यतमानाः। परं केवलम्। गुण एवापराध्यति, न तु भवतीति भावः। अथ च विरक्तस्य स्मरहरस्यापि लोभोत्पादकः सौन्दर्यादिगुणानां गण एव तव कपर्दे बन्धावाप्तौ हेतुरिति भावः। घनवेणीति सौन्दर्यातिशयं व्यञ्जयति　　॥ २ ॥

नित्यमिति॥ वितनुतामित्यादि कामचारे लोट्। विध्यादिकृत्यानां त्वया एकयैव निर्वहणादिति भावः। जागर्षि सन्नद्धा तिष्ठसि चेदिति सिद्धानुवादे। कामेति। कामभिदानां कामितविशेषाणां सवित्री जनयित्री क्षिप्रदात्रीत्यर्थः　　॥ ३ ॥

कुष्ठादिदुस्तरगदेषु किल स्वभाव-
सिद्धौषधिप्रकरसारभरप्रभावम्।
पेयं तवातिमधुरं सलिलञ्च लेपो
मृत्स्ना च जप्यमपि जाह्नवि नामधेयम् ॥ ४ ॥

अभ्रङ्कपाग्रभवदीयतरङ्गमालां
निश्रेणिकामहमवैमि गतागतार्थम्।
स्नानैषिणां दिविषदां त्वयि तीर्थतीर्थे
क्लृप्तामघौघहृति नित्यमुदग्वहायाम् ॥ ५ ॥

---

कुष्ठादीति ॥ कुष्ठादिदुस्तरगदेष्विति पेयादित्रये अन्वेति। स्वभावेति। स्वभावसिद्धः औषधिप्रकरस्य सारभरः प्रभावः सामर्थ्यविशेषश्च यस्य तादृशम्। इदं लिङ्गविपरिणामेन मृत्स्नायाश्च विशेषणम्। पेयं कषायादि। मधुरमित्योषध्युत्पादिताद्विशेषः। जप्यं जपार्हो मन्त्रविशेषः। गङ्गायाः सर्वौषधिसारवत्त्वादेव काशीखण्डे, 'ये व्याधयोऽपि दुस्साध्या बहिरन्तश्शरीरगाः। श्रद्धयेशोदकस्पर्शात्ते नश्यन्त्येव नान्यथा॥' इति ॥ ४ ॥

अभ्रङ्कषेति ॥ अभ्रङ्कपाग्रभवदीयतरङ्गमालां त्वयि स्नानैषिणां दिविषदां गतागतार्थं क्लृप्तां निश्रेणिकाम् अधिरोहिणीम् अवैमीति सम्बन्धः। तीर्थतीर्थे इति। 'तर्पणी तीर्थतीर्था' इति स्मरणात्। तीर्थानां तीर्थं तीर्थत्वं यया इति तद्व्याख्या। अघौघहृति ब्रह्महत्यादिनिखिलपापहन्त्र्याम्। इदञ्च पुण्यदातृत्वस्याप्युपलक्षणम्। नित्यमिति स्नानैषिणामित्यत्रान्वेति। उदग्वहायाम् उत्तरवाहिन्याम्। तथाच काशीखण्डे—'कामप्रदानि तीर्थानि त्रैलोक्ये यानि कानि चित्। तानि सर्वाणि सेवन्ते काश्यामुत्तरवाहिनीम्॥ स्वस्सिन्धुः सर्वतः पुण्या ब्रह्महत्यापहारिणी। काश्यां विशेषतो विष्णो यत्र चोत्तरवाहिनी॥' इति। तत्रैव स्थलान्तरे, 'स्वर्गे प्रार्थितसंस्पर्शा सैषा स्वर्गतरङ्गिणी' इति। अत्र व्याख्या—यद्यपि स्वर्गतरङ्गिणी गङ्गा स्वर्गे वर्तते एव, तथापि काश्यधिकरणिकाया उदग्वहाया अतिशयितत्वेन दुर्लभत्वात् स्वर्गे प्रार्थितसंस्पर्शेत्युक्तमिति। अत्र तरङ्गमालायां निश्रेणिकात्वोत्प्रेक्षा ॥ ५ ॥

सोपानवीथिमधत्तोच्चलदूर्मिपङ्क्तिं
मन्ये कृतां समधिरोढुममर्त्यलोकम् ।
भागीरथीह भवदीयमहापवित्र-
तीर्थाप्लवक्षपितसञ्चितदुष्कृतानाम् ॥ ६ ॥

आविर्भवाम्ब मम पापविपाकजात-
सन्तापितस्य पुरतः सरितां वरेण्ये ।
येन त्वदीयतनुकान्तिसुधाप्रवाहे
मग्नो लभेय लघु निर्वृतिमत्युदाराम् ॥ ७ ॥

नामानि ते निखिलकिल्बिषनाशनानि
पीयूषसारसरसानि च जीवनानि ।
प्राणोत्क्रमे मम भवन्तु समस्ततीर्थ-
धर्मामरादिवमते रसनाश्रयाणि ॥ ८ ॥

---

सोपानेति ॥ सोपानवीथिं सोपानपरम्पराम् । ङीषो विकल्पादिकारान्तत्वम् । उच्चलदिति । उन्नतेत्यर्थः । अधिकोच्चलदूर्मिपङ्क्तिं सोपानवीथिं मन्ये इत्युत्प्रेक्षा । इह भूतले । भूतलस्थानां तादृशजनानामित्यर्थः ॥ ६ ॥

आविर्भवेति ॥ - प्रत्यक्षीभवेत्यर्थः । पापेति । पापानां विपाकः परिणामः फलं रोगादिः तेषां जातेन समूहेन सन्तापितस्येत्यर्थः । सरितां वरेण्ये सरितामुत्तमे । तदुक्तं स्कान्दे—'तीर्थानामुत्तमं तीर्थं सरितामुत्तमा सरित् । स्वर्गदा सर्वजन्तूनां महापातकिनामपि ॥' इति । येन आविर्भावेण । त्वदीयेति । त्वदीयतनुकान्तिः त्वद्दिव्यशरीरकान्तिरेव सुधाप्रवाहस्तस्मिन्नित्यर्थः । लघु क्षिप्रम् । अत्युदाराम् अत्युत्कृष्टाम् । अपुनस्तापामिति यावत् ॥ ७ ॥

नामानीति ॥ निखिलकिल्बिषनाशनानि सर्वपापहराणि । इदं श्रेयस्साधनत्वस्याप्युपलक्षणम् । पीयूषसारसरसानि पीयूषसारा इव सरसानि मधुराणि । उभयमिदं नामसु जीवनेषु च विशेषणम् । जीवनानि जलानि । प्राणोत्क्रमे प्राणोत्क्रमणकाले । भवन्त्विति । एतावदेव प्रार्थ्यते । तल्लाभे संसारनिवृत्त्या देवत्व [illegible]

पाशेन कर्षति तनु यमराजदूत-
 पाशे निरोपयति कण्ठमुदात्तवार्यौ ।
नामाक्षराणि तव देव्यमृतायमाना-
 न्यम्बूनि तानि च विना क इहावलम्बः ॥ ९ ॥
स्वच्छन्दकल्पितजगत्त्रितये कृपाया
 लेशस्तवास्ति यदि किं दुरितानि कुर्युः ।
कर्मानुरोधि सममित्यपहाय नाट्य-
 मम्बाविलम्बमव मामवलम्बहीनम् ॥ १० ॥

---

आदिपदेन पुण्यक्षेत्रादीनां परिग्रहः । तथाच स्मर्यते काशीखण्डे—'त्रैलोक्ये यानि तीर्थानि पुण्यक्षेत्राणि यानि च । सर्वत्र सर्वे ये धर्मास्सर्वयज्ञास्सदक्षिणाः ॥ तपांसि विष्णो सर्वाणि श्रुतिः साङ्गा चतुर्विधा । अन्यच्च यच्च कश्चापि देवतानां गणाश्च ये ॥ पुरुषार्थाश्च सर्वे वै शक्तयो विविधाश्च याः । गङ्गायां सर्व एवैते सूक्ष्मरूपेण संस्थिताः ॥' इतीश्वरवचनम् । रसनाश्रयाणि रसना आश्रयो येषां तानि । रसनास्थितानीत्यर्थः । इदमत्र बोध्यम्—'गङ्गा गङ्गेति यैर्नाम योजनानां शतेष्वपि । स्थितैरुच्चारिता हन्ति पापं जन्मत्रयार्जितम् ॥' इति विष्णुपुराणसिद्धम्, 'अश्रद्धयापि गङ्गाया यस्तु नामानुकीर्तनम् । कराति पुण्यवाहिन्यास्सोऽपि स्वर्गस्य भाजनम् ॥' इति नारदीयवचनसिद्धं च नाम्नां पापनाशकत्वम् । ब्रह्मवैवर्ते चतुस्त्रिंशाध्याये बहुविधगङ्गामाहात्म्यवर्णनानन्तरं राधां प्रति श्रीकृष्णवचनम्—'वैकुण्ठगामिनां सा च सोपानरूपिणी वरा । अतोऽपि मृत्युसमये सतां पुण्यस्वरूपिणाम् ॥ आदौ भूमौ च सन्न्यस्य मुखे तोयं प्रदीयते । गङ्गासोपानमारुह्य सन्तो यान्ति निरामयम् । आब्रह्मलोकं सल्लङ्घ्य रथस्थाश्च निरापदः ।' इति । अनेन पूर्वोपदर्शितवचनेन च चरमकाले गङ्गाजलपानस्य परमपदप्रापकत्वं स्पष्टम् । अत्र सन्न्यस्येत्यस्य दर्भास्तरणादिभूसंस्कारादिपूर्वकमवारोप्येत्यर्थः ॥ ८ ॥

प्रकारान्तरं दुर्लभमित्याह—पाशेनेति ॥ कर्षति आकर्षति सति । यमराजदूतपाश इति । यमराजदूतापाशद इत्यर्थः । अपमदत्र वाक्यबुद्ध्या बोध्यम् ॥ उदात्तवार्यौ दीर्घश्वासे । तानि किल्बिषनाशकत्वादिना पूर्वोक्तानि । इह क्लेशे ॥ ९ ॥

स्वच्छन्देति ॥ स्वच्छन्दकल्पितजगत्त्रितये यथेच्छमनिर्मितभुवनत्रयात्मिविषयिणि । किं कुर्युरिति । कृपाया दुरितार्जितदुःखनिरोधकत्वादिति भावः । नर्बोधग

आत्मानमर्पितवता सकलैः स्वकीयैः
प्रेमास्पदैस्सह मया त्वयि वाऽविशङ्कम्।
किं प्रार्थनीयमिह यत्सकलास्त्वदीया
भारस्तवैव खलु जाह्नवि पालनं नः ॥ ११ ॥

बालावलीहृदयहारिविहारभिन्न-
विचीचयस्खलितशीकरशीतलेन ।
वातेन वीतभवतापमितः परं ते
नेष्यामि देवि तटसीम्नि कदा दिनानि ॥ १२ ॥

---

अपि कर्माधीनाः, अत एव परमेश्वरस्यापि पिशाचचर्यादिकम्, मम च गर्भधारणादि क्लेशः, किं पुनस्त्वादृशानां जीवानामित्यतो दुरितफलमवश्यं त्वया अनुभोक्तव्यमेवेति चेत्तत्राह—कर्मेति। समं सर्वम्। नाट्यम् अभिनयम्। अनियन्त्रितशक्तेस्तव गर्भ धारणादिकं परमेश्वरस्य पिशाचचर्यादिवज्जगदनुग्रहाय विडम्बनमात्रम्, न कर्माधीनम्। 'अहो विभूम्नश्चरितं विडम्बनम्' इति भागवतवचनसिद्धं भगवतः पिशाचचर्याया विडम्बन त्वम्। एवं महापापिनामपि त्वदीयजलकणिकादिस्पर्शमात्रेण महाभ्युदयप्राप्तिस्मरणात् भवत्प्रसादसत्त्वे पापानां न दुःखकरणसामर्थ्यमिति जीवविषयेपि तव न कर्मसापेक्ष त्वमिति भावः। अव रक्ष। मयि कृपां कुर्वित्यर्थः। अवलम्बहीनम् अनन्य शरणम् ॥ १० ॥

अथवा प्रार्थनैव न युज्यत इत्याह—आत्मानमिति॥ अर्पितवतेत्यादि। आत्मार्पणं च प्रेमरूपसख्यभक्तेः फलरूपः आत्मनिवेदनाख्यो भक्तिविशेषः। तद्व तश्च, पूर्वस्वामिनो विक्रीतस्य गवादेर्योगक्षेमचिन्तायामिव स्वकीयायां तस्यामभिनि वेशो न सम्भवतीति निमित्ताभाव इति भावः। स च भक्तिविशेषस्त्रिधा। 'तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा।' भगवच्छरणत्वं स्यात्साधनाभ्यासपाक्तः॥ इति स्मरणादिति ध्येयम्। वेति पक्षान्तरे। अविशङ्कम् अङ्गीकारे रक्षासामर्थ्ये वा शङ्कां विना। इह त्वदग्रे। यत् यस्मात्। कथं तर्हि तेषां रक्षेत्यत आह— भार इति। नः त्वदीयानामस्माकम् ॥ ११ ॥

बालेति॥ बालावलीनां कुमारपरम्पराणां हृदयहारिणो ये विहारा जलक्रीडा स्तैः भिन्नात् भेदं प्राप्ताद्वीचीचयात स्खलितैः शीकरैर्जलकणैः शीतलेनेत्यर्थः। वीतभव तापं वीतः अपगतः भवतापो यस्मात्तथेति क्रियाविशेषणम् ॥ १२ ॥

क्वचिदपि न सहान्यैर्दैवतैर्यस्सहेत
प्रणतिनिनुतिहूती: किन्तु क्रुप्येदमूभि: ।
इति विसदृशरीत्या हूयते मन्त्रवर्णै-
रसममनधिकन्त नौमि काशीशमाद्यम् ॥ १३ ॥

इति गङ्गातरङ्गिण्या चतुर्दशस्तरङ्ग

---

क्वचिदिति ॥ क्वचित् क्वापि कर्मणि । विनुति स्तुति हूतिराह्वानम् । अमूभि अन्यदैवतै सह प्रणतिनिनुतिहूतिभि । य क्रुप्येत् । परमशिवा देवान्तरै सह प्रणामादीन् न सहते । पृथक्कृतैस्तैरेव तुष्यति । यस्तु देवान्तरै सह तान् करोति, तस्मै क्रुप्यति च । तथाच रुद्रसूक्ते श्रूयते—'मा त्वा रुद्र चुक्रुधाम नमोभिर्मा दुष्टुती वृषभ मा सहूती' इति । अस्यायमर्थ — हे रुद्र नमोभि देवान्तरै सह नमस्कारै दुष्टुती दुष्टुत्या देवान्तरैस्सदृशस्तुत्या सहूती सहूत्या सहाह्वानेन मा चुक्रुधाम न कोपयाम इति । नैरुक्ता व्याचक्षते च— किञ्च तुल्यनमस्कारैर्देवतान्तरगामिभिर्दुष्टुत्या सदृशस्तुत्या समानाह्वानकर्मणा न वय चुक्रुधाम त्वा त्वा सर्वदेवनमस्कृतमिति । स्कान्दे सूतसंहितायाञ्च, 'खद्योतो यदि चण्डभानु सदृशस्तुल्यो हरि शम्भुना निम्बाको यदि चन्दनेन सदृश' इत्यादि । शिव तत्त्वनिरूपणे च, 'यो महादेवमन्येन हीनदेवेन दुर्मति । सकृत्साधारण ब्रूयात्सोऽन्त्यजो नान्त्यजोऽन्त्यज ॥' इति । आदित्यपुराणेपि, 'विश्वेश्वरमुमाकान्त विश्वान्तर्यामिण विभुम् । न ब्रह्माद्यैस्सम ब्रूयाच्छक्तिभिर्नैव पार्वतीम् ॥ ब्रूयाद्यदि सम शम्भु ब्रह्मविष्ण्वादिभि सुरै । य कश्चित्तमसाऽविष्ट कदाचिन्नैव त स्पृशेत् ॥' इति । तथा पराशरपुराणेपि, 'महादेवसम विष्णु मनुते यस्तु मानव । तस्य वंशस्य साङ्कर्यमनुमेय विपश्चिता ॥' इति । उक्तञ्च हरदत्ताचार्ये —'देवान्तरैर्स्सह नमस्तुतिहूतयस्ते तोषाय नालमलमेव विपर्ययाय ।' इति । विसदृशरीत्या देवान्तराह्वानविलक्षणरीत्या । हूयते आह्वयते । मन्त्रवर्ण 'प्रातरग्निम्' इत्यादिरूपै । तदप्युक्तम् तैरेव—'अग्न्या दिभिस्तव महेश्वर हूतिशङ्का मा भूदिति प्रकृतमप्यनुपह्वयोग्यम् । मन्त्र क्रियापद मपास्य पदान्तरेण त्वामाह्वयन्नुतपदेन भिनत्ति रीतिम् ॥' इति । श्रुतौ कुपेर्णिजन्ता ल्लुङि चङि द्वित्वे 'न माङ्योगे' इत्यटा निषेधे चुक्रुधामेतीति बोध्यम् । असमम् अस

गङ्गे द्विधा भवसि हैमवती हिमाद्रेः
पुत्री सरोजभवसद्मलसत्प्रवाहा ।
मन्दाकिनी च गलिता बलिमाथिपादात्
भेदाविमौ मम मनस्सरणौ सरेताम् ॥ १ ॥

घोरैर्भगीरथनृपो द्रुहिणं तपोभि-
र्गोकर्णमेत्य परितोष्य तदाज्ञयेशम् ।
आराध्य देवि शिरसा तव दुष्प्रधर्ष-
वेगप्रवाहवहनं वरमाप तस्मात् ॥ २ ॥

---

दृशम् । अनधिकं न विद्यते अधिकः अतिशयितः उत्कृष्टो यस्मात्तम् । तथाच श्रूयते—'ततो यदुत्तरतरं तद्रूपमनामयम् ॥ न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥' इति । 'निरस्तसाम्यातिशयोपि यस्स्वयं पिशाचचर्यामचरत्सतां गतिः ।' इति भागवतेपि । आद्यमिति । सर्वकारणत्वादिति भावः ॥ १३ ॥

वामनपुराणरामायणादिस्वरससिद्धं गाङ्गं विशेषमभिधातुं गङ्गां मूर्तिभेदेनानुसन्धत्ते—गङ्गे द्विधेत्यादि ॥ गङ्गे इति अंशिरूपदेवतामुद्दिश्य सम्बुद्धिः । हैमवती संज्ञाया निमित्तमाह—हिमाद्रेः पुत्रीति । सरोजेत्यादि । सत्यलोकस्थितेत्यर्थः । अत्र लक्षयोजनविस्तीर्णो लक्षपञ्चयोजनदीर्घश्च प्रवाहः, 'लक्षयोजनविस्तीर्णा दैर्घ्ये पड्गुणिता ततः । आवृता सत्यलोकं या तां गङ्गां प्रणमाम्यहम् ॥' इति ब्रह्मवैवर्तवचनात् । बलिमाथिपादात् त्रिविक्रमपादात् । सरेतां प्रवहेताम् । स्फुरेतामिति यावत् ॥ १ ॥

तत्र हैमवतीवृत्तमाह—घोरैरिति ॥ तपोभिरिति । तच्च वर्षसहस्रदीर्घमित्युक्तं रामायणे । ईशाराधनार्थञ्च तत् सांवत्सरिकमिति च । गोकर्णमुत्तरगोकर्णम् ।

तस्याथ पूरयितुमम्ब महाभिलापं
सत्यालयादहह हैमवती स्रवन्ती ।
श्रीमन्महानटजटाटविगह्वरान्त-
रम्यापतः पिहितसर्वदिगन्तराळा ॥ ३ ॥

गाङ्गं नभस्तलगळद्विपुलप्रवाहं
दुर्धार्यवेगमपरो न सहेत लोके ।
श्रीधूर्जटेरिति वदन् स्फुटयाञ्चकार
व्यासः प्रभावमतुलं तव भारताद‍ौ ॥ ४ ॥

---

तदाख्यया प्रसिद्धं हिमवत्पादविशेषम् । 'सूर्यवंशे महातेजा राजा परमधार्मिक. । आरिराधयिषुर्गङ्गां तपसे कृतनिश्चयः ॥ हिमवन्तं नगश्रेष्ठममात्यन्यस्तराज्यधू. । जगाम यशसां राशिरुद्दिधीर्षुः पितामहान् ॥' इति स्कान्दवचनात्, 'रम्यं बिन्दु सरो नाम यत्र यातो भगीरथः । गङ्गानिमित्तं राजर्षिरुवास बहुळाः समाः ॥' इति वायुपुराणवचनाच्च । तदाज्ञया द्रुहिणाज्ञया 'इयं हैमवती गङ्गा ज्येष्ठा हिमवतः सुता । तां वै धारयितुं शक्तो हरस्तत्र नियुज्यताम् ॥' इत्येवंरूपया । ईशं हरम् । आराध्य प्रसाद्य । तपोभिरित्यस्यात्रापि सम्बन्धः । दुष्प्रधर्षेति । दुर्निरोधेत्यर्थः । तस्मात् हरात् ॥ २ ॥

तस्येति ॥ श्रीमदिति । श्रीमतो महानटस्य परमशिवस्य जटैवाटवी तस्या गह्वरान्तः महाकुहरान्तर्भागे इत्यर्थः । श्रीमत्त्वं सर्वशक्तत्वरूपम् ॥ ३ ॥

गाङ्गमिति ॥ इदञ्च प्रवाहविशेषणम् । दुर्धार्यवेगं दुर्धार्यो वेगो यस्य तत् । धूर्जटेरिति । धूर्भारभूता जटिः जटा, 'जटिर्जटा' इति द्विरूपकोशात् । यस्य तस्य महेश्वरस्येत्यर्थः । भारतादाविति । आदिना भागवतादिपरिग्रहः । महाभारते भगीरथं प्रति गङ्गावचनम्—'करिष्यामि महाभाग वचस्ते नात्र संशयः । वेगन्तु मम दुर्धार्यं पतन्त्या गगनाद्भुतम् ॥ न क्षमस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप । अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात्' इति ॥ ४ ॥

सर्वंसहापि न सहेत मदीयवेगं
दुर्वारमीश्वरशिरःप्रतिरोधनेपि
इत्याकलय्य शिरसो गिरिराजि गङ्गे
सप्ताकृतिर्भगवती भवती प्रपात ॥ ५ ॥

कुम्भोद्भवेन महिमैकमहार्णवेन
पीतः सरित्पतिमहो चुलुकेन रोषात् ।
आपूर्य जह्नुतनयेत्यभिधां प्रपन्ना
नाकं भगीरथपितॄन् समुपानयस्त्वम् ॥ ६ ॥

---

सर्वंसहेति ॥ सर्वंसहापि तथाभूतापि भूमिः। गिरिराजि हिमवत्पर्वते। गङ्गे इति। इदानीमेव त्वं गङ्गा जातेति भावः। तथाच भविष्ये—'यस्मा द्भगीरथो देवि स्वर्गाद्गां त्वामिहानयत्। अतस्त्वं मुनिभिः सर्वैर्गङ्गेति परिकी र्त्यसे ॥' इति। सप्ताकृतिः सप्त आकृतयः स्रोतांसि यस्यास्तथाभूता सती। एकधारासम्पाते हिमवानपि न सहेत इति बुद्ध्येव सप्तभिः प्रवाहैः प्रवृत्ता पपा तेत्यर्थः। व्यङ्ग्योत्प्रेक्षा। 'गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्धनि' इति भोजः। 'तत्र मुक्ता च शर्वेण सप्तधा लवणोदधिम्। प्रविवेश' इति मार्कण्डेयपुराणे च ॥ ५ ॥

कुम्भोद्भवेनेति ॥ श्रीमदगस्त्यमुनिनेत्यर्थः। मित्रावरुणयोरुर्वशीदर्शनात् स्कन्नं रेतस्ताभ्यां कुम्भे निषिक्तम्। तस्मादगस्त्यो जज्ञे। तथाच श्रुतिः—'कुम्भे रेतःसिषिचतुःसमानम्' इति। महिमेति। विन्ध्यमर्दनक्रौञ्चभर्त्सननदीनदसमुत्पा दनदिगीशधिकारवातापिभक्षणादिमहामहिम्नामनन्यनिवासभूतेनेत्यर्थः। पीतमिति। तदुक्तम्—'समुद्रतीरमासाद्य भस्मादायाभिमन्त्रितम्। आजुहावाम्बुधिं पाणि प्रसार्य स महामुनिः ॥ तदानीञ्चागतश्चाब्धिं करे नीहारबिन्दुवत्। प्राशया मास तं ध्यात्वा महादेवमृषीश्वरः ॥' इति। समुद्रशोषणे हेतुस्तु समुद्र माश्रित्य सन्निलीनानसुरान्निहन्तुमक्षमाणां देवतानामगस्त्यं प्रति प्रार्थना। तदुक्तं भविष्यत्पुराणे उत्तरपर्वणि—'सम्मन्त्र्य निश्चयं मेरौ ततोऽगस्त्यमुपागताः। विवर्धयिषवस्तेजो मुनेरस्य दिवौकसः ॥ तेऽगस्त्यमाहुर्ब्रह्मर्षे समुद्रं शोषयस्व वै। तच्छ्रुत्वागस्त्यविप्रोपि ह्याग्नेयीं धारणान्दधत् ॥ तया पीतस्समुद्रोपि भ्रान्तमीनो

मन्दाकिनी विधिकमण्डलुसम्भृताम्भ-
स्संक्षालिताद्रलिभिदश्चरणात् क्षरन्ती ।
एकेन खं जननि भास्यमरोपयोगि-
नांशेन यासि च परेण समेत्य मेरुम् ॥ ७ ॥

श्रीमत्त्रिविक्रमवटोरवतारकाले
मेरौ निपत्य सततं धरणौ क्षरन्ती ।
सा विष्णुपद्यपि भगीरथभूमिपेन
नीता दिवः पुरभिदा च धृता कथं स्यात् ॥ ८ ॥

---

मिकच्छपः । पीते समुद्रतोयेपि देवैः क्रुद्धैस्तु दानवाः ॥ क्षयन्नीताः क्षणात्सर्वे क्रन्दमानाः पुनः पुनः । क्षेमं जगत्त्रयमभूत्सर्वमगस्त्यर्षेः प्रभावतः ॥' इति । जह्नुतनयेत्यभिधां प्रपन्ना सरित्पतिमापूर्येत्यन्वयः । स्वयज्ञविनाशनात् क्रुद्धेनाचम्य पुनर्भगीरथाराधनात्तुष्टेन जह्नुना श्रोत्राभ्यां विसर्जनाज्जह्नुतनयेत्यभिधा । यथाच रामायणम्—'ततस्तुष्टो महातेजाः श्रोत्राभ्यां व्यसृजत् प्रभुः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जाह्नवीति च ॥' इति । श्रीमदगस्त्यनिपीतसमुद्रस्य गङ्गाम्भुना पूरणादि कथा आरण्यपर्वणि स्पष्टा । एकेनैव स्रोतसा भगीरथपथानुगमनं बोध्यम् । 'तासु प्राचीं गतास्तिस्रः तिस्रः प्राचेतसीं दिशम् । अन्या पितृक्रियोद्युक्तभगीरथपथानुगा ॥' इति भोजः । समुपानय इति । पातालं गत्वा भस्मीभूतान् सगरपुत्रान् स्वाम्भसाऽप्लाव्य तज्जनितपुण्यात् स्वर्लोकवासिनश्चकर्थेत्यर्थः ॥ ६ ॥

मन्दाकिनीति ॥ मन्दाकिनीरूपा त्वमित्यर्थः । खम् आकाशम् । समेत्येत्यस्यात्राप्यनुषङ्गः । तथाचोक्तं कूर्मपुराणे—'अथाण्डभेदादपतच्च शीतलं महाजलं तत् पुण्यकृद्भिश्च जुष्टम् । प्रवर्तते चापि सरिद्वरा तदा गङ्गेत्युक्ता ब्रह्मणा व्योमसंस्था ॥' इति । गगननिष्ठस्य मन्दाकिन्यंशस्य प्रयोजनमाह—अमरोपयोगिनेति । देवानां विहारोपयोगिना इत्यर्थः । तथाचोक्तं विष्णुपुराणे—'ततः प्रवहति ब्रह्मन् सर्वपापहरा सरित् । गङ्गा देवाङ्गनाङ्गानामनुलेपनपिञ्जरा ॥' इति । या सीति । चतस्रो दिश इत्यादिः । तथाच विष्णुपुराणम्—'मेरुपृष्ठे पतत्युच्चैर्निष्क्रान्ता शशिमण्डलात् । जगतः पावनार्थाय या प्रयाति चतुर्दिशम् ॥' इति । मार्कण्डेयपुराणेपि, 'पपात मेरुपृष्ठे च सा चतुर्धा ततो ययौ ।' इति ॥ ७ ॥

श्रीमदिति ॥ त्रिविक्रमेति । त्रयः विक्रमाः विशिष्टाः पादविक्षेपा यस्य, त्रिषु त्रिषु जीवेषु लोकेषु वा विक्रमः पराक्रमो यस्य इति वा त्रिविक्रमः ।

देवि त्वदीयपरिपावनरूपभेद-
श्रीहैमवत्यमरनिम्नगयोः स्रवन्त्योः।
व्योम्न्यंशमिश्रणवशान्मुनिराडभेदं
व्यासोऽनुचिन्त्य बहुधाऽचकथत् कथास्ते ॥ ९ ॥

---

वतारकाले अवतारकाले एव। दिवः सत्यालयात्। कथं स्यादिति। तथाच गीरथाद्विदूरपूर्वत्रिविक्रमावतारकालमारभ्य मेरौ निपत्य भुवि प्रवहन्त्यां सत्यां वेष्णुपद्यां तस्या भगीरथेन सत्यालयादानयनं तत्कृते मूर्ध्ना शङ्करेण वहनञ्च न टत इति त्रिविक्रमपादप्रभूता मन्दाकिनी न भगीरथेन नीता महेश्वरेण ध्रियते। केन्त्वन्या ब्रह्मलोकस्थिता हैमवतीत्यायातम्। एतेन हरशिरसि लसन्त्या गङ्गायाः गावित्र्यातिशयो न त्रिविक्रमाङ्घ्रिस्पर्शेन, अपि तु स्वत एवेति दर्शितम्। तेन च शेषस्य शिरसा विष्णुपादोदकधारणरूपः कैश्चिद्वालिशैरुद्भावितोऽपकर्षो विदूरं विधूतः। सर्वमिदं ब्रह्मतर्कस्तवव्याख्यायां दीक्षितचरणैस्सयुक्तिकं प्रप ञ्चितम् ॥ ८ ॥

एवं सति, 'यच्छौचनिस्सृतसरित्प्रवरोदकेन तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत्' इत्यादिव्यासवचनविरोधं परिहरति—देवीति॥ त्वदीयेत्यादि। त्वदीय परिपावनरूपभेदयोः श्रीहैमवत्यमरनिम्नगयोः श्रीहैमवतीमन्दाकिन्योरित्यर्थः। स्रव न्त्योः प्रवहन्त्योः। सत्यालयात् श्रीत्रिविक्रमपादाच्च। भुवमिति शेषः। अंश मिश्रणवशात् अंशेन भागेन मिश्रणवशात् मेळनाद्धेतोः। मुनिराट् मुनिश्रेष्ठः। विष्णोरवताररूपत्वात्, श्रीकृष्णस्य पञ्चकलोद्भूतत्वाच्च। 'जातः पराशराद्योगी वासव्यां कलया हरेः', 'व्यासो नारायणस्स्वयम्' इत्यादिपुराणवचनात्। 'सम्प्राप्य निर्मलं ज्ञानं भ्रमविध्वंसदीपकम्। पुराणसूत्रं कृत्वा स व्यासः पञ्चकलोद्भवः॥ त्वां निषेवे प्रदध्यौ च शतवर्षञ्च पुष्करे। तदा त्वत्तो वरं प्राप्य स कवीन्द्रो बभूव ह॥' इति ब्रह्मवैवर्तवचनात्, 'ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे। ज्ञान शक्त्यवताराय नमो भगवतो हरेः॥' इति भामतीकारवचनाच्च। अभेदम् ऐक्यम्। अनुचिन्त्य उपचर्य। अचकथत् कथितवान्। लुङ्। पुराणेष्विति भावः ॥ ९ ॥

कन्याद्वयं हिमवतः कुटिलेत्युमेति
ख्यातं तयोः शशिरुचिः प्रथमाऽब्जयोनेः।
वेश्मादरेण किल तारकदैत्यभीतै-
र्नीता गणैर्दिविपदां प्रतिगृह्य तस्मात् ॥ १० ॥

जातां ततो जलमयीं विधिरात्मशापा-
द्देवैर्बबन्ध किल तां भवतीं प्रवृद्धाम्।
तत्याज वह्निरपि तत्र महेशवीर्यं
स्कन्नं निपीय विवशस्त्वयि ते वचोभिः ॥ ११ ॥

---

प्रसङ्गाद्धैमवत्याः सत्यालयप्राप्तिप्रकारं दर्शयति—**कन्याद्वयमिति** ॥ कुटिलेति। सैव पुनर्हैमवती गङ्गा परिणता। उमा श्रीपार्वती। प्रथमा ज्येष्ठा कुटिला। पुराणप्रसिद्धिं द्योतयति। किलेति। दिविपदां गणैः रुद्रवसुभास्करसहितैर्देवसङ्घैः। प्रतिगृह्येति। तारकहन्तुः सेनान्या उत्पादनाय शिवस्य दारार्थे प्रार्थनापूर्वकं प्रतिगृह्येत्यर्थः। तस्मात् पितुर्हिमवतः। 'कन्यकास्ति कुटिलेति हिमाद्रेः ज्यायसी स्मरणतोप्यघहन्त्री। शङ्कराय वितरीतुममर्त्यास्सत्यलोकमनयन्त शिशुं ताम् ॥' इति वसिष्ठवचनम् ॥ १० ॥

**जातामिति** ॥ आत्मशापाज्जलमयीं जातामित्यन्वयः। बबन्धेति। अत्र वामनपुराणवचनम्—'दिवाकरैश्च रुद्रैश्च वसुभिश्च तपस्विनी। कुटिला ब्रह्मलोकन्तु नीता शशिकरप्रभा ॥ अथोचुर्देवता. सर्वा· किन्वियं जनयिष्यति। पुत्रं तारकहन्तारं ब्रह्मन् व्याख्यातुमर्हसि ॥ ततोऽब्रवीत्सुरपतिर्नेयं शक्ता तपस्विनी। शार्वं धारयितुं तेजो वराकी मुच्यतामियम् ॥ ततस्तु कुटिला क्रुद्धा ब्रह्माणं प्राह नारदः। तथा यतिष्ये भगवन् यथा शार्वं सुदुर्धरम् ॥ धारयिष्याम्यहं तेजस्तथैव शृणु सत्तम। तपसाऽहं सुतप्तेन समाराध्य जनार्दनम् ॥ यथा हरस्य तद्वीर्यं धारयिष्ये पितामह। तथा देव करिष्यामि सत्यं सत्यं मयोदितम् ॥ ततः पितामहः क्रुद्धः कुटिलामतिदारुणाम्। भगवानादिशत् ब्रह्मा सर्वेशस्तु महामुने ॥ यस्मान्मद्वचने पापे न स्थितं कुटिले त्वया। तस्मान्मच्छापनिर्दग्धा त्वमद्यापो भविष्यसि ॥ इत्येवं ब्रह्मणा शप्ता हिमवद्दुहिता मुने। आपो

क्षिप्तन्तु तेन किल पञ्चसहस्रवर्षा-
नेतद्धार भवती श्रममन्तरेण ।
एतादृशी विसदृशा नु कदा पुनः स्या-
स्त्व गोचरे मम दृशोश्शरजन्मसूते ॥ १२ ॥

शरमुखमसुरारिः क्ष्मा रथो धातृमेरु
श्रुतिविषधरराजाः सूतचापार्त्तमौर्व्यः ।
दिनपतिरजनीशौ यत्परत्वे रथाङ्गे
दधति हहह साक्ष्य नौमि त काशिकेशम् ॥ १३ ॥

इति गङ्गातरङ्गिण्या पञ्चदशस्तरङ्ग

---

मयी ब्रह्मलोक प्लावयामास वेगिनी। तामुत्थितजला दृष्ट्वा बबन्ध प्रपितामह ॥ ऋक्सामाथर्वयजुर्भिर्वाङ्मयैर्न्धनैर्दृढम् ।' इति । प्रवृद्धामिति बन्धने हेतुगर्भम् । तत्र तादृश्या त्वयीति सम्बन्ध । स्कन्न स्खलितम् । ते वचोभिरिति। महेशवीर्यं निपीय तद्धोढुमक्षमेण वैवश्यवशात्तन्निवृत्त्यर्थं ब्रह्मलोक गच्छता वह्निना पथि दृष्ट्वा प्रबोधिताया कुटिलायास्तव 'प्रक्षिपात्माम्भसि माञ्' इत्येवरूपैर्वचोभिरित्यर्थ ॥ ११ ॥

क्षिप्तमिति ॥ तेन वह्निना । किलेति प्रसिद्धौ । एतत् महेशवीर्यम् । एतादृशी पूर्वोक्तमहामहिमशालिनी । अत एव विसदृशा निरुपमा । गोचरे विषये । शरजन्मसूते इति । षडाननजननीत्यर्थ । सम्बुद्ध्या शरवणे तत्त्यागादिक सूच्यते ॥ १२ ॥

शरमुखमिति ॥ शरस्य मुखम् अग्र तेजनम् असुरारिर्विष्णु । शरनोपनिषदि श्रूयते—'यो लीलयैव त्रिपुर ददाह साम शल्य विष्णुमग्निं दधान स्तस्मै रुद्राय नमो अस्तु' इति । यजुष्यपि, 'त इषु समम्कुर्वत अग्निमनीक साम शल्य विष्णु तेजनम्' इति । ते देवा समस्कुर्वत सम्यग्कृतवन्त । अग्निं सोम विष्णुञ्च सम्भूयैक बाण कृतवन्त इत्यर्थ । अनीकशब्दो बाणप्रथम भाग काण्डमाचष्टे । शल्यशब्दस्तन्निष्ठलोहम् । तेजनशब्दस्तदग्रम् । अत्रो पदेशकाण्डवचनम् । सर्पराजोऽस्य मौर्वीत्वे वासुकिशशिकेशवान् । पत्नानीक

गङ्गे कपर्दाद्बहिरुत्पतन्ती वेणी तवाभाति वराङ्गभाजा ।
करेण गौर्याऽरुणदृष्टि भूयो व्याक्षिप्यमाणाम्बुजमालिनीव ॥ १ ॥

स्रोतोनिमज्जज्जनतानुषक्तं पापौघमाहर्तुमिवाम्ब गङ्गे ।
आकुञ्चिताग्रांश्चलदूर्मिहस्तान् प्रसारयन्ती भवती विभाति ॥ २ ॥

साक्षान्न वेदैरपि भेदहीनैर्बहिर्विकाराद्वसीयते यत् ।
यतो निवृत्तश्च हृदा वचस्तत्त्वमेव गङ्गे परमार्थतत्त्वम् ॥ ३ ॥

---

फलाग्राणि चक्रुर्देवान् महत्तरान् ॥' इति । अत्र सर्पराज इति सर्पराट्शब्दस्य द्वितीया बहुवचनम् । विषधरराजः वासुकिः । यत्परत्वे यस्य पुरहरस्य परत्वे सर्वो त्कृष्टत्वे । साक्ष्यमित्यत्रान्वयः । रथाङ्गे रथचक्रे । साक्ष्यं प्रामाण्यम् । त्रिपुरसंहारे विष्ण्वादय एवम्भूता इति पुराणप्रसिद्धम् ॥ १३ ॥

गङ्गे इति ॥ उत्पतन्ती उत्प्लुत्य पतन्ती । वेणी प्रवाहः, केशपाशश्च । वराङ्गभाजेत्यनेन शिरसि पतनसौकर्यं प्रोक्तम् । अरुणदृष्टीति व्याक्षेपक्रियाविशेषणम् । दृष्टेरारुण्यञ्च सापत्न्यरोषमूलकम् । व्याक्षिप्यमाणा बलान्निरस्यमाना । अम्बुज मालिनीवेति । अम्बुजसदृशदेवीकरेण पुनः पुनः सम्पर्कादम्बुजमालावत्त्वोत्प्रेक्षा । अस्मिन्नुत्तरस्मिंश्च तरङ्गे वृत्तमुपजातिः ॥ १ ॥

स्रोतोनिमज्जदिति ॥ स्रोतसि निजस्रोतसि निमज्जन्त्यां जनतायामनुषक्तं संसक्तमित्यर्थः । आकुञ्चिताग्रान् अधोमुखतया कुञ्चिताग्रान्, आसन्नतीराणां तरङ्गाणां तथा पतनस्य स्वाभाविकत्वात् ॥ २ ॥

साक्षादिति ॥ भेदहीनैः भेदतात्पर्यहीनैरद्वैतपरैरित्यर्थः । विकारान् प्रकृ तेर्विकारान्महदादेः । बहिः बहिर्भूतं भिन्नम् । त्रयोविंशतिविकारविलक्षणमिति यावत् । यत् साक्षात् इत्थमिति स्पष्टतया नावसीयते न निर्णीयते, किन्तु नेति नेतीति निषेधमुखेनैवाखण्डाकारवृत्त्या विषयीक्रियते इति भावः । हृदा हृद

प्रातर्निमज्जन्नृपसुन्दरीणां कुचाग्रमज्जन्मृगनाभिपङ्कः ।
यावन्मिळत्यम्ब जलैस्त्वदीयैस्तावन्मृगा नन्दनमाविशन्ति ॥ ४ ॥

तमो निहन्तुं तिलकीकृता ते मृत्स्ना विधत्ते तरुणार्कलीलाम् ।
ललाटलेखामपि दुर्निवारां सुरापगे सा परिमार्ष्टि सद्यः ॥ ५ ॥

गौरी कठोरैस्सुचिरं तपोभिर्वामं यताङ्कं गिरिशस्य भेजे ।
त्वामेव गङ्गे स्वयमुत्तमाङ्गे लावण्यवेणीमनिशं बिभर्ति ॥ ६ ॥

---

येन सह वचः यतो यस्मान्निवृत्तम् । मनः निर्णेतुं वाक् प्रतिपादयितुञ्च अपर्याप्ते इत्यर्थः । तत् अवाङ्मनसगोचरम्, 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति श्रुतेः । परमार्थतत्त्वं सत्यं ब्रह्म हे गङ्गे त्वमेवेत्यर्थः ॥ ३ ॥

**प्रातरिति ॥** नृपसुन्दरीणामिति । अन्यासां प्रायशः कस्तूरिकालेपस्या सम्भवात्तथोक्तम् । यावत् यदा । तावत्तदैव । मृगाः कस्तूरीमृगाः । नन्दनं नन्दनवनम् । आविशन्तीति । अहो त्वज्जलैस्त्वसम्बन्धिसम्बन्ध एव परमपदप्राप्तावावश्यक इति भावः ॥ ४ ॥

**तम इति ॥** तमः अलक्ष्मीमन्धकारञ्च । विधत्ते तरुणार्कलीलामिति । अर्क इव तमो निहन्तीत्यर्थः । दुर्निवारामिति । 'ललाटलिखिता रेखा परिमार्ष्टुं न शक्यते' इत्युक्तेः । परिमार्ष्टीति । केवलमलक्ष्मीक्षपणमुद्दिश्य चन्दनादिवत्तिलकीकृतापि त्वदीया मृत्स्ना विधिमप्यन्यथयतीति समुदितार्थः । तथा च भगवान् व्यासः—'जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्ति यः । बिभर्ति रूपं सोऽर्कस्य तमोनाशाय वै स्मृतम् ॥ ऊर्ध्वपुण्ड्रो मृदा शुद्धो ललाटे यस्य दृश्यते । स चण्डालोऽपि शुद्धात्मा पूज्य एव न संशयः ॥' इति । विष्णुधर्मोत्तरेऽपि, 'बिभर्ति निटिले मूर्ध्नि जाह्नवीतीरमृत्तिकाः । बिभृयाच्चक्षुरेकत्र मूर्ध्नीन्दोर्बिभृयात् कलाम् ॥ गङ्गामृदोर्ध्वपुण्ड्रन्तु यो बिभर्ति नरो यदा । तदैव तस्य पितरो ब्रह्मलोकमवाप्नुयुः ॥ गङ्गाकूलमृदा यस्तु बिभृयादूर्ध्वपुण्ड्रकम् । तदङ्गं ये निरीक्षन्ते ते यान्ति त्रिदिवं नराः ॥' इत्यादि । काशीखण्डेऽपि, 'गङ्गातटोद्भवां मृत्स्नां यो मौलौ बिभृयान्नरः । बिभर्ति सोऽर्कबिम्बं वै तमोनाशाय निश्चितम् ॥' इति ॥ ५ ॥

**गौरीति ॥** वाममिति । अनेन गौर्यधिष्ठानभूतस्याधमत्वं सूच्यते। विपरीतार्थकतया गिरिशानभिप्रेतं यथा तथेत्यपि प्रतीयते । गिरिशस्येति ।

विजृम्भिविन्ध्याचलतुङ्गशृङ्गभूयिष्ठगर्वक्षपणास्तरङ्गाः ।
हे मातरुल्लङ्घनसाहसात्ते वैमानिकान् हन्त निवारयन्ति ॥ ७ ॥

भवाब्धिपोतं शरणं गतस्ते पदाम्बुजं नैव बिभेमि मातः।
कुतोपि वह्निं निकषा ज्वलन्तं गतस्य पीडा हिमजा कथं स्यात् ॥ ८ ॥

श्रान्तं नितान्तं भवकाननान्तश्चिरं विहारेण निरन्तरेण।
दत्वा पयः स्वं मृदुवीचिगीतैः प्रस्वापयैतं जननि त्वदङ्के ॥ ९ ॥

---

अत्र गिरिशब्देन गिरिरूपा वेदा उच्यन्ते। तथा च गिरिरूपेषु वेदेषु शेते तिष्ठतीति गिरिशो वेदप्रतिपाद्यः, तस्य परमेश्वरस्येत्यर्थः। स्वयं न तु बहुकालं कृतैः कठोरतपोभिः। लावण्यवेणीमिति। लोचनकारास्तल्लक्षणमाहुः—'लावण्यं हि नामावयवसंस्थानाभिव्यङ्ग्यमवयवातिरिक्तं किमपि धर्मान्तरमेव' इति। तस्य वेणीं प्रवाहम्। अत एव सततं बिभर्तीति भावः ॥ ६ ॥

विजृम्भीति॥ अत्र कदाचिन्मेरुस्पर्धया विन्ध्याचलस्य विजृम्भणकथा पुराणप्रसिद्धाऽनुसन्धेया। भूयिष्ठगर्वक्षपणाः अनल्पगर्वस्य विनाशकाः, तदतिशाय्यौन्नत्यादित्यर्थः। क्षप क्षेपे कर्तरि ल्युट्। उल्लङ्घनसाहसात् ऊर्ध्वभागेन तिर्यग्गतिक्रमणरूपात्साहसात्। ते इति कर्मणि षष्ठी उल्लङ्घनान्वयिनी। वैमानिकान् विमानेन गच्छतो देवान्। हन्तेत्याश्चर्ये। निवारयन्तीति। उच्चैस्तरतया तन्मार्गरोधनादिति भावः। 'वाराणार्थानामीप्सित' इत्यपादानत्वम् ॥ ७ ॥

भवाब्धिपोतमिति॥ भवाब्धिपोतं संसारार्णवतरणोपायम्। कुतोपि नैव बिभेमीत्यन्वयः। भयसामान्यस्य संसारमूलकत्वादिति भावः। वह्निं निकषा वह्नेस्समीपे। 'अभितः परितः समया निकषा हा प्रतियोगेपि' इति वार्तिकात् द्वितीया ॥ ८ ॥

श्रान्तमिति॥ मृदुवीचिगीतैः मृदुभिर्मन्दमधुरैः वीचिगीतैः वीचीस्वनैरेव मातृनिद्रागीतैः। प्रस्वापयेति। संसारतप्तस्य मे त्वदम्भः पिबतः त्वद्वीचीघोषान् शृण्वतश्च त्वत्तीरे चरमस्त्वत्कारुण्येन भूयादित्यर्थः। अत्र मातृवृत्तान्तस्यापि प्रतीत्या समासोक्तिः ॥ ९ ॥

शङ्खोदके त्वां विधिवद्विधिज्ञास्समन्त्रमावाह्य भवन्मयत्वम् ।
प्रापय्य सम्पूज्य च तन्वतेऽर्चाश्शस्तेन तेनैव समा हि गङ्गे ॥ १० ॥

उज्जीवितो येन पुरत्रयारिं प्रपीडयन् पञ्चशरो गतासुः ।
स भीष्मसूर्मां करुणोर्मिमालासमाकुलस्ते स्नपयत्वपाङ्गः ॥ ११ ॥

क्वचित् प्रसन्नस्तिमितां क्वचिच्च समाविलक्षुब्धमहातरङ्गाम् ।
प्रीतिप्रकोपौ सममावहन्तीं वीक्षेय मूढोऽम्ब कदा पुनस्त्वाम् ॥ १२ ॥

---

शङ्खोदक इति ॥ शङ्खान्तर्निवेशितशुद्धोदक इत्यर्थः । आवाह्येति । आवाहनं च रविमण्डलात् । तदुक्तं तन्त्रसमुच्चये—'तीर्थमनुना तीर्थं रवेर्मण्डलादावाह्य' इति । शस्तेनेति । शस्तता च सर्वदेवप्रीतिकरत्वादिना । तदुक्तं ब्रह्मवैवर्ते—प्रशस्तं शङ्खतोयञ्च देवानां प्रीतिदं परम्' इति । तेन उदकेन । समा इति । समाः सर्वाः अर्चास्तन्वत इति योजना । ननु शिवसूर्ययोः पूजायां शङ्खो निषिध्यते, 'शिवसूर्यौ परित्यज्य शङ्खोऽन्यत्र प्रशस्यते' इति, सर्वत्रैव प्रशस्तोऽब्जः शिवसूर्यार्चनं विना' इति च । अत्र अब्जः शङ्खः । तत् कथं समा इतीति चेन्न, निर्णयसिन्ध्वादिस्थयोस्तद्वचनयोः शङ्खे शिवसूर्ययोः पूजा न प्रशस्यते, किन्त्वन्येषामेव देवानामित्यत्रैव तात्पर्यात् प्रतिमाप्रकरण एव तदुक्तेः । हीति प्रसिद्धौ ॥ १० ॥

उज्जीवित इति ॥ येन अपाङ्गेन । भीष्मसूरिति सम्बुद्ध्यन्तम् । मामिति । संसारसन्तप्तमित्यर्थान्तरसङ्क्रमितम् । स्नपयतु शिशिरीकरोतु ॥ ११ ॥

क्वचिदिति ॥ प्रसन्नस्तिमिताम् प्रसन्नामकलुषां स्तिमितां निश्चलाञ्च । समाविलेति । समाविलां सम्यक्कलुषाम् क्षुब्धाः प्रोच्चलन्तः महातरङ्गा यस्यां ताञ्चेत्यर्थः । अत एव प्रीतिप्रकोपाविति । सत्सु प्रीतिः, असत्सु प्रकोप इति विवेकः । समं समकालम् । मूढ इति । अन्यथा इतोऽन्यत्र निर्गमनाप्रसक्तेरिति भावः । तथाच काशीखण्डवचनम्—'अहो मोहस्य माहात्म्यमहो भाग्यविपर्ययः । निर्वाणराशिं यत् काशीं प्राप्य यान्त्यन्यतो बुधाः' इति ॥ १२ ॥

अभिदधति विकुण्ठा नेति नेतीति वेदा
यदनिशमजमुख्यप्रार्थ्यमानावलोकम् ।
निगमशिखरगूढं बन्धमोक्षौ दधैव
प्रदिशदकुहकन्तत्त्वमीडेऽविमुक्ते ॥ १३ ॥

इति गङ्गातरङ्गिण्यां षोडशस्तरङ्गः ।

## सप्तदशस्तरङ्गः ।

प्रत्यङ्मुखैस्ते सगुणं स्वरूपं चिराय दृष्टेश्वरि चिन्त्यमानम् ।
अतर्क्यमेकं निरुपाख्यमद्धा ब्रह्मैव साक्षात्कृतमित्यमानि ॥ १ ॥

---

अभिदधतीति ॥ वदन्तीत्यर्थः । विकुण्ठाः व्याहताः । इत्थमिति बोधनेऽसमर्था इत्यर्थः । तदुक्तं काशीखण्डे—'वेदास्त्वान्न च विन्दन्ति किमात्मक इति प्रभो । प्राप्ताश्शतपथत्वञ्च नेति नेतीति वादिनः ॥' इति । तत्रेयं व्याख्या—'यतो वाचो निवर्तन्ते' इति श्रुतिसिद्धं श्रुत्यविषयत्वमाह—वेदास्त्वामिति । किमात्मकः किंस्वरूपः । शतपथत्वं प्राप्ताः, वाजसनेयिनः बहुभिर्मार्गैर्यत्नं कुर्वन्तोपि न प्राप्नुवन्तीति ध्वनितम् इति । नेति नेतीति । इति निषेधमुखेन । वेदाः 'अथात आदेशो नेति नेति' इति बृहदारण्यकश्रुतयः । अजमुख्येति विधिहरिहरादिभिर्नित्यं काम्यमानदर्शनमित्यर्थः । उक्तञ्च शिवपुराणे—'अप्राकृततनुः श्रीमान् लक्ष्यलक्षणवर्जितः ।' इत्यादिना परमशिवमहिमानं वर्णयता कमलासनेन—'हरिश्चाहञ्च रुद्रश्च तथान्ये च सुरासुराः । तपोभिरुग्रैरद्यापि नित्यं दर्शनकाङ्क्षिणः ॥' इति । अकुहकं न विद्यते कुहकं कपटं मायालक्षणं यस्य तम् । मायाकृतावरणाभावात् सर्वज्ञमिति यावत् ॥ १३ ॥

प्रत्यङ्मुखैरिति ॥ प्रत्यङ्मुखैः निर्गुणब्रह्मैकतानहृदयैः । चिराय चिरकालेन । दृष्टा प्रसन्नया त्वया प्रदर्शितं दृष्टेत्यर्थः । चिन्त्यमानं निर्गुणब्रह्मसाक्षात्कारोपयोगितयेत्यादिः । अतर्क्यम् अनुमानैरिदमित्थमिति निर्धारयितुमशक्यम् ।

प्रस्थाय तोपाज्जननीश्वराणां नेत्राम्बुजौघः शुभगोचराप्त्या।
निपत्य सम्मुह्यति ते मुखेन्दोः प्रभाप्रवाहे ननु चित्रमेतत् ॥ २ ॥

जगत्त्रयीमोहविनाशनार्थं गृह्णासि रूपं कृपयाऽखिलेशि।
तेनैव लावण्यरसाकरेण भूयस्तदुद्रेकमहो तनोषि ॥ ३ ॥

---

एकम् अद्वितीयम्। न उपाख्यायते इति निरुपाख्यम् अवाच्यम्। अद्धा परमार्थम्। साक्षात्कृतं प्रत्यक्षतो दृष्टम्। अमाति। अनुभूयमानानन्दस्यापरिच्छिन्नत्वादिति भावः ॥ १ ॥

प्रस्थायेति ॥ नेत्राम्बुजौघः शुभगोचराप्त्या तोपात् प्रस्थायेति सम्बन्धः। त्वन्मुखरूपादिमनोहरविषयलाभावसरप्राप्त्या ससन्तोषं त्वन्मुखमुद्दिश्य प्रस्थायेत्यर्थः। ईश्वराणां हरिहरब्रह्मादीनाम्। मुह्यति मोहं वैचित्यं भक्त्यतिशयप्रयुक्तं प्राप्नोति। इन्दुप्रभानिकरे पतितानामब्जानां मीलनरूपं वैचित्यं युक्तमिति भावः। चित्रमेतदिति। ग्रहाणां स्थानविशेषस्थितिप्रयुक्तमानुकूल्यं प्रातिकूल्यञ्च गोचर इति दैवज्ञानां व्यवहारः। तथा च शुभगोचरो लब्ध इति हर्षात् प्रस्थितस्य नदीप्रवाहे निपत्य मूर्छनं ज्योतिश्शास्त्रविरुद्धत्वाच्चित्रमित्यर्थः ॥ २ ॥

जगदिति ॥ मोहेति। मोहस्संसारकारणमज्ञानम्। गृह्णासि अङ्गीकृतवत्यसि। रूपं विग्रहविशेषम् अखिलेशि सर्वेषां देवमनुष्यादीनामपि स्वामिनि। *स्वामी खलु स्वीयानामनिष्टनिवारणार्थं प्रवर्तते, यथा गोपो गवामिति भावः।* लावण्येति। लावण्यमेव रसः अमृतं तस्याकरेणेत्यर्थः। 'रसो रागे विषे वीर्ये तिक्तादौ पारदे द्रवे। रेतस्यास्वादने हेम्नि निर्यासेऽमृतशब्दयोः॥' इति वैजयन्ती। उक्तञ्च लावण्यलक्षणमुज्वलनीलमणौ—'मुक्ताफलेषु छायायास्तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥' इति। तेनैव जगन्मोहविनाशनार्थं गृहीतेनैव रूपेण। एवकारो विरोधमुद्भावयति। तदुद्रेकं तस्य मोहस्योद्रेकं प्रवृद्धिम्। तनोषि अर्थात् पश्यताम्। वैचित्यस्याज्ञानस्य च मोहपदेनाभेदाध्यवसायाद्विरोधः ॥ ३ ॥

मोहस्य हानिस्समगोचरात्स्यान्महेशि बोधादिति ये वदन्ति।
मृषावदास्ते ननु शङ्करस्ते दृष्ट्वा वपुर्मुह्यति तत्र गाढम् ॥ ४ ॥

त्वत्तो गृहीत्वाऽम्बु जलं पयोदैः श्रुतेरिवार्थं मुनिभिः प्रणीताः।
त्वामेव नद्यः स्मृतयो यथा तां नानासरण्या परिबृंहयन्ति ॥ ५ ॥

निक्षिप्य चेतस्त्वयि जह्नुकन्ये निर्यातु एतन्न लभेत पश्चात्।
चित्तं न तल्लोकमनो हरन्ती गत्वा पयोधौ हि निलीयसे त्वम् ॥ ६ ॥

---

मोहस्येति ॥ मोहस्य अज्ञानस्य। हानिर्नाशः। समगोचरात् समानविषयकात् बोधादपरोक्षज्ञानादिति योजना। स्यादिति। ज्ञानाज्ञानयोस्तमःप्रकाशवद्विरोधादिति भावः। ये अद्वैतिनः। मृषावदा ननु मृषावदा एव। मृषा वदत्वमुचितमेवेति भावः। कुत इत्यत आह—शङ्कर इति। शं सुखं करोतीति शङ्करः, मोहं विनाश्य निरतिशयसुखत्यानन्दप्रदः परमेश्वर इत्यर्थः। सोपि मुह्यति मोहं कारणे कार्योपचारान्मोहहेतुमनुरागम् उपभोगेच्छां वैचित्यं वा प्राप्नोति। तत्र वपुष्येव। अत्र अनुरागाज्ञानयोरभेदाध्यवसायरूपातिशयोक्तिः। मृषावदा इत्यत्र प्रपञ्चमिथ्यात्ववादस्यानृतवादत्वाध्यवसायरूपातिशयोक्तिश्च ॥ ४ ॥

त्वत्तो गृहीत्वेति ॥ 'वृष्टिकर्त्री वृष्टिजला' इति स्मरणादिति भावः। वृष्टेः कारणभूतं जलं यस्याः सा वृष्टिजलेति तद्व्याख्या। स्मृतय इति इतिहास पुराणादीनामुपलक्षणम्। यथा इव। तां श्रुतिम्। नानासरण्या नानामार्गेण अन्यत्र नानाप्रकारेण। परिबृंहयन्तीति। 'बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति। इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥' इति वचनादितिहासादीनामुपबृंहकत्वम्। यथा मुनिभिर्निबन्धनीयानर्थान् वेदेभ्यः सङ्कलय्य लोकोपकाराय निर्मितानि पुराणादीनि शब्दतोऽर्थतस्तात्पर्यतो वा वेदानेवोपबृंहयन्ति, तथा पयोदैस्त्वत्तो जलमुद्धृत्य वर्धिता नद्यस्त्वामेव बहुभिर्मार्गभेदैर्वर्धयन्तीत्यर्थः ॥ ५ ॥

निक्षिप्येति ॥ निर्यातः मृतः, प्रस्थित इति च। 'निर्याणं त्वचि हस्तिनः। नेत्रान्ते निर्गमे मोक्षे मरणे च प्रकीर्तितम्' इति केशवः। एतत् त्वयि क्षिप्तं चेतः। न लभेत पश्चात् पुनर्न प्राप्नुयात्। तदानीमेव सनिलासाज्ञानस्य विनाशेन विमुक्तिप्राप्तेरिति भावः। कश्चिद्विस्रम्भेण स्वकीयं धनं निक्षिप्य

**विशुद्धसत्त्वोत्थतनो भवत्यां स्नानाय सर्वः शुभ एव कालः।**
**तवापराणामिव नो नदीनां रजोभिभूत्या हि भवत्यशुद्धिः ॥ ७ ॥**

देशान्तर प्रस्थितेन कालान्तरे पुनस्तत् प्राप्तव्य हि। इह तत्प्राप्त्यभावोक्त्या गङ्गाया परकीयस्वापहारकत्व प्रतीयते। तत् सौभाग्यातिशयेन मनोवशीकरण रूपमिति सूचयितु लोकमनो हरन्तीति। पयोधौ हि निलीयसे। हीति हेतौ। सागरेण सहैवय प्राप्नोषि। सागरे निलीय तिष्ठसीत्यपि प्रतीयते। सा कथ निक्षिप्त दद्यादिति भाव। अत्र मनोवशीकरणमेव तदीयस्वहरणत्वेनाध्यवसितम्। अन्त्यकालेदेवीस्मरणमेवाल चेनोनिक्षेपणत्वेनाध्यवसितमिति च बोध्यम् ॥ ६ ॥

**विशुद्धसत्त्वोत्थतनो इति** ॥ 'विरजा' इति स्मरणात्। विगत रज यस्यास्सा विरजेत्यर्थ इति तद्व्याख्या। 'सरस्वती रजोरूपा तमोरूपा कलिन्दजा। सत्त्वरूपा च गङ्गाऽत्र नयन्ति ब्रह्म निर्गुणम् ॥' इत्यादिस्मृतेश्च। अयम्भाव — भूतानीन्द्रियाणि च सामान्यदिव्यभेदाद्द्विविधानि। तत्र सामान्यानि प्रसिद्धान्येव। दिव्यानि तु, 'सत्त्व यत्तत् पराभ्यामपरिकलनतो निर्मल तेन तावद्भूतैर्भूतेन्द्रियैस्ते वपुरिति बहुश श्रूयते व्यासवाक्यम्' इति भगवद्देहोपादानत्वेनातिविशुद्धानि। तैर्महदादिक्रमेणोत्पन्नै समारब्धातीव विशुद्धा चिदानन्दैकरसपरब्रह्मप्रतिफलनयोग्या देव्या स्तनुरिति। इदञ्च रजसा अनभिभवे हेतु। सर्व शुभ एवेति। 'सर्व एव शुभ कालस्सर्वो देशस्तथा शुभ। सर्वो जनो दानपात्र श्रीमतीजाह्नवीतटे ॥' इति स्मरणात्। श्रीमतीति पुवद्भावाभाव आर्ष। रजोभिभूत्या आर्तवाभिभवेन। हि यत। अशुद्धिरिति। अन्यनदीना वर्षास्वार्तवाभिभव ततस्तदा तासु स्नाना नर्हता च। 'सम्प्राप्ते श्रावणे मासि सर्वा नद्यो रजस्वला। तासु स्नानन्न कुर्वीत वर्जयित्वा तु जाह्नवीम् ॥ 'यावन्नोदेति भगवान् दक्षिणाशाविभूषणम्। तावद्रेतावहा नद्यो वर्जयित्वा तु जाह्नवीम् ॥' इत्यादिकात्यायनयोगयाज्ञवल्क्यस्मरणात्। अत्र सर्वा नद्य इति। गङ्गासङ्गविहीनास्सर्वा नद्य इत्यर्थ 'गङ्गाम्भसा समायोगाद्दुष्टमप्यम्बु शुद्ध्यति' इति मात्स्योक्ते। कालिन्द्यादीना नैवार्तवाभिभव इति निर्णयसिन्धौ स्पष्टमभिहितञ्च। यद्यपि, 'आदौ कर्कटके देवि महानद्यो रजस्वला। त्रिदिनन्तु चतुर्थेऽह्नि शुद्धा स्युर्जाह्नवी तथा ॥' इति भविष्यपुराण वचनात्, 'प्रथम कर्कटके देवि त्र्यह गङ्गा रजस्वला' इति हेमाद्र्युक्तकात्यायनवच

सङ्क्रान्ततीर्थान्तरसर्वशक्तिर्जागर्पि मातः सुखसन्निषेव्या ।
उदङ्मुखी योगवितानदानव्रतादिभिः किं फलमद्य काले ॥ ८ ॥
महाश्मशानाधिकभूतिशक्ते स्त्वय्यात्महत्या विहिता निपत्य ।
पापाय नैवापि तु शाश्वताय स्थानाय मेयन्न भवन्महत्त्वम् ॥ ९ ॥

---

नाच गङ्गाया अपि रजोभिभव, तथापि 'वर्जयित्वा तु जाह्नवीम्' इत्युदाहृतवचना विरोधाय प्रावृट्काले रजस्वला महानद्यश्चतुर्थेऽह्नि तथा शुद्धा भवन्ति, यथा जाह्नवी सर्वदा शुद्धा भवतीति रीत्या भविष्यपुराणवचनस्य व्याख्येयतया कात्या यनवचनस्थस्य गङ्गापदस्य जाह्नवीव्यतिरिक्तगोदावेण्यादिनद्यन्तरलाक्षणिकतया च ना सङ्गतिरिति ॥ ॥ ७ ॥

सङ्क्रान्तेति ॥ कलौ पुष्करादितीर्थान्तरैर्गङ्गाया स्वस्वशक्तेस्समर्पणादिति भाव । किं फलमिति । योगादिफलस्य गङ्गायास्सुखसेवयैव लाभेनायासादिमात्र स्यावशिष्टत्वादिति भाव । तथाच नारदीयवचनानि—'किमष्टाङ्गेन योगेन किं तपोभि किमध्वरै । वास एव हि गङ्गाया सर्वतोपि विशिष्यते ॥ किं यज्ञै र्बहुभिर्जप्यै किं तपोभिर्धनार्पणे । स्वर्गमोक्षप्रदा गङ्गा सुखसेव्या यतस्तत ॥' इति । अद्य काल इति । अस्मिन् काले कलावित्यर्थ । गतागतसौकर्यशालिनि वर्तमानकाले इति वा ॥ ८ ॥

महाश्मशानेति ॥ महाश्मशान श्रीकाशी तत्र विद्यमाना या अधिक भूतय गङ्गानयनात् पूर्वं विद्यमानभूत्यपेक्षया अधिकतरा भूतय मुक्तिजनकत्वपाप नाशकत्वादिरूपमहिमान तासा शक्ति तदनुकूला शक्ति तदवच्छेदकीभूता शक्ति रिति यावत् । तस्यास्सम्बुद्धि । गङ्गासम्बन्धादेव श्रीकाश्या अधिकतराण्यैश्वर्याणि जातानीत्यर्थ । तदुक्तम्—'आनन्दकानने तस्मिन्नविमुक्ते शिवालये । प्रागेव मुक्ति ससिद्धा गङ्गासङ्गात्ततोऽधिका ॥' इति । महाश्मशानशब्दार्थ काशीखण्डे निरुक्त—'श्मशब्देन शव प्रोक्तश्शान शयनमुच्यते । निर्वचन्ति श्मशानार्थं मुने शब्दार्थकोविदा ॥ महान्त्यपि च भूतानि प्रळये समुपस्थिते । शेरतेऽत्र शवा भूत्वा श्मशान तु ततो महत् ॥' इति । अस्य व्याख्या—महाश्मशाननाम निर्वक्ति—श्मशब्देनेति द्वाभ्याम् । श्मशानार्थं श्मशानशब्दयोरर्थम् । शब्दार्थौ

दुष्यन्ति सर्वाण्यपि सम्भृतानि स्वल्पैर्दिनैरन्यनदीजलानि ।
शुद्धं कदाप्यम्ब जनार्दनात्मद्रवं न ते तीर्थमचिन्त्यशक्ति ॥ १० ॥

नमोऽस्तु ते सत्यनिकेतनायै नमोऽस्तु ते जाह्नवि विष्णुपद्यै ।
नमोऽस्तु ते शम्भुजटाश्रितायै नमोऽस्तु ते सागरसङ्गतायै ॥ ११ ॥

---

प्रदर्श्य निर्वचनमाह—महान्त्यपीति । अपिशब्देनाहङ्कारादयो गृह्यन्ते । शवा· मृता. शेरते लीयन्ते अत्र काश्यामिति । अपि च, 'भर्ज्यन्ते कर्मबीजानि यत्र विश्वेशवह्निना । अतो महाश्मशानं तद्दर्शतीनां परा गतिः ॥' इति । त्वयि निप त्येत्यन्वय· । शाश्वताय स्थानायेति । मुक्तये इत्यर्थः । 'न स पुनरावर्तते न स पुनरावर्तते ।' इति श्रुतिसिद्धं शाश्वतत्वम् । मुक्तिप्रापकत्वञ्च 'सितासिते सरिते यत्र सङ्गते, तत्राप्लुतासो दिवमुत्पतन्ति। ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्ते ।' इति ऋग्वेदपरिशिष्टे श्रवणात् । सितासिते गङ्गायमुने । तन्वं तनुम् । आप्लुतासः आप्लुताः । जनसः जनाः । 'या गतिर्योगयुक्तस्य सात्त्विकस्य मनीषिणः । सा गतिस्त्यजतः प्राणान् गङ्गायान्तु शरीरिणः ॥' 'ये मुञ्चन्ति नराः प्राणान् गङ्गायां विधिनन्दिनि । ते विष्णुलोकं गच्छन्ति स्तूयमाना दिवि स्थितैः ॥' 'ज्ञात्वाऽज्ञात्वा च गङ्गायां यः पञ्चत्वमाप्नुयात् । अनात्मघाती स्वर्गी स्यान्नरकान् स न पश्यति' इत्यादिस्मृतेश्च ॥ ९ ॥

**दुष्यन्तीति** ॥ सम्भृतानि उद्धृत्य पात्रेषु स्थापितानि । शुद्धमिति । स्वभावतः संशुद्धमित्यर्थः । निखिलान्यपि जलान्तराणि निसर्गतः क्रिमिविशेषसंकुलानि, गङ्गाजलं तु न तथा । एतच्च सूक्ष्मदर्शिना यन्त्रेण परीक्षणे सुस्पष्टम् । जनार्दनेति । जनार्दनात्म जनार्दनरूपं द्रवमित्यर्थः ॥ 'योऽसौ सर्वगतो विष्णुश्चित्स्वरूपी जनार्दनः । स एव द्रवरूपेण गङ्गाम्भो नात्र संशयः ॥' इति नारदीयवचनात् । नेति । दुष्यतीति वचनविपरिणामेनानुपज्यते । अचिन्त्यशक्तीति—'अचिन्त्यशक्ति गङ्गाम्भः तिलमात्रं तु यः पिबेत् । देवो भवेत्स सिद्धो वा' इति पाद्मस्मरणात् ॥ १० ॥

**नमोऽस्त्विति** ॥ सत्यनिकेतनायै सत्यं सत्यलोकः निकेतनं यस्यास्तस्यै । अत्र प्रथमं सत्यलोकस्थितिः, ततो विष्णुपादोदकीभावः, ततश्शम्भुजटापतनम्, ततश्च भूमौ निपत्य सागरेण सङ्गम इति क्रमो विवक्षितः ॥ ११ ॥

धर्मद्रवां त्वामयि रत्नगर्भां
निषेव्यमाणः श्रितकामधेनुम्।
वसानि भूयोपि च सैकते ते
गङ्गे कदा निश्युदिते सुधांशौ ॥ १२॥

पितृवनभुवि वासः प्रेतसङ्घैर्विलेपः
कुणपभसितमाशा वस्त्रमस्थीनि भूषा।
विषमशरसमुपान्ते कुक्कुरा यस्य काश्यां
दुरधिगमसमीहं मोचकं तं प्रपद्ये ॥ १३ ॥

इति गङ्गातरङ्गिण्यां सप्तदशस्तरङ्गः

---

धर्मेति ॥ धर्मद्रवां धर्मरूपो द्रवो यस्यास्ताम्, 'धर्मद्रवा' इति स्मरणात्। रत्नगर्भाम्, रत्नानि गर्भे यस्यास्ताम्, 'रत्नगर्भा' इति स्मरणात्। श्रितकामधेनुं 'कामधेनुः' इति स्मरणात्। अत्र विशेषणैर्गङ्गायास्त्रिवर्गसाधकत्वं प्रतिपादितम्। निशीथिन्या सैकते गङ्गातीरे निशाकरकरास्तृते निवासस्य निरतिशयप्रीत्याधायकत्वं स्वेनानुभूतं हृदि निधायाह—वसानीति। सैकते सिकतामये तीरे। इदञ्च प्रीत्युद्दीपकम्। निशि, तत्रापि सुधांशावुदित इत्यर्थः। अंशुना सुधामयत्वोक्तिरपि प्रीत्याधाने निमित्तान्तरबोधनार्थम्। तथा चोक्तं काशीखण्डे अष्टाविंशतितमाध्याये—'स्वर्गस्थस्य न सा प्रीतिर्भुञ्जतः सुखमक्षयम्। या स्याद्गङ्गातटे पुंसां रात्रौ चन्द्रोदये सति॥' इति ॥ १२ ॥

पितृति ॥ पितृवनभुवि श्मशाने। प्रेतसङ्घैरिति सहार्थे तृतीया। यद्यपि कल्पान्ते जगदखिलमलिकनेत्रज्वालाभिरपसंहृत्य श्मशानमभाने भुवने निरसहायं विहरणाद्भगवान् श्मशानवासीत्युच्यते, तदुक्तं दीक्षितेन्द्रैः—दग्ध्वे तवाक्षिदहनेन चराचरेऽस्मिन् मत्वाऽखिलं भुवनमेव महाश्मशानम्। तत्र स्थितिं विबुधनाथ तवासहाया सन्त. श्मशानवसतिं समुदाहरन्ति॥' इति, तथापि क्षुद्रश्मशानेषु प्रसिद्धं शिवस्य सन्ध्याकालिकं परिक्षुब्धभूतगणादिभ्यो जगद्रक्षणार्थं ताण्डवमभिप्रेत्येत्ययमुक्तम्। तदप्युक्तं तैरेव—'सन्ध्यासु भूतगणभैरवभद्रकालीसंरम्भजन्मजगदापदपासनाय। तद्गोचरेषु पितृकाननभूमिषु त्वं तवादृशं गिरिश ताण्डवमातनोषि॥' इति। कुणपभसितं शवभस्म। आशा वस्त्रमिति। आशैव दिगेव वस्त्रम् न तु वस्त्रान्तरमित्यर्थः।

मुनिवधूपरीक्षार्थं देवदारुवने विवसनभावेन सञ्चारात्, पार्वत्या द्यूते जयं प्राप्तवत्या सर्वस्वापहरणाद्वेति भावः। तदुक्तं स्कान्दे द्वितीयखण्डे—'गौर्या जित्वा पुरा शम्भुर्नग्नो द्यूते विसर्जितः। अतोऽयं शङ्करो दुःखी गौरी नित्यं सुखावहा ॥' इति। अस्थीनि भूषेति। 'अस्पृश्यान्यस्थ्यादीनि किमर्थमतिमङ्गळविग्रहे धार्यन्ते इति चेत्, पुरा प्रळयावसरे विधिविष्ण्वादयः सर्वे सम्भूय शिवं प्रार्थयन्। भगवन् त्वत्कपर्दच्युतगङ्गायामस्थिप्रक्षेपणान्मुक्तिरिति प्रसिद्धेः साक्षात्त्वयि केशास्थ्यादीनि दत्वा मुक्ता भवेम इति। एतत्प्रार्थनानुरोधेनैव तद्धारणं कृतम्। तथा च स्कान्दे—'देवाः ऊचुः—'या धृता भवता जह्नुतनया लोकपावनी। तस्यां यदीयान्यस्थीनि प्रक्षिप्तानि महीतले॥ तेषामपि महादेव मुक्तिर्भवति हि प्रभो। तस्मादस्मान् दयासिन्धो रक्ष संसृतिमध्यगान्॥ तैरेवं प्रार्थितो देवस्तथैव कृपयाऽकरोत्। अतस्सुराणां रक्षायै भस्मास्थीनि दधौ विभुः॥' इति। कुक्कुराः श्वानः। ते वेदाः। तदुक्तं नीलकण्ठदीक्षितैः—'श्वानस्ते निगमा यदीयभवनद्वारे चरन्ति स्वतः' इति। दुरधिगमसमीहमिति। दुरधिगमा अतर्क्या दुर्भगैः दुर्ज्ञेया समीहा वास्तवेच्छा भगवतः श्मशानवासादेः निरतिशयस्वात्मानन्दनित्यास्वादप्रयुक्तविषयसुखवैतृष्ण्यस्फुटीकरणाभिप्राय इति यावत्। चेष्टा वा यस्य तम्। तथाच भागवते काश्यपवचनम्—'हसन्ति यस्याचरितं हि दुर्भगाः स्वात्मन्रतस्याविदुषस्समीहितम्। यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलाळितम्॥ ब्रह्मादयो यस्कृतसेतुपाला यत्कारणं विश्वमिदञ्च माया। आज्ञाकरी तस्य पिशाचचर्या अहो विभूम्नश्चरितं विडम्बनम्॥' इति। अयमर्थः—समीहितमभिप्रेतम्। देहस्य कुत्सितत्वं दर्शयित्वा आत्मनिष्ठा कर्तव्येति लोकशिक्षारूपम्। अविदुषः अविद्वांसः। अजानाना इत्यर्थः। यद्वा, न विद्वानन्यो यस्मादिति तस्य सर्वज्ञस्येत्यर्थः। स्वात्मन्रतस्य स्वात्मनि रतस्य स्वात्मानन्दामृतसागरनिमग्नस्येति यावत्। छान्दसोऽयम्। दुर्भगानेवाह—यैरिति। दुर्भगैरित्यर्थः। श्वभोजनं पतनानन्तरं श्वभिर्भक्ष्यमाणं शरीरमिति यावत्। स्वात्मतया अयमेवात्मेति बुद्ध्या। अहो अतर्क्यं तस्याचरणमित्याह—ब्रह्मादयः येन कृतान् सेतून् स्वस्वाधिकारान् पालयन्ति। यः कारणं यस्य। येन कृतमिदं विश्वं माया च यस्याज्ञाकरी। विभूम्नः परमेश्वरस्य विडम्बनं देहस्य भाविदशानुकरणमिति। मोचकमिति। सर्वपापनिवर्तकज्ञानविषय

वन्दे भगवति गङ्गे जलजाताङ्गे पदानतासङ्गे ।
विचलत्तुङ्गतरङ्गे विजितानङ्गेशमोहनापाङ्गे ॥ १ ॥

मित्यर्थः । 'तमेव विदित्वातिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इति श्रुते । एवं मन्त्रोपनिषद्यपि पाशमोचकज्ञानविषयत्वं श्रूयते—'संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः, अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः' इति च । अयमर्थः—क्षरं क्षरणशीलं प्रधानं पाशः । अक्षरम् अविनाशी पुरुषः जीवः पशुः, 'अक्षरं पशुरित्युक्तं क्षरं पाश उदाहृतः ।' इति शिवपुराणवचनात् । एतत् द्वयं संयुक्तम्, तयोस्सम्बन्धस्यानादित्वात् । व्यक्ताव्यक्तमिति । समाहारद्वन्द्वः । व्यक्तं प्रधानकार्यभूतः प्रपञ्चः, अव्यक्तं तत्कारणभूतं प्रधानम्, 'व्यक्तं कार्यदशापन्नं शरीरादि घटादि च । तत्कारणदशापन्नमव्यक्तमिति कथ्यते ॥' इति शिवपुराणवचनात् । एवम्भूतं विश्वं समस्तं ईशो भरते बिभर्ति । नन्वनादिरविद्यासम्बन्धः ईश्वरस्याप्यस्तीति कथमीष्टे, जीवाः कथं नेशते, तत्राह—अनीशश्चात्मा बध्यते भोक्तृभावादिति । भोक्तृत्वप्रतिसन्धानरूपपाशबन्धत्वात् जीवोऽनीश इत्यर्थः । तादृशपाशमोचने क उपायस्तत्राह—ज्ञात्वा देवं मुच्यते सर्वपाशैरिति । पशुभेदविभिन्ननानाप्रकारावच्छिन्नैः पाशैर्मुच्यते इत्यर्थः । तदुक्तं लैङ्गे—'स एव मोचकस्तेषां भक्त्या सम्यगुपासितः । अविद्यापाशबन्धानां नान्यो मोचक इष्यते ॥ तमृते परमात्मानं शङ्करं परमेश्वरम् ॥' इति । देवं स्वयम्प्रकाशं तत्पदार्थलक्ष्यं त्वम्पदार्थलक्ष्येणाभिन्नमवगम्य सर्वपाशैः सर्वेभ्यो विद्याकामकर्मादिभ्यो बन्धनहेतुभ्यो विमुक्तो भवतीति ॥ १३ ॥

वन्दे इति ॥ त्वामिति शेषः । जलजातेति । जलजातं जलसमूह एवाङ्गं शरीरम्, अङ्गान्यवयवा वा यस्यास्तथाभूते इत्यर्थः । यद्वा, जलजातानि पद्मानि अङ्के प्रवाहरूपे, जलजातं पद्मं अङ्के हस्तात्मके वा यस्यास्तथाभूते इति वा । विजितेति । विजितानङ्गस्य ईशस्य परमेश्वरस्य मोहनौ अपाङ्गौ यस्यास्तथाभूते इत्यर्थः । अस्मिन्नुत्तरस्मिंश्च तरङ्गे वृत्तमार्या ॥ १ ॥

स्वेतरभानकरी या स्वयंप्रकाशा प्रवर्णिता सा चित् ।
स्वेतरशुद्धिविधात्री स्वयंपवित्रा त्वमेव जननयित्रि ॥ २ ॥

गिरिशशिरःकृतवसतिर्विचलद्वीचीविराविणी मातः ।
वामोत्सङ्गनिषण्णां गिरिजां फेनापदेशतो हससि ॥ ३ ॥

गङ्गे कृतसान्निध्या तोयेऽस्मिन्नं पावयेति यो यत्र ।
स्नाति हि भक्त्या सुकृती तस्मै तत्राम्ब सन्निधिं कुरुषे ॥ ४ ॥

---

स्वेतरेति ॥ स्वेतरेषां सर्वदृश्यानां भानकरी स्फूर्तिकरीत्यर्थः। सर्वसाक्षित्वादिति भावः। एवं प्रवर्णिता निगमशिरसा सविस्तरं प्रतिपादिता सा चित् त्वमेवेत्यन्वयः। जनयित्रि त्रिजगन्मातरित्यर्थः। जगद्विवर्तोपादानमिति यावत् ॥ २ ॥

गिरिशेति ॥ विचलदिति। अनेन हासशब्दः प्रतिपादितः। गिरिशशिरस्थेत्यनेन हासनिमित्तं गङ्गानिष्ठमुत्कर्षं प्रतिपाद्य गिरिजाया अपकर्षं प्रतिपादयति—वामोत्सङ्गनिषण्णामिति। वामस्य गिरिशस्य उत्सङ्गे निषण्णामित्यर्थः। यद्वा, वामे सव्ये उत्सङ्गे अर्थात् गिरिशस्य निषणामित्यर्थः॥ 'वामः कामे सव्ये पयोधरे। उमानाथे प्रतिकूले चारौ' इति हैमः। हससीति गम्योत्प्रेक्षा ॥ ३ ॥

गङ्गे इति ॥ पावय। मामिति शेषः। इति इति प्रार्थयन्। तथा च श्रूयते—'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णिया असिक्निया मरुद्वृधे वितस्तयार्जिकीये शृणुह्यासुषोमया' इति गङ्गादीनां तीर्थभूतानामावाहनमन्त्रः। तैत्तिरीयस्यास्य मन्त्रस्य भाष्यम्—हे गङ्गे विश्वनाथराजधानीसमीपस्थे भागीरथि, हे यमुने आदित्यतनये, हे सरस्वति नदीरूपेण विद्यमाने ब्रह्मपत्नि, हे शुतुद्रि एतन्नामकसरिद्वरे, हे आर्जिकीये एतन्नामकसरिद्वरे, हे मरुद्वृधे एतन्नामकसरिद्वरे, यूयं मे व्यत्ययेन मया इमं मनःपूर्वकं वाचा पठ्यमानं स्तोमं स्तुतिरूपमन्त्रसमूहं शृणुहि व्यत्ययेन शृणुत, श्रुत्वा च युष्मत् युष्मत्स्थानेभ्यः आसचत, उपसर्गव्यवधानं सचतेर्दैर्घ्यञ्च छान्दसम्। आगच्छत। मां पावयितुं यथावाञ्छितं दातुञ्च प्रकृतस्नानजलमध्यभागं प्रतीति शेषः। सन्निधध्वञ्च। काभिस्सह—परुष्णी नाम नदी तया परुष्णिया। असिक्नी नाम नदी तया असिक्निया। उभयत्र तृतीया

उद्धर्तव्यो वेगादिद्धातङ्को भवाम्बुधौ मग्नः।
अब्धिपरायणयाऽयं सिद्धिमुखानां निधे त्वया सदयम् ॥ ५॥

दुष्कृतकर्दमलिप्तं दुष्टाशाशान्तधावनश्रान्तम्।
प्रक्षाळय मामग्रे प्राप्तं मातस्तरङ्गहस्ताग्रैः ॥ ६॥

---

यामक्षरविश्लेषश्छान्दसः। वितस्ता नाम नदी तया वितस्तया सह। सुषोमा नाम नदी तया सुषोमया सह। प्रार्थयितुरयमाशयः—यद्यप्यहमेतन्मन्त्रोक्तानामनुक्तानाञ्च महानदीनां रोधांसि गत्वा चिरकालं स्थित्वा स्नात्वा पीत्वा च दिवसानपनेतुमक्षमः, तथापि अहं यत्र कुत्रचित् ह्रदकूपाद्युदकेन स्नानं कुर्वाणः एतन्मन्त्रेण गङ्गाद्या नदीः उपतिष्ठे। उपस्थिताश्चागत्य सन्निदधताम्। सन्निधाय च मदीयानाम्महतामप्येनसां विनाशं विदधताम्। विधाय चैवं माममिदधताम्, पूतोऽसि, शुद्धोऽसि, भुङ्क्ष्व भौमान् भोगान् सकुटुम्बः सपरिवारः साश्रितवर्गश्च। भुक्त्वा चान्ते यथेच्छं पुण्यकृतां लोकानाप्नुहीतीति। हीति प्रसिद्धौ। तस्मै तं पावयितुम्। क्रियार्थोपपदेत्यादिना चतुर्थी। तत्र तस्मिन् तोये। तथाच नारदीयवचनम्—'यो गृहे स्वे स्थितोपि त्वां स्नाने संकीर्तयिष्यति। सोपि यास्यति नाकं वै इत्याह वरुणश्च ताम्॥' इति ॥ ४॥

उद्धर्तव्य इति॥ अर्थात् भवाब्धेः। इद्धातङ्कः प्रवृद्धव्यथ.। अब्धिपरायणया अब्धिरेव परं मुख्यमयनं यस्यास्तया। अनेनाब्धेरुद्धरणकुशलता द्योत्यते। सिद्धीति। अणिमादीनामाश्रयभूते इत्यर्थः। तदुक्तं काशीखण्डे—'सिद्धयः सिद्धिलिङ्गानि स्पर्शलिङ्गान्यनेकशः। प्रासादा रत्नरचिताश्चिन्तामणिगणा अपि॥ गङ्गाजलान्तस्तिष्ठन्ति कलिकल्मषभीतितः।' इति। अस्य व्याख्या—सिद्धय इति। अणिमाद्याः। सिद्धिलिङ्गानि सिद्धिदानि लिङ्गानि, प्रत्यक्षमाहात्म्यभाञ्जीति वा। स्पर्शलिङ्गानि यत्सम्पर्केण लोहादयः सुवर्णानि भवन्ति, तादृशपाषाणघटितलिङ्गानीत्यर्थः। स्पर्शमात्रेण धर्मार्थकाममोक्षसाधकानि लिङ्गानीति वा। रत्नरचिताः रत्नैर्विनिर्मिता इत्यर्थ इति ॥ ५॥

दुष्कृतेति॥ दुष्टेति। दुष्टया आशया विषयतृष्णया आशान्तेषु दिगन्तेषु धावनेन श्रान्तमित्यर्थः। अग्रे त्वत्पुरोभागे ॥ ६॥

मकराधिष्ठितदेहा मकराधिष्ठानभूतदेहा च।
महतीधरमुखमहिते महतीं तनुतां विभूतिममितो मे ॥ ७ ॥

घनशैवलकचपक्षं मधुकरकुरळं विलोलमीनाक्षम्।
विकसितसारसवदनं विसबाहुलतं रथाङ्गवक्षोजम् ॥ ८ ॥

आवर्तनाभि मध्यं पुलिननितम्बं सुरापगे रम्यम्।
कालारिभागधेयं कलये काशीविहारि ते रूपम् ॥ ९ ॥

कलियुगसाक्षाद्देवीं कलिकृतबाधाशमैकसंसेव्याम्।
करधृतशङ्खसरोजां करवै चित्ते सदापि गङ्गे त्वाम् ॥ १० ॥

---

**मकरेति**॥ मकराधिष्ठितदेहा मकरं वाहनभूतं मत्स्यम् अधिष्ठितः आश्रितः देहो यस्यास्सा। मकराधिष्ठानभूतदेहा मकराणामधिष्ठानभूतः आश्रयभूतः देहो यस्यास्सा। चकारो विरोधमुद्भावयति। देहस्य दिव्यप्राकृतभेदेन द्वैविध्यात्तत्परिहारः। अत्र मकरशब्देन तदाख्यो निधिविशेषोपि प्रतीयते। तेन भूतिप्रदानसामर्थ्यं सूच्यते। महतीधरः श्रीनारदमुनिः। 'विश्वावसोस्तु बृहती तुम्बुरोस्तु कलावती। महती नारदस्य स्यात् सरस्वत्यास्तु कच्छपी॥' इति वैजयन्ती। मुखपदेन ऋष्यन्तरादिपरिग्रहः। महिते संस्तुते, 'त्रैलोक्यपूजितपदां देवर्षिभिरभिष्टुताम्' इति स्कान्दवचनात्। तनुतां भवती इत्यादिः ॥ ७ ॥

अथ युग्मेन प्राकृतं दिव्यञ्च रूपमेकोक्त्या स्तौति—**घनेति**॥ घनो निबिडः शैवल एव कचपक्षः केशसमूहो यस्य तथाभूतम्, घनशैवल इव कचपक्षो यस्य तथाभूतमिति च। एवमुत्तरत्रापि बोध्यम्। 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे' इत्यमरः। मधुकरेति। मधुकराः भृङ्गा एव कुरळा अलका यस्य तथाभूतम्। 'कुरळश्चूर्णकुन्तळः' इति धरणी। आवर्तेति। आवर्त एव नाभिर्यत्र तथाभूतं मध्यं यस्य तथाभूतमिति बहुव्रीहिगर्भो बहुव्रीहिः। विहारि विहरणशीलम् ॥ ९ ॥

**कलीति**॥ कलियुगसाक्षाद्देवीं कलियुगे साक्षात् प्रत्यक्षां देवीमित्यर्थः। अनेन सेवासौकर्यमुक्त्वा दैवान्तरापेक्षया मुख्यत्वमप्याह—कलिकृतेति। कलिकृतबाधानां शमाय एकसंसेव्यां मुख्यसंसेव्याम्। करवै प्रार्थनायां लोट् ॥ १० ॥

तटिनीवर्यवरिष्ठा तटभूससक्तभक्तघोपाल्या ।
तरणे दुरितसरस्वत्तरणे मरणे ममाग्रतो भूयाः ॥ ११ ॥

तरुणामृतनिष्यन्दा वरुणालयसन्निलीननिष्यन्दाम् ।
हरिणाङ्कधरालम्बामरुणे दृष्टे कदा भजाम्यम्बाम् ॥ १२ ॥

श्वसितमखिलवेदा यस्य यत्पक्ष्मवश्यौ
जगदुदयविनाशौ सर्वदेवैः सकम्पम् ।
मुकुलितकरपद्मैः स्थीयते यत्समीपे
हरशिरसि सदा त भावये भावलम्बम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यामष्टादशस्तरङ्ग ।

---

तटिनीति ॥ तटिनीवर्यवरिष्ठा तटिनीवर्याणा महानदीना वरिष्ठा, 'गङ्गा सर्वसरिद्योनि समुद्रस्यापि पूरणी । गङ्गाया न लभेत् साम्य काचिदत्र सरिद्वरा ॥ अन्यतीर्थेषु गङ्गायास्स्मरण कार्यते जनि । तस्माद्गङ्गासम तीर्थं न हि ब्रह्माण्डगोळके ॥', 'तीर्थाना परम तीर्थं नदीना परमा नदी' इत्यादिस्मरणात् । तरणे इति सम्बुद्ध्यन्तस्तरणिशब्द । तरणिर्नौका । कस्मिन्नित्यत आह—दुरितेति । दुरिताब्धेरतिक्रमणे इत्यर्थ ॥ ११ ॥

तरुणेति ॥ तरुण पूर्ण अमृत सुधा तस्य निष्यन्द प्रवाह यस्यास्ताम् । वरुणालयेति । वरुणालये समुद्रे सन्निलीन निष्यन्द प्रवाहो यस्यास्तामित्यर्थ । अरुणे दृष्टे प्रभात इत्यर्थ । कदेति । पुनरिति शेष ॥ १२ ॥

श्वसितमिति ॥ अखिलवेदा यस्य निश्वसित निश्वास, 'अस्य महतो भूतस्य निश्वसितमेतत्, यत् ऋग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरसश्च' इति बृहदारण्यकश्रुते । निश्वसितवदनायासेनाविर्भूतत्वाद्वेदा निश्वसितमित्युपचार । जगदिति । जगदुदयविनाशौ यत्पक्ष्मवश्यौ यस्य पक्ष्मसङ्कोचविकासाधीनौ । तदुक्त स्कान्दे—'यस्याक्षिपक्ष्मसङ्कोचाज्जगत् सङ्कोचमेत्यद । विकस्वर विकासाच्च यस्य पूज्यतमा न स ॥' इति । सर्वेति । सर्वदेवैस्सकम्प परमेश्वरकृतस्वस्वमेतु पालनस्खलनसम्भावनाभयात् कम्पपूर्वं स्थीयते इति यावना । देवाना भीतिश्च

## एकोनविंशस्तरङ्गः ।

जय जय भगवति गङ्गे जय जय सञ्जातसागरासङ्गे ।
जय जय शशधरमौले जय जय पापाद्रिभेददम्भोळे ॥ १ ॥

अन्तर्यमयसि याऽखिलजन्तून् कर्मानुरोधतश्शश्वत् ।
अन्तकहन्तुरहन्तां सन्ततमगजे समाश्रयेऽहन्ताम् ॥ २ ॥

कलये चाक्षुपलीलाकलयेशानस्य मोहिनीं भवतीम् ।
कलितार्कसुतासङ्गां कलितापभरप्रणाशिनीं गङ्गाम् ॥ ३ ॥

---

आम्नायते—'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। भीषा स्माद्वातः पवते, भीषोदेति सूर्यः, भीषास्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चमः' इति। भावलभ्यम् भक्तिग्राह्यम्, 'भावग्राह्यमनीडाख्यम्' इति श्वेताश्वतरश्रुतेः। अत्र 'श्वसितमखिलवेदा यस्य' इत्यनेन शास्त्रयोनित्वात्सर्वज्ञत्वादिकं सूचितम्। यत्पक्ष्मवश्याविख्यनेन सृष्टिसंहारहेतुत्वमुक्तम्। तृतीयपादेन स्थितिहेतुत्वं सूचितम्। उक्तलक्षणैर्लक्षितस्य परमेश्वरस्य साक्षात्कारे अन्तरङ्गसाधनं भावलभ्यमित्यनेन दर्शितमिति विभागो द्रष्टव्यः ॥ १३ ॥

जय जयेति ॥ सञ्जातसागरासङ्गे सञ्जातः सागरे समुद्रे सागरेषु सगरसुतेषु चासङ्गः प्रीतिः आ समन्तात्सम्पर्कश्च यस्यास्तथाभूते। गङ्गायास्सगरसुतेषु सम्पर्कः दग्धभस्मनि गङ्गाम्भसा क्लिन्न एव तेषामुद्धृतेर्भस्मद्वारा बोध्यः। शशधरमौले शशधरः मौलौ यस्यास्तादृशि। गङ्गायास्तथात्वं प्रागुक्तम्। पापाद्रीति। 'स्मरणादेव गङ्गायाः पापसङ्घातपञ्जरम्। शतधा भेदमायाति गिरिर्वज्रहतो यथा॥' इति स्मरणात् ॥ १ ॥

अन्तरिति ॥ अन्तर्यमयसि अन्तस्था प्रेरयसि, अन्तर्यामित्वात्। 'एष त आत्मा अन्तर्यामी' इति श्रुतेरिति भावः। कर्मानुरोधतः कर्मानुसरेण। अन्तकहन्तुः कालारातेः अहन्ताम् अहं सर्वोत्कृष्ट इति बुद्धिरहन्ता ताम्। तद्धेतुभूतामित्यर्थः। कारणे कार्योपचारः। अहन्तामिति। अहं तामिति छेदः ॥ २ ॥

कलय इति ॥ कलये ध्यायामि। चाक्षुपलीलाकलया कटाक्षलेशेन। ईशानस्य परमेश्वरस्यापि। ईश्धातोस्ताच्छील्ये शानश्। अथर्वशिरसि श्रूयते—

काळिमधिक्कृतजलमुक्कालिन्दीसङ्गमेन भासि त्वम् ।
शङ्करि कृतशशिभङ्गा शङ्करनारायणेन तुल्याङ्गा ॥ ४ ॥
अञ्चितहरणीवीक्षणसञ्चितमदहा कृपाधुनीमशः ।
मत्स्वान्ते कवळयतान्मलमालम्बं कटाक्षमीनस्ते ॥ ५ ॥

---

'अथ कस्मादुच्यते ईशान इति । सर्वान् लोकान् ईशत इति । सर्वान् लोकान् ईशत ईशिनीभिः जननीभिः परमशक्तिभिस्तस्मादुच्यते ईशान इति' इति । कथमीशिनीभिरिति बहुवचनम् । 'एकैवानेकतां याति शिवशक्तिरुपाधितः ।', 'परास्य शक्तिर्विविधैव श्रूयते ।' इत्यादिश्रुतिभिः परमशक्तेरम्बिकाया बहुत्वावगतेः । जननीभिरित्यादि विवरणरूपं द्रष्टव्यम् । ईशानत्वञ्चास्य सृष्टिस्थितिसंहारकर्तृत्वादिरूपम् । कलितार्कसुतासङ्गां कलितः कृतः अर्कसुतायाः कालिन्द्याः सङ्गः सङ्गमो यया ताम् । कलितापेत्यादि । कलेस्तत्राप्रवेशात्, प्रवेशे वा तस्याकिञ्चित्करत्वादिति भावः ॥ ३ ॥

**कालिमेति ॥** कालिम्ना श्यामळवर्णेन धिक्कृतो जलमुक् जलधरो यया तादृश्याः कालिन्द्यास्सङ्गमेनेत्यर्थः । कालिन्द्याः काष्र्ण्यञ्चास्मिर्वामनपुराणे स्मर्यते—'ततः पपात देवेशः कालिन्दीसरितम्मुने । निममे शङ्करे चापो दग्धाः कृष्णत्वमागताः ॥ ततः प्रभृति कालिन्द्या भृङ्गाञ्जननिभञ्जलम् ।' इति । पाद्मे तु यमुनोत्पत्तिप्रस्तावे स्मर्यते—सूर्यपत्नी संज्ञा नाम पुत्रार्थं बहुकालमतप्यत् । सा प्रसन्नाद्ब्रह्मणः पुत्रं वव्रे । तां ब्रह्मोवाच—'साक्षाद्दण्डधरो धर्मः सूर्यात्त्वयि भविष्यति । परित्रास्यति यो धर्ममधर्मं निहनिष्यति ॥' ततः सा सूर्याद्गर्भं लब्ध्वा तपस्तेपे । ततः कदाचिदस्ताचले सूर्येण करैः स्पृष्टा सा गर्भं व्यसृजत् । स गर्भः सूर्यकरस्पृष्टत्वात् श्यामीभूय द्विधाऽपतत् । तत्र कठिनो भागो यमो, द्रवरूपा यमुना इति । कृतशशिभङ्गा कृतः शशिनश्चन्द्रस्य भङ्गः अभिभवः तिरस्कार इति यावत् । अर्थात् धावल्येन यया सा । गङ्गाया धावल्यं तृतीयतरङ्गे प्रतिपादितम् । शङ्करनारायणेन शङ्करनारायणमूर्त्या । इयञ्च 'त्रयोदशं हरेरर्धम्' इति वातूलशुद्धोक्त्या महेश्वरस्य त्रयोदशी मूर्तिः । सा च दक्षिणभागे सिता, वामभागेऽसितेति बोध्यम् ॥ ४ ॥

**अञ्चितेति ॥** अञ्चितं महितं यत् हरिणीवीक्षणं तस्य सञ्चितो यो मदः विलासावलेपस्तं हन्तीति तथाभूत इत्यर्थः । कृपाधुनीमशः कृपैव धुनी सरित्

तुहिनधराधरजातां शर्मसुमां धर्मपत्रिकाजाताम् ।
द्विजजुष्टश्रुतिशाखां कैवल्यफलां नमामि लतिकां त्वाम् ॥ ६ ॥

सममपि पुण्यं सुकृते समरहिते त्वन्निमज्जनाजाते।
सन्ततमन्तर्भूतं सन्तः प्राहुर्दुरात्मदुष्प्रापात् ॥ ७ ॥

रम्भाकुचपरिरम्भैस्सम्भावनया हृतोपि तीरे ते।
स्वर्वासी कामयते स्वं वासं श्रीगिरीशकरुणाप्ये ॥ ८ ॥

---

तत्र मग्न.। मलं रागादिरूपम्। कवळयतादिति। मीना. खलु- जलगतमल मक्षकाः। ॥ ५ ॥

तुहिनेति ॥ शर्मसुमां शर्माणि ऐहिकसुखान्येव सुमानि यस्यास्ताम्। धर्मपत्रिकाजातां धर्मा एव पत्रिकाजातं पत्रसमूहः यस्यास्ताम्। द्विजजुष्टश्रुतिशाखां द्विजा ब्राह्मणा एव द्विजाः पक्षिणः तैर्जुष्टास्सेविताः श्रुतय एव शाखा यस्यास्ताम्। कैवल्यफलां मुक्तिफलाम्। लतिकां त्वां त्वामेव लतिकामिति व्यस्त रूपकम् ॥ ६ ॥

सममिति ॥ समं निखिलमपि कृच्छ्रचान्द्रायणादिजन्यं पुण्यम् अन्तर्भूत मिति योजना। कुलेत्याह—सुकृत इति। समरहिते निरुपमे इति सुकृत शेषणम्। अन्तर्भूतमिति। तथाच त्वयि स्नानं निखिलकर्मफलसाधकमिति तदेव महत्तरमिति भावः। तदुक्तं भगवत्पादैः—'कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्वमेधैः फलं तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत्' इति ॥ ७ ॥

रम्भेति ॥ रम्भाकुचपरिरम्भैर्या सम्भावना सम्मानना तया हृतः वशीकृतान्तरङ्गः अपि। स्वर्वासी स्वर्गवासी। स्वं वासं स्वकीयं वासम्। श्रीगिरीशकरुणाप्ये इति। इदञ्च तीरविशेषणम्। अब्भक्ष इतिवत् सावधारणोऽयं निर्देशः। तथा च गिरीशकरुणामात्रलभ्ये इत्यर्थः। तथाच वचनम्— 'न तत्पुण्यैर्न तद्दानैः न तपोभिर्न तज्जपैः। न लभ्यं विविधैर्यज्ञैः ... ईश्वरानुग्रहादेव काशीवासस्सुदुर्लभः। सुलभस्स्यान्मुने नूनं न वै सुकृतकैः इति

आसीनः शृणुयाद्यस्तावकतीरे तरङ्गनिध्वानम्।
अमरीनूपुररणितं नन्दनसंस्थस्स जह्नुजे शृणुयात् ॥ ९

प्रणमति यः कुशली त्वां प्रवदति यस्त्वां तपोनिधिर्गङ्गे।
स्मरति च यो धन्यस्त्वां विजयी स हि सेवते यस्त्वाम् ॥ १०

काकगणैर्निष्कुषितं कवलितमम्ब श्वभिः समीक्षेय।
देहं तटजललुलितं देववधूभिः सुवीज्यमानस्स्वम् ॥ ११ ।

लीये स्मरहरजाये माये संफुल्लपङ्कजच्छाये।
शरणे तावकचरणे वारणगमने कदाऽऽगमावरणे ॥ १२ ।

---

आसीन इति ॥ अमरीनूपुररणितम् अमरीणां समीपमागत्य परितस्सवि-लासमारमानं नन्दयन्तीनां देवाङ्गनानां नूपुररणितम्। शृणुयादिति। उभयत्र हेतुहेतु-मतोर्लिङ् तावकतरङ्गनिध्वानश्रवणस्य मरणानन्तरं स्वर्वासप्रदत्वादिति भावः॥ ९।

प्रणमतीति ॥ कुशली अतिशयितकुशलवान्। इदञ्च तपोनिधित्वादीनाम-प्युपलक्षणम्। एवमुत्तरत्रापि तत्तत्पदमितरेषामुपलक्षणं बोध्यम्। प्रवदति यस्त्वा-मिति। त्वन्नामानि प्रजपतीत्यर्थः। स हि स एव। सेवत इति। सेवा चात्र त्वत्पूजास्नानादिरूपा बोध्या ॥ १० ।

काकेति ॥ निष्कुषितं चञ्च्वा नितरामाकृष्टम्। देहम् उत्क्रान्तप्राण शरीरम्। तटजललुलितं तटजले त्वत्तीरजले लुलितं चलितम्। लुठन्तमिति यावत्। देववधूभिः सुवीज्यमानस्सन् समीक्षेयेत्यन्वयः। त्वत्तीरे मरणे वा, मृतशरीरस्य दैवात्त्वत्तीरप्राप्त्यैव वा झटिति स्वर्गप्राप्त्या तद्धेतुभूते त्वज्जलसङ्गे प्रार्थना पर्यव-स्यतीति बोध्यम्। स्वमिति देहविशेषणम्। स्वकीयमित्यर्थः ॥ ११ ॥

लीय इति ॥ संफुल्लपङ्कजच्छाये इति चरणविशेषणम्। शरण इति। मम लोकानां वेत्यादिः। वारणगमने इति। वारणस्य गमनमिव गमनं यस्य तस्मिन्नित्यर्थः। आगमावरणे निगमनिगूढे। कदा लीये निरन्तरध्यानधारया ऐक्यं प्राप्तः कदा परमानन्दमनुभवेयमित्यर्थः ॥ १२ ॥

तुहिनधराधरजातां शर्मसुमां धर्मपत्रिकाजाताम् ।
द्विजजुष्टश्रुतिशाखां कैवल्यफलां नमामि लतिकां त्वाम् ॥ ६ ॥

सममपि पुण्यं सुकृते समरहिते त्वन्निमज्जनाज्जाते ।
सन्ततमन्तर्भूतं सन्तः प्राहुर्दुरात्मदुष्प्रापात् ॥ ७ ॥

रम्भाकुचपरिरम्भैस्सम्भावनया हृतोपि तीरे ते ।
स्वर्वासी कामयते स्वं वासं श्रीगिरीशकरुणाप्ये ॥ ८ ॥

---

तत्र मग्नः। मलं रागादिरूपम्। कवळयतादिति। मीनाः खलु जलगतमल भक्षकाः। ॥ ५ ॥

तुहिनेति ॥ शर्मसुमां शर्माणि ऐहिकसुखान्येव सुमानि यस्यास्ताम्। धर्मपत्रिकाजातां धर्मा एव पत्रिकाजातं पर्णसमूहः यस्यास्ताम्। द्विजजुष्टश्रुति शाखां द्विजा ब्राह्मणा एव द्विजाः पक्षिणः तैर्जुष्टाःसेविताः श्रुतय एव शाखा यस्यास्ताम्। कैवल्यफलां मुक्तिफलाम्। लतिकां त्वां त्वामेव लतिकामिति व्यस्त रूपकम् ॥ ६ ॥

सममिति ॥ समं निखिलमपि कृच्छ्रचान्द्रायणादिजन्यं पुण्यम् अन्तर्भूत मिति योजना। कुत्रेत्याह—सुकृत इति। समरहिते निरुपमे इति सुकृत शेषणम्। अन्तर्भूतमिति। तथाच त्वयि स्नानं निखिलकर्मफलसाधकमिति तदेव महत्तरमिति भावः। तदुक्तं भगवत्पादैः—'कृच्छ्रैः कोटिशतैः स्वपापनिधनं यच्चाश्व मेधैः फलं तत्सर्वं मणिकर्णिकास्नपनजे पुण्ये प्रविष्टं भवेत्' इति ॥ ७ ॥

रम्भेति ॥ रम्भाकुचपरिरम्भैर्या सम्भावना सम्मानना तया हृतः वशी कृतान्तरङ्गः अपि। स्वर्वासी स्वर्गवासी। स्वं वासं स्वकीयं वासम्। श्रीगिरीश करुणाप्ये इति। इदञ्च तीरविशेषणम्। अब्भक्ष इतिवत् सावधारणोऽयं निर्देशः। तथा च गिरीशकरुणामात्रलभ्ये इत्यर्थः। तथाच वचनम्—'न तत्पुण्यैर्न तद्दानैः न तपोभिर्न तज्जपैः। न लभ्यं विविधैर्यज्ञैर्लभ्यमैशादनुग्रहात् ॥ ईश्वरानुग्रहादेव काशीवासस्सुदुर्लभः। सुलभस्स्यान्मुने नूनं न वै सुकृतकोटिभिः ॥' इति ॥ ८ ॥

आसीनः शृणुयाद्यस्तावकतीरे तरङ्गनिध्वानम्।
अमरीनूपुररणितं नन्दनसंस्थस्स जह्नुजे शृणुयात् ॥ ९ ॥

प्रणमति यः कुशली त्वां प्रवदति यस्त्वां तपोनिधिर्गङ्गे।
स्मरति च यो धन्यस्त्वां विजयी स हि सेवते यस्त्वाम् ॥ १० ॥

काकगणैर्निष्कुषितं कवलितमम्ब श्वभिः समीक्षेय।
देहं तटजललुलितं देववधूभिः सुवीज्यमानस्स्वम् ॥ ११ ॥

लीये स्मरहरजाये माये संफुल्लपङ्कजच्छाये।
शरणे तावकचरणे वारणगमने कदाऽऽगमावरणे ॥ १२ ॥

---

**आसीन इति॥** अमरीनूपुररणितम् अमरीणां समीपमागत्य परितस्सविलासमात्मानं नन्दयन्तीनां देवाङ्गनानां नूपुररणितम्। शृणुयादिति। उभयत्र हेतुहेतुमतोर्लिङ् तावकतरङ्गनिध्वानश्रवणस्य मरणानन्तरं स्वर्वासप्रदत्वादिति भावः॥ ९॥

**प्रणमतीति॥** कुशली अतिशयितकुशलवान्। इदञ्च तपोनिधित्वादीनामप्युपलक्षणम्। एवमुत्तरत्रापि तत्तत्पदमितरेषामुपलक्षणं बोध्यम्। प्रवदति यस्त्वामिति। त्वन्नामानि प्रजपतीत्यर्थः। स हि स एव। सेवत इति। सेवा चात्र त्वत्पूजास्नानादिरूपा बोध्या ॥ १० ॥

**काकेति॥** निष्कुषितं चञ्च्वा नितरामाकृष्टम्। देहम् उत्क्रान्तप्राणशरीरम्। तटजललुलितं तटजले त्वत्तीरजले लुलितं चलितम्। लुठन्तमिति यावत्। देववधूभिः सुवीज्यमानस्सन् समीक्षेयेत्यन्वयः। त्वत्तीरे मरणे वा, मृतशरीरस्य दैवात्त्वत्तीरप्राप्तावेव वा झटिति स्वर्गप्राप्त्या तद्धेतुभूते त्वज्जलसङ्गे प्रार्थना पर्यवस्यतीति बोध्यम्। स्वमिति देहविशेषणम्। स्वकीयमित्यर्थः ॥ ११ ॥

**लीय इति॥** संफुल्लपङ्कजच्छाये इति चरणविशेषणम्। शरण इति। मम लोकानां वेत्यादिः। वारणगमने इति। वारणस्य गमनमिव गमनं यस्य तस्मिन्नित्यर्थः। आगमावरणे निगमनिगूढे। कदा लीये निरन्तरध्यानधारया ऐक्यं प्राप्तः कदा परमानन्दमनुभवेयमित्यर्थः ॥ १२ ॥

हरिकमलभवाभ्यां मार्गयद्भ्यामधस्ता-
दुपरि च बहुदूरं यस्य नादिर्न चान्तः।
कथमपि परिदृष्टो लिङ्गमूर्तेरनन्तं
भवमृपिमनघं तं संश्रये काशिकेशम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यामेकोनविंशस्तरङ्गः ॥

---

हरीति ॥ हरिकमलभवाभ्यां परस्परं श्रैष्ठ्यै विवदमानाभ्याम्। मार्गयद्भ्याम् अर्थादाद्यन्तौ। अधस्तादिति। अधस्ताद्धरिणा उपरि कमलभवेनेति क्रमो विवक्षितः। यस्येति। विवादप्रशमनार्थं तयोर्मध्ये महालिङ्गरूपेणाविर्भूतस्य, युवयोर्येनाधस्तादुपरि वा गच्छता लिङ्गास्मत्तो ममादिरन्तो वा दृश्येत, तस्य श्रैष्ठ्यमिति वादसमाप्ति कृतवतः परमशिवस्य। नादिः परिदृष्टः नान्तश्च परिदृष्ट इत्यन्वयः। तदुक्तं वायवीयसंहितायाम्—'दिव्यवर्षसहस्राणि चरन् विष्णुरधो गतः। तावत्कालं गतश्चोर्ध्वं तस्यान्तं ज्ञातुमिच्छया ॥ श्रान्तोऽत्यन्तमदृष्ट्वान्तमुप यातः पितामहः। तथैव भगवान् विष्णुः श्रान्तः संविग्नमानसः ॥ क्लेशेन महता तूर्णमर्णवादुत्थितोऽभवत ।' इति। कथेयं मलयाचलखण्डे कौर्मादिष्वपि प्रसिद्धा। लिङ्गमूर्तेरिति। लिङ्गमूर्तेर्यस्येति सम्बन्धः। अनन्तमिति। अन्तः परिच्छेदः, स च कालदेशवस्तुभिः, तद्रहितमित्यर्थः। तत्र कालपरिच्छेदस्य 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादिश्रुत्या, देशपरिच्छेदस्य 'सर्वव्यापी च भगवान् तस्मात्सर्व गतः शिवः' इत्यादिश्रुत्या, वस्तुपरिच्छेदस्य 'एतदात्म्यमिदं सर्वम्' इत्यादिश्रुत्या च प्रतिपादनात्। एतत् सद्रूपं ब्रह्मैव आत्मा स्वरूपं यस्य तादृशम्। स्वार्थे ष्यञ्। तथाच ब्रह्मैव प्रपञ्चस्य स्वरूपम्, तदन्यन्मिथ्येति श्रुत्यर्थः। नचोक्त श्रुत्या ब्रह्मात्मकत्वलाभेपि घटः सन्नित्यादिप्रतीत्या ब्रह्मतादात्म्यलाभेन तादात्म्यस्य च भेदसमानाधिकरणाभेदरूपत्वात् कथं वस्तुपरिच्छेदराहित्यमिति वाच्यम्, भेदस्य प्रातीतिकत्वादभेदस्यैव वास्तवत्वादिति ध्येयम्। स्पष्टञ्चेदं प्रथमश्लोकव्याख्यानाव सरे न्यायरत्नावल्याम्, भेदाभेदविचारावसरे लघुचन्द्रिकायाञ्च। ध्वंसप्रागभा वाप्रतियोगित्वं कालपरिच्छेदराहित्यम्, अत्यन्ताभावाप्रतियोगित्वं देशपरिच्छेदराहि त्यम्, स्वसमानसत्ताकभेदाप्रतियोगित्वं वस्तुपरिच्छेदराहित्यमित्यपि बोध्यम्। अनेन

विविधदिव्यविभूषणमण्डनं त्रिपथगे सुषमानवकन्दळम्।
कुसुमसायकजीवनमद्भुतं नयनगोचरमातनु ते वपुः ॥ १ ॥
पदतले परिणद्धुमुमारतं दयितमाङ्गजपाश इवास्तृतः।
परिचकास्ति शिवे कुटिलाञ्चलो मसृणदीर्घघनस्तव कुन्तळः ॥ २ ॥
महितमीश्वरि ये मकुटं श्रितास्तव न ते वलभिन्मणयोपि तु।
कचकलापविसृत्वरसौरभप्रणयतः पतिता मधुपा ध्रुवम् ॥ ३ ॥

---

ाद्यन्तदर्शनाभावे हेतुरुद्भावितः। भवमिति। भूधातोः कर्तरि पचाद्यच्। वत्यस्तीति भवः सन्नित्यर्थः, 'सत्यं ज्ञानमनन्तम् ब्रह्म' इति श्रुतेः। द्वा, अस्तेरिदं रूपम्। अस्त्यस्माद्विश्वमित्यपादाने, अस्त्यस्मिन् विश्वमित्यधि रणे वा 'ऋदोरप्' इत्यप्रत्यये चिकीर्षित एव 'अस्तेर्भूः' इति भ्वादेशे व इति रूपम्। द्वितीये व्याख्याने जगदपादानत्वम्, तृतीये च जगदा रत्वमुक्तं भवति। ऋषिं निखिलवेदराशेरुपदेष्टारं सर्वज्ञम्, 'विश्वाधिको द्रो महर्षिः' इति श्रुतेः। अनघं न विद्यते अघं पापं दुःखं वा यस्य र्, 'एष आत्मा अपगतपाप्मा विजरो विमृत्युर्विशोकः' इति श्रुतेः। अत्र शेषणैः परमेश्वरासाधारणलिङ्गान्युक्तानि ॥ १३ ॥

विविधेति॥ विविधदिव्यविभूषणमण्डनं विविधदिव्यविभूषणानां मण्डनमल रम्। ते वपुः नयनगोचरमातनु इति सम्बन्धः। अस्मिन्नुत्तरस्मिंश्च तरङ्गे द्रुत ळम्बितं वृत्तम् ॥ १ ॥

पदतल इति॥ परिणद्धं बन्धुम्। आस्तृत इत्यनेनान्वयः। आङ्गज शः कामदेवताकः पाशः। आस्तृतः विस्तारितः। कुटिलाञ्चलः बन्धनार्थं ते कृतवक्रबन्ध इति च प्रतीयते। मसृणेति। दीर्घः आपादलम्बीत्यर्थः। अनेन पपाशबन्धनप्रयुक्तं दयितपीडापरिहारौत्सुक्यं ध्वन्यते ॥ २ ॥

महितमिति॥ वलभिन्मणयः इन्द्रनीलमणयः। पतिताः आगत्य स्थिताः। वमिति सम्भावनायाम्। सापह्नवोत्प्रेक्षा ॥ ३ ॥

तव ललाटमुदित्वरनिर्मलप्रभमराळघनाळकचुम्बितम् ।
यदि मृगाङ्ककलां विलिहेत्तमस्सुरधुनीह तया तुलनां वहेत् ॥ ४ ॥

मृगमदस्य निजाननपङ्कजं मलिनयस्यगजे तिलकेन तत् ।
घटयितुं कवितल्लजकल्पितां शरदुदीर्णशशाङ्कसमानताम् ॥ ५ ॥

जयति ते निटिलाक्षजयोत्सुकस्मरकरादृतमध्यधनुस्समा ।
गिरिसुते कुटिला भ्रुकुटी जगन्नियमितं लघु चालितया यया ॥ ६ ॥

तव दृशोरसदृशाधिकवस्तुनोर्विरहतः स्फुटपद्मतुलावचः ।
परशिवे दिवसाम्यमिव त्रयीकथितमम्ब कथञ्चन नीयते ॥ ७ ॥

---

**तवेति** ॥ उदित्वरेति । उदित्वरा उदयशीला निर्मला प्रभा यस्य तदित्यर्थः । पूर्णस्यैव मृगाङ्कस्य राहुग्रासाद्यदीति । विलिहेत् आस्वदेत । तमः राहुः । यद्यर्थोक्तौ च कल्पनमित्यतिशयोक्तिभेदः ॥ ४ ॥

**मृगेति** ॥ मृगमदस्य कस्तूर्याः । तद्रचितेनेत्यर्थः । तत् मलिनीकरणम् । घटयितुं सङ्गतां कर्तुमिवेति गम्योत्प्रेक्षा । कल्पितामिति । दूरे खलु वास्तविकं समानत्वमिति भावः । उदीर्णेति । उदितेत्यर्थः । मलिनीकरणाभावे साम्याभावं प्रकाशयति—शशाङ्केति ॥ ५ ॥

**जयतीति** ॥ निटिलाक्षेति । निटिलाक्षस्य जये उत्सुकः यः स्मरः तेन करेण आदृतं गृहीतम् अत एव परोक्षभूतं मध्यं यस्य तथाभूतेन धनुषा समेत्यर्थः । भ्रुकुट्योर्मध्ये विच्छेदाद्विशिष्टधनुष उपमानत्वम् । जगत् प्रधानभूतं देवासुरम् । नियमितं स्वस्वपदस्थापितम् । सवतीति शेषः । लघु ईषत् ॥ ६ ॥

**तवेति** ॥ सदृशाधिकवस्तुनोः सदृशवस्तुनः अधिकवस्तुनश्च विरहतः अभावात् । स्फुटपद्मतुलावचः कवीनां विकसितपङ्कजसादृश्योक्तिः । परशिवे इति । सप्तम्यन्तमिदम् । दिवसाम्यं दिवस्य गगनस्य साम्यम् । 'दिवं स्वर्गेन्तरीक्षे च' इति विश्वः । त्रयीकथितमिति । श्रूयते हि 'आकाशवत् सर्वगतश्च नित्यः' इति । तादृशश्रुतिकथितमित्यर्थः । तथोक्तिर्भूतान्तरापेक्षया तस्यैवाधिककालस्थायित्वाभिप्रायेण यथा नीयते शास्त्रकारैः, तथा दृष्टवस्तुषु पद्मस्यैवाधिकगुणवत्तया प्रतिपत्तिसौकर्यार्थं तस्यैवोपमानतया प्रतिपादनं युक्तमित्यभिप्रायेणैतद्वचनमपि नेयमिति पर्यवसितार्थः ॥ ७ ॥

अहमवैम्यसिताब्जयुगेन ते नलिनजोऽम्ब विधाय विलोचने।
तदनु तद्घनकेसरराजिभिर्मसृणपक्ष्मततिं कृतवानिति ॥ ८ ॥

श्रवणपूरनवोत्पललालसापरिचलद्भ्रमरभ्रममादधत्।
अगसुते मृगशावकदेशिको जयति ते नयनाञ्चलविभ्रमः ॥ ९ ॥

महितकुण्डलकर्णसमाश्रयस्फुरदमन्दमदे कुमुदे सदा।
उभयतः प्रतिरुध्य विलोचने विलसतस्तव देवि युयुत्सुनी ॥ १० ॥

अधरबिम्बरसास्वदनोन्मिषत्कुतुककीरकचञ्चुपुटभ्रमम्।
विदधती तिलपुष्पमनोहरा लसति जह्नुसुते तव नासिका ॥ ११ ॥

घृणिनिधानशतद्युतिनासिकामणिरवाप्य भवन्मुखपङ्कजम्।
कलयतेऽस्य महेश्वरि केवलं त्रिदशदृष्टिविपात् परिरक्षणम् ॥ १२ ॥

---

अहमिति ॥ अवैमि उत्प्रेक्षे। तदनु तदनन्तरम्। तदिति असिताब्जे इत्यर्थः। मसृणपक्ष्मततिं स्निग्धाक्षिरोमपङ्क्तिम् ॥ ८ ॥

श्रवणेति ॥ श्रवणपूरः कर्णावतंस एव नवोत्पलम् अम्लाननीलारविन्दं तत्र लालसा अतितृष्णा। 'स महान् लालसा द्वयोः' इत्यमरः। तया परिचलतां भ्रमराणां भ्रमं नैल्यादिना तद्भ्रान्तिम् आदधत् आवहन् उत्पादयन्नित्यर्थः। मृगशावकानां बालमृगाणाम् अर्थात् वीक्षणानां देशिकः विलासोपदेष्टा। नयनाञ्चलविभ्रमः नेत्रान्तविलासः। कटाक्ष इत्यर्थः। रूपकभ्रान्त्योः संसृष्टिः ॥ ९ ॥

महितेति ॥ महिते कुण्डले ययोस्तथाविधयोः कर्णयोः समाश्रयात् समाश्रयलाभात् स्फुरदमन्दमदे प्रकटाखर्वगर्वे। भास्करदत्तमृत्युवारकाभौमकुण्डलवतो राधेयस्य समाश्रयणमप्यत्र प्रतीयते। गम्योत्प्रेक्षा ॥ १० ॥

अधरेति ॥ उन्मिषत्कुतुकेति। प्रवृद्धाभिलाषेत्यर्थः ॥ ११ ॥

घृणेति। घृणिनिधानस्य सूर्यस्य यच्छतं तत्समानद्युतिर्यो नासिकामणिः नासाभूषणवज्रमणिः। तादृशोपि नासिकामणिर्मुखपङ्कजस्य दृष्टिदोषशमनायैव, न तु कान्तिविशेषोपादानायेति भावः। दृष्टिबाधानिवृत्त्यर्थं मण्यादिधारणं लोके प्रसिद्धम् ॥ १२ ॥

विजयते मृदुळस्मितसंस्फुरद्विमलदन्तसमाञ्चलपेशलम् ।
तरुणशारदचन्द्रशतायुतद्युति महेश्वरि ते वदनाम्बुजम् ॥ १३ ॥

वचनमानसयोरगतेर्जगज्जननि यस्य विमुह्यति वर्णने ।
कविजनोपि तकद्भवदाननं मम दृशोरतिथिर्भविता कदा ॥ १४ ॥

श्रुतिगणपरिणूतं सञ्चिताशेषपाप-
प्रशमनमतिशस्तं निस्तुलं जीवरत्नम् ।
विविधविभूतिभेदैर्यत्प्रभावानुदारान्
प्रथयति हरपुर्यामच्युतार्च्यं तमीडे ॥ १५ ॥

इति गङ्गातरङ्गिण्यां विंशदशस्तरङ्गः ॥

---

विजयत इति ॥ मृदुळेति । मृदुळस्मितेन मन्दहासेन संस्फुरद्भिः स्फुटं प्रकाशमानैः विमलदन्तानां समैः अनिम्नोन्नतैः अञ्चलैः अग्रैः पेशलं मनोहरमित्यर्थः । वदनाम्बुजमित्युपमया सौगन्ध्यसौकुमार्यादयस्सूचिताः ॥ १३ ॥

वचनेति ॥ अगतेः अप्रसरात् । यस्य मुखस्य । विमुह्यति अज्ञो भवति । असमर्थो भवतीति यावत् । तकत् तत् । अव्ययसर्वनाम्नामित्यकच् ॥ १४ ॥

श्रुतिगणेति ॥ 'अपि वा यश्चाण्डालश्शिव इति वाचं विसृजेत्तेन सह संवसेत्तेन सह भुञ्जीत' इत्यादिश्रुतिसमूहैरित्यर्थः । परिणूतं स्तुतम् । दीर्घान्तात् 'णू स्तवने' इति धातोर्निष्पत्तिर्बोध्या । सञ्चितेत्यादि । तदुक्तम्—'यद्द्व्यक्षरं नाम गिरेरितं नृणां सकृत् प्रसङ्गादघमाशु हन्ति तत्' इति, 'प्रसङ्गात् कौतुकाल्लोभात् भयादज्ञानतोपि वा । शिव इत्युच्चरन्मर्त्यस्सर्वपापैः प्रमुच्यते ॥' इति च । मलयाचलखण्डेपि, 'प्राणप्रयातौ पाथेयं संसारव्याधिभेषजम् । अनन्तदुःखशमनं शिव इत्यक्षरद्वयम् ॥' इति, ॥ 'नाम्नोऽस्ति शम्भोर्या शक्तिः पापसंहरणे द्विज । तावत् पापानि कर्तुं वै को वा शक्तः कलौ युगे ॥ सदा समुच्चरेद्धीमान् शिव इत्यक्षरद्वयम् ।' इति च । 'अतिशस्तमिति । सर्वविद्यासूत्कृष्टमित्यर्थः । तदुक्तं शिवागमेषु—विद्यासु श्रुतिरुत्कृष्टा रुद्रैकादशिनी श्रुतौ । तत्र पञ्चाक्षरी तस्यां शिव इत्यक्षरद्वयम् ॥ सर्वेषामपि वेदानां याजुषो वेद उत्तमः । सप्तानामपि

जयति मङ्गळसूत्रमगात्मजे वरगळे तव यद्बलतः शिवः ।
विकृतिमप्यनवाप्य जगद्भयं परिजहार निपीय महाविषम् ॥ १ ॥

काण्डानाञ्चतुर्थः काण्ड उत्तमः ॥ प्रश्नानामपि सप्तानां पञ्चमः प्रश्न उत्तमः । एकादशानुवाकानामष्टमस्त्विष्टदायकः ॥ एकविंशतिमन्त्राणां पण्मन्त्राः परिकीर्तिताः । षण्णाम्मनूनां द्वावेव विशेषफलदायकौ ॥ तयोराद्यः परो मन्त्रो विमुक्तिफलदायकः । तन्मध्ये जीवरत्नं स्याच्छिव इत्यक्षरद्वयम् ॥' इति । यद्वा, अतिशंसितमिति । नित्य मुक्तस्य शिवस्य नामधेयेषु अमृतत्वसाधनेषु अत्युत्कृष्टमित्यर्थः । तदुक्तं शिवरहस्ये, 'पञ्चाक्षरी शिवपदेन विभाति रुद्राध्यायस्तया लसति तेन चतुर्थकाण्डः । काण्डेन तेन च यजूः प्रथते च तेन ऋक्सामम‍ध्यमगतेन वि ।ति रुद्रः ॥' इति । निस्तुल मिति । पुरा खलु विद्यातारतम्ये विवदमानेष्वृष्यादिषु ब्रह्मसभायां तारतम्य परीक्षार्थं सर्वास्वपि विद्यासु तुलामध्यारोपितासु रुद्रैकादशिनीघटकशिवशब्दस्यो त्कर्षदर्शनादिति भावः । जीवरत्नं शिव इति नाम । एतन्नाम शिवागमानां जीवातुत्वात् जीवरत्नसंज्ञया व्यवहरन्ति शिवागमविदः । विवृतिभेदैरिति । 'शेतेऽस्मिन् जगदीहते दिशति च श्रेयः प्रजानामसौ शान्तिं याति समस्तमङ्गळगुण ग्रामैकसीमायते । इच्छाशक्तिमुपैति निर्मलतरश्चास्ते प्रकृत्येति च व्याचष्टे शिव नाम यस्य विभवं तस्मै परस्मै नमः ॥' इति पद्यप्रतिपादितवृत्तिभेदैरित्यर्थः । अच्युतार्च्यमिति । लैङ्गे पितामहं प्रति शिववचनम्—'भवान्नारायणश्चैव शक्रः साक्षात् सुरेश्वरः । मुनयश्च सदा लिङ्गं सम्पूज्य विधिपूर्वकम् ॥ स्वं स्वं पदमनु प्राप्तास्तस्मात्सम्पूजयन्ति ते ।' इति । शिवपुराणेपि, 'ब्रह्मणा विष्णुना वापि रुद्रेणान्येन केन वा । लिङ्गाराधनमुत्सृज्य क्रियते स्वपदस्थितिः ॥' इति । कौर्मेपि मार्कण्डेयं प्रति श्रीकृष्णस्य वचनानि—'भवता कथितं सर्वं तथ्यमेव न संशयः । तथापि देवमीशानं पूजयामि सनातनम् ॥' इति । यद्वा, हरपुर्यमच्युतार्च्यं नित्यं काशीमागत्य विष्णुना पूजितमित्यर्थः । तथाच काशीखण्डे ध्रुवं प्रति श्री कृष्णवचनम्—'वैकुण्ठनगरात् काशीं नित्यं विश्वेशमर्चितुम् । अहमायामि नियमात् जगदर्च्यं तदर्चिताम् ॥' अत्र तदर्चितां विश्वेशार्चितामिति काशीविशेषणम् ॥ १५ ॥

जयतीति ॥ यद्बलतः यस्य मङ्गळसूत्रस्य बलतो बलात् । विकृति मपि मूर्छादिविकारमपि । महाविषं काळकूटम् ॥ १ ॥

उरसिजौ तव सारसकोरकौ सुतनु कान्तिसरोवरशोभिनौ ।
जननि नाभिमहाह्रदनिस्सरत्तनुरुहावलिकेवलनाळिकौ ॥ २ ॥

उचितमेव कुचौ तव यन्मिथः कठिनघर्षणमातनुतस्समौ ।
अनुचितन्नु सुवृत्तसमुन्नतौ गिरिसुते गिरिणाप्यसमेन तत् ॥ ३ ॥

निगमसाररसं परिपिय ते कुचयुगं स हि शान्तनवश्शिवे ।
स्ववशमृत्युरभूच्च महारथो मुनिसमोपि च धर्मविदग्रणीः ॥ ४ ॥

हृदयहारिणि बाहुलते ध्रुवं तव शिरीषसुमाधिककोमले ।
सुमशरस्तनुते हि यतश्शिवे निजहरस्य दृढं गलबन्धनम् ॥ ५ ॥

---

उरसिजाविति ॥ सुतनुकान्तीति । निर्मलशरीरसुषमेत्यर्थः । नाभीति । नाभिरेव महाह्रदः सुषमासरसोऽशोष्यजलप्रदेशः तस्मान्निस्सरन्ती या तनुरुहावली रोमावलिरेव केवलनाळिका एकनालः ययोस्तावित्यर्थः । अत्रैकस्मिन्नाळे द्वौ कोरकावित्याश्चर्यं ध्वन्यते ॥ २ ॥

उचितमिति ॥ कठिनघर्षणं बलादुपमर्दनम् । औचित्ये हेतुमाह—समाविति । समयोर्मत्सरस्य स्वाभाविकत्वादिति भावः । अत्र मात्सर्योपमर्दयोर भेदाध्यवसायः । सुवृत्तेति । सुवृत्तौ अतिशयेन वर्तुलौ समुन्नतौ चेत्यर्थः । गिरिसुते इति । अनेन स्वाश्रयजनकत्वेन महनीयत्वादप्यनौचित्यं सूचितम् । असमेन निम्नोन्नतभावशालिना, औन्नत्यादिना असदृशेनेति च । तत् कठिनघर्षणं मात्सर्यं च ॥ ३ ॥

निगमेति ॥ स्ववशमृत्युरिति । स्ववशः स्वाधीनः मृत्युः यस्य स इत्यर्थः । स्वच्छन्दमृत्युरिति यावत् । महारथ इति । 'आत्मानं सारथिञ्चाश्वान् रक्षन्नक्षत मायुधैः । यो युध्यत्ययुतैर्वीरैस्स महारथ उच्यते ॥' इत्युक्तलक्षणः । मुनिसम इति । साम्यञ्चाजन्मनैष्ठिकब्रह्मचर्यादिना ॥ ४ ॥

हृदयेति ॥ हृदयहारिणि मनोहरे । तथाच भवत्या शिवहृदयस्यापहरणात् कामस्य जयः सुसाध्यस्सम्पन्न इति भावः । कोमले मृदुळे एव । उक्तमार्थं समर्थयति—सुमशरेति । यतः याभ्याम् । निजहरस्य स्वहन्तुः । तथाच

उचितमेव सुवृत्तसमुन्नतं कुचयुगं तव मौक्तिकमालिकाम्।
सततमेव यदाद्रियते शिवे गुणवती महती विमला हि सा ॥ ६ ॥

तव लसत्युदरे मुखपङ्कजश्वसनसौरभभारहृतान्तरा।
अलिरुचिः श्वसनाशनबालिका द्युधुनि नाभिबिलान्तरनिर्गता ॥ ७ ॥

रजतदामभिरद्रिवरोपमस्तनयुगोद्वहनाय कृशोदरम्।
तव निबद्धमवैमि सुरापगे दृढतरं त्रिवलीपरिशोभितम् ॥ ८ ॥

जघनजानुकटीप्रसृतोरु ते नमदमर्त्यकुलं न विमुह्यतु।
इति किमावृतमद्रिसुते महारजतराजिविराजितवाससा ॥ ९ ॥

---

वाहुलतयोश्शिरीषाधिकमार्दवाभावे पुरा प्रयुक्तस्य शिरीषकुसुमस्य पारुष्यमसहमानेन कामं दग्धवता त्रिलोचनेन दृढतरबाहुबन्धनं कथं सह्येतेति भावः ॥ ५ ॥

उचितमिति ॥ सुवृत्तेति। सुवृत्तञ्च समुन्नतञ्च सुवृत्तसमुन्नतम्। वर्तुलाकारमत्यौन्नत्यशालि चेत्यर्थः। सदाचारयुक्तं कुलीनत्वादिशालि चेति शब्दशक्त्या व्यज्यते। गुणवती सूत्रगुम्फिता, विद्याविनयादिगुणसम्पन्ना च। महती स्थूलमुक्ताफलघटिता, कुलीनत्वादियुक्ता च। विमला काकपदादिदोषरहिता, अन्तर्बहिश्च मलशून्या च। हि यतः। तथाच अनुरूपत्वात्तदादरणं युक्तमिति भावः। आदरणौचित्यरूपस्यार्थस्य समर्थनादत्र काव्यलिङ्गमलङ्कारः ॥ ६ ॥

तवेति ॥ पङ्कजमिव मुखं मुखपङ्कजं तस्य श्वसनस्य उच्छ्वासरूपस्य सौरभभारेण सौरभ्यातिशयेन हृतान्तरा अपहृतचित्तेत्यर्थः। तदास्वादनकामनयेति यावत्। अलिरुचिः श्वसनाशनबालिका कृष्णसर्पकुमारिका। नाभीति। नाभिरेव बिलं द्वारं तदन्तरात्तदन्तर्भागान्निर्गतेत्यर्थः। रोमावलेर्नाभिकुहरादारब्धत्वात्। अत्र अभेदातिशयोक्तिरलङ्कारः ॥ ७ ॥

रजतेति ॥ अत्र त्रिवलीषु रजतदामत्वारोपनिबन्धना फलोत्प्रेक्षा। देव्याः शरीरस्य शरच्चन्द्रधवलत्वाद्रजतेति। उद्वहनायेति। भारवाहकानामुदरबन्धनस्य लोकसिद्धत्वादिति भावः ॥ ८ ॥

जघनेति ॥ प्रसृते जङ्घे। प्राण्यङ्गत्वात्समाहारः। आवृतमिति। समावरणाभावे तद्दर्शनेन त्रिदशानां मोहः स्यादिति भावः। महाराजतेति। महा

तव पदाम्बुजयुग्मसमुल्लसत्कनकनूपुरमञ्जुळशिञ्जितम् ।
नगसुते भृणवानि कदा पुनः पुनरपि प्रणताभयघोषणम् ॥ १० ॥

गुरुतरोरुनितम्बभराद्युगी चरणयोर्मृदुळा तव लोहितम् ।
वमति किन्नु गिरीन्द्रसुते करैः किमु करोति नमत्परिलाळनम् ॥ ११ ॥

अहनि सारसमर्यमसेवया निशि समाधिवशेन जलाशये ।
तव पदत्वमवाप्य पदं परं नतिपदं भवतीश्वरि नाकिनाम् ॥ १२ ॥

विहितदुष्कृतकर्दमशोषणत्वरयदीयपरागकणैस्सुराः ।
गिरिसुते प्रसितास्तव तत्सदा शरणमस्मि गतश्चरणाम्बुजम् ॥ १३ ॥

---

रजतस्य हेम्नः राजिः लेखा तदङ्कितदुकूलेनेरयर्थः ॥ ९ ॥

तवेति ॥ पुनः पुनरपीति । अनेकवारमित्यर्थः । प्रणतेति । प्रणता नामभयस्य घोषणम् ' उच्चैरुक्तिरित्यर्थः । पदयोरम्बुजोपमया नूपुरे समुल्लसत्त्व विशेषणेन च तद्दिदृक्षापि सूचिता ॥ १० ॥

गुरुतरेति ॥ इदञ्च वमने हेतुः । मृदुळेति । भारासहत्वं द्योत्यते । लोहितं रक्तं रक्तरूपञ्च । वमतीति । चिरं दुर्भरभारवहने शोणितोद्गारस्य दृष्ट त्वादिति भावः । उत्प्रेक्षान्तरमाह—किन्विति । मातृकरपरिलाळनसुखस्य नमद्भिरनुभूय मानत्वादुत्प्रेक्षा ॥ ११ ॥

अहनीति ॥ अर्यमसेवया ' आदित्यसेवया । आदित्याभिमुखमुदवासस्त त्सेवात्वेनाध्यवसितः, एवं रात्रौ निमीलनं समाधित्वेन च । तवेति । अस्य पदे इत्यत्रापि सम्बन्धः । पदत्वं चरणत्वमेव पदं प्रतिष्ठाम् । अवाप्येति । पदत्व माप्तेर्हेतोरिति भावः । नतिपदं नमस्कारस्थानम् ॥ १२ ॥

विहितेति ॥ विहिता कृता दुष्कृतमेव कर्दमस्तस्य शोषणे त्वरा यैस्तथा भूतैर्यदीयपरागकणैः पादसम्बन्धिरजोभिरित्यर्थः । प्रसितोत्सुकाभ्यामिति तृतीया । सुरा हरिहरादिदेवाः । प्रसिता उत्सुकाः । तादृशरजःकणेषूत्सुका इत्यर्थः । महा पवित्रत्वादिमहिमशालितया शिरसि धारणार्थं तल्लाभे जातोत्कण्ठा इति यावत् । शरणमिति । शरणं गतः अस्मीति योजना ॥ १३ ॥

लसदुदायुधभूषणमास्थितप्रवरवाहनमीश्वरि तावकम् ।
अनघमाशिरसो वपुरापदाद्दलनमाकलये विपदामिदम् ॥ १४ ॥
निरवधिकविभूतिं विष्णवे नैजपूजा-
विधिकृतनियमाय प्रीतितो दत्तवन्तम् ।
विजयविजयलोलं तीक्ष्णधारत्रिशूल-
प्रदलितकुरुसैन्यं स्थाणुमीडेऽविमुक्ते ॥ १५ ॥

इति गङ्गातरङ्गिण्यामेकविंशस्तरङ्गः ।

---

लसदिति ॥ लसन्ति उदायुधानि उच्छ्रितविविधायुधानि भूषणानि च यत्र तदित्यर्थः । आस्थितेति । आस्थितं प्रवरवाहनं येन तदित्यर्थः । अनघम् अघस्य पापस्य विरोधि, निर्दुष्टमिति च । आशिरसः शिरस आरभ्य । आप दात् पदमवधीकृत्य । आपदात् आशिरस इति च योजना । तेनौत्सुक्यातिरेकः सूचितः । विपदाम् आध्यात्मिकादिभेदेन त्रिविधानामपि विपदाम् । दलनम्, 'सर्वापत्प्रतिपक्षा' इति स्मरणात् । इदम् उक्तरूपं वपुराकलये इति योजना ॥ १४ ॥

निरवधिकेति ॥ दत्तवन्तमिति । पुरा किल मैनाके दुश्चरतपश्चर्यातोषि तात् परमेश्वरादितरदुर्लभा बहवो वरा विष्णुना प्राप्ताः । ते च वराः—'मत्प्र सादान्मनुष्येषु देवगन्धर्वयोनिषु । अप्रमेयबलात्मा च नारायण भविष्यसि ॥' इत्या दिपुराणवचनैः प्रपञ्चिताः । विजयविजयलोलं विजयस्य स्वभक्तावतंसस्य पार्थस्य विजये लोलं सतृष्णम् । अत एव तीक्ष्णधारत्रिशूलप्रदलितकुरुसैन्यम् । प्रवर्तमाने भारत सङ्गरे त्रिशूलेन निजशत्रून् निहत्य पुरतः प्रयान्तं कञ्चित्पुरुषं दृष्ट्वा अर्जुनेन कोऽसौ मत्साहाय्यकारी पुरुष इति पृष्टे व्यासवचनानि शतरुद्रीये—'प्रजापतीनां प्रवरं तेज सां प्रवरं प्रभुम् । भुवनं भूर्भुवर्देवं सर्वलोकमहेश्वरम् ॥ ईशानमीश्वरं देवं दृष्ट वानसि शङ्करम्........तस्मिन् घोरे महारौद्रे सङ्ग्रामे रोमहर्षणे । द्रोणकर्णकृपैर्गुप्तां महेष्वासैः महारिभिः ॥ कस्तां सेनां महाराज मनसापि प्रधर्षयेत् । ऋते देवा न्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ ........नमस्पुरुष्व कौन्तेय तस्मै शान्ताय वै सदा ॥' इत्यादीनि । एवंजातीयबहुस्थलीयनानावचनसिद्धार्थस्यानुवादोऽयमंशः । ननु 'मयै वैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्' इति सावधारणश्रीकृष्णवचन विरोध इति चेन्न । यतस्तत्रैवकारेण केवलमर्जुन एव व्यावर्तनीय., 'निमित्तमात्रं

द्वाविंशस्तरङ्गः ।

अपारकरुणाझरी परिगृहीतकाशीपुरी
मुनीन्द्रहृदयेचरी विषमनेत्रचेतोहरी ।
महेश्वरि महीश्वरी जनिमतां तथान्तश्चरी
पदाब्जनतकिङ्करी मनसि भाहि मे शङ्करी ॥ १ ॥

---

भव सव्यसाचिन्' इति वाक्यशेषात्, अत्र शिवप्रसङ्गाभावाच्च । नन्वेवमपि 'मयैवेते निहताः' इत्यस्य श्रीकृष्णवचनत्वात्तत्कर्तृकमेव कुरुसैन्यहननं प्रतीयते, न तु शिवकर्तृकमिति कथमत्र 'तीक्ष्णधारत्रिशूलप्रदळित' इति विशेषणसामञ्जस्यमिति चेन्न, शैवमेव विश्वरूपं दधता श्रीकृष्णेन शिवाहम्भावभावनया तथोक्तत्वेनाविरोधात् । अधिकं तु ब्रह्मतर्कस्तवव्याख्यायां द्रष्टव्यम् । स्थाणुमिति । त्रिपुरविजयसमये सज्जीकृतचापस्मन् पुराणां योगं प्रतीक्ष्य निश्चलतया स्थित इति स्थाणुः । 'स्थो णुः, इत्युणादिसूत्रेण स्थाधातोर्णुर्भवतीत्यर्थकेन कर्तरि णुः । तथा चोक्तं द्रोणपर्वणि—'अतिष्ठत् स्थाणुभूतस्सन् सहस्रं परिवत्सरान् । यदा त्रीणि समेतानि अन्तरीक्षे पुराणि वै ॥ त्रिपर्वणा त्रिशल्येन तदा तानि बिभेद सः ।' इति । कूर्मपुराणे तु, ब्रह्मणोऽर्थनानुसारं तन्मुखादाविर्भूतो नीललोहितमूर्तिर्ब्रह्मणा 'प्रजाः सृज' इति नियुक्तः 'स्वात्मना सदृशान् रुद्रान्निर्मलान्नीललोहितान् । जरामरणनिर्मुक्तान् ससर्ज परमेश्वरः ॥' ततस्तेन 'मा स्राक्षीरीदृशीरेव प्रजा मृत्युविवर्जिताः । अन्यास्सृजस्व भूतेश जन्ममृत्युसमन्विताः ॥' इति प्रार्थितः 'नास्ति मे तादृशः सर्गः सृज त्वं विविधाः प्रजाः ।' इति तमेव सृष्टौ नियुज्य ततः प्रभृति निवृत्तसृष्टिव्यापारो निश्चलः स्थितः । तेन स्थाणुनामा बभूवेत्युपाख्यायते । शैवलैङ्गादित्यपुराणादिष्वप्येवमेवोपाख्यातम् । तम् । स्थाणुशब्दार्थविचारविस्तरस्तु शिवतत्त्वरहस्ये द्रष्टव्यः ॥ १५ ॥

अपारेति ॥ अपारकरुणाझरी अपारा करुणाझरी करुणायाः प्रवाहः यस्याः सा । झरीशब्दः ङीपन्तोऽप्यस्तीति शब्दकल्पद्रुमे । मुनीत्यादि । महामुनिजनमनः

चञ्चन्मञ्जीरशिञ्जास्फुटतरकपटं सिद्धमन्त्रं जपन्तं
शस्तां शैलेशकन्ये नखरुचिमयीं भस्मधूळीं क्षिपन्तम्।
मायाख्यानां पिशाचीं भवभयजननीं दूरमुच्चाटयन्तं
वन्दे पादं त्वदीयं त्रिभुवनशरणं मान्त्रिकं मन्त्रसेव्यम् ॥ २ ॥

विष्णुः पङ्कजसम्भवो मुनिगणः शक्रादयश्चागजे
वैकुण्ठे हरगानमद्भुततरं ग्राव्णामपि द्रावकम्।
शृण्वन्तः पुळकावृता द्रुतदशामापुः किलोन्मूर्छिता
वन्दे तद्द्रवरूपिणीं सुरवधूशापापहां त्वां विधेः ॥ ३ ॥

---

प्रकाशमानेत्यर्थः। बहिश्चरीति। बहिर्यामित्वेनेत्यर्थः। बहिरिन्द्रियप्रेरिकेति यावत्। जनिमतां प्राणिनामिति मध्यमणिन्यायेनान्वेति। अन्तश्चरीति। अन्तर्यामित्वेने त्यर्थः। मनःप्रेरिकेति यावत्। इतस्तरङ्गत्रयं नानावृत्तम् ॥ १ ॥

चञ्चदिति॥ चञ्चतः चञ्चलस्य मञ्जीरस्य नूपुरस्य शिञ्जैव स्फुटतर. कपट कैतवं यस्य तथाभूतमित्यर्थः। सिद्धमन्त्रं सिद्धः उपासनया स्वाधीनः फलप्रापण योग्य इत्यर्थः। मन्त्रस्तम्। शस्तामिति। शस्तत्वञ्च विध्युक्तनिर्माणान्मन्त्राभिमन्त्रि तत्वाच। नखरुचिमयीं नखकान्तिरूपाम्। धावळ्यात् पावनत्वाच्च रूपणम्। क्षिपन्त मिति। उभयत्र हेतौ शता, जपविक्षेपयोरुच्चाटनार्थत्वात्। मायाख्यानां मायेत्याख्यानं नाम यस्यास्तथाभूताम्। मायात्मिकामित्यर्थः। पादं पादमेव मान्त्रिकमिति रूपकम्। त्रिभुवनशरणं त्रिभुवनस्य वासस्थानत्वाद्रक्षणाच्च। 'शरणं गृहरक्षित्रोरिति' कोशः। मन्त्रसेव्यं मन्त्रेण सेव्यमिति व्यतिरेकः। 'मन्तारं त्रायते यस्मान्मन्त्र इत्यभि धीयते' इति मन्त्रलक्षणं स्मृतम् ॥ २ ॥

विष्णुरिति॥ ग्राव्णां शिलानामपि। सुखोन्मूर्छिताः आनन्देनात्यन्तं मूर्छिता.। द्रुतदशां द्रवीभावावस्थाम् आपुरिति योजना। किलेति पुराणप्रसिद्धौ। तद्द्रवरूपिणीं तेषां यः द्रवः तद्रूपिणीम्। ब्रह्मवैवर्ते चतुस्त्रिंशाध्याये जाह्नवीजन्मप्रस्तावात्मके वैकुण्ठे परमे श्वरगमनं तत्कृतं गानञ्चोपवर्ण्य तच्छ्रवणमात्रेण मूर्छाविचेतनत्वादिकं तच्छरीरप्रसृतैर्जलैर्वैकु ण्ठस्य पूर्णत्वञ्च सप्रपञ्चं कथितवतो गोकुलकृष्णस्य राधां प्रति वचनम्—'शरीरजा सुराणां सा बभूव सुरनिम्नगा। मुक्तिदा च मुमुक्षूणां भक्तानां हरिभक्तिदा॥' इत्यादि। सुरेत्यादि।

मदकळकलहंसस्वच्छमुक्ताञ्चितश्रीः
सुरतटिनि हृदन्ते सन्दधानान् पुनाना ।
हरशिरसि लसन्ती श्लाघ्यमाना सुरेन्द्रै-
र्जयति सुकृतिगम्या तावकी वीचिमाला ॥ ४ ॥

नरसखकरजाताङ्गे विहितब्रह्माम्बुभाजनासङ्गे ।
कृतदुरितशैलभङ्गे गङ्गे सेवाकृतास्थनिस्सङ्गे ॥ ५ ॥

सप्तर्षिसुकृतसारे दुर्वाराघौघभङ्गकृत्सारे ।
कृतनतकरुणासारे वन्दे विख्यातनिम्नगासारे ॥ ६ ॥

---

सुरवध्वाः मोहिन्याख्यायाः शापापहां शापहारिणीमित्यर्थः । विधेरिति कर्मणि षष्ठी । शापे अन्वेति । ब्रह्माणं दृष्ट्वा कामार्ता तिलोत्तमासहचारिणी मोहिन्याख्या स्वर्वेश्या सङ्गमाय प्रार्थयन्ती तेन तिरस्कृता 'इतः परं तव लोके अपूज्यता अस्तु', इति तं शशाप । ततः विष्णुवाक्यात् गङ्गास्नानेन तन्निवृत्तिश्च जाता इति तत्रैवो पवर्णिता कथाऽत्र सूचिता ॥ ३ ॥

मदकळेति ॥ मदकळा ये कळहंसास्त एव इव च स्वच्छाः मुक्ताः मुक्ताफलानि ताभिरञ्चिता श्रीर्यस्यास्सेत्यर्थः । हृदन्ते मनसि वक्षःप्रदेशे च सन्दधा नान् ध्यायतो वहतश्च । पुनाना परिशुद्धान् कुर्वती ॥ ४ ॥

युग्मेन स्तौति—नरसखेति ॥ नरसखस्य श्रीनारायणमहर्षेः कराज्जातम् अङ्गं शरीरं यस्यास्तथाभूते इत्यर्थः । तथात्वञ्च प्राङ्निरूपितम् । सेवेति सेवायां कृता आस्था यैस्तथाभूता निस्सङ्गा विरक्ता यस्यास्तथाभूते इत्यर्थः । सप्तर्षीति । सप्तर्षीणां मरी च्यत्रिप्रमुखानां सुकृतं तद्रूपः सारः जलं यस्यास्तथाभूते इत्यर्थः । तेषां तत्रैव तपश्चरणादिति भावः । दुर्वारस्य अघौघस्य भङ्गं करोतीति भङ्गकृत् सारो बलं जलं वा यस्यास्तथाभूते इत्यर्थः । कृतेति । कृतः नतेषु करुणायाः आसारः प्रवाहो यया तथाभूते इत्यर्थः । विख्यातेति । विख्यातनिम्न गानां प्रसिद्धनदीनां सारे श्रेष्ठे इत्यर्थः । विख्याता चाऽसौ निम्नगासारा चेति विख्यातनिम्नगासारा इति वा । 'सारो बले स्थिरांशे च मज्ञि पुंसि जले धने । न्याय्ये क्लीबं त्रिषु वरे' इति मेदिनी । त्वामिति शेषः ॥ ५, ६ ॥

भासां निधिः शिरसि भूषणमन्धकारे-
रस्त्वम्ब लोहिततनुः कृपयाऽनुकूलः।
सौम्यो गुरुश्च भजतां कलयन् कवित्वं
मन्दो गतौ चरण इद्धतमश्शिखी ते ॥ ७ ॥

भवत्याः पादाभ्यां प्रकृतिमृदुलाभ्यां प्रविकस-
ज्जपारागव्रीळाकरणनिपुणाभ्यां किसलयैः।
पराभूतैः पद्मैर्वनभुवि शिरीषैरपि महा-
तपांस्यारभ्यन्ते द्विजकुलपरीतैर्गिरिसुते ॥ ८ ॥

---

भासामिति॥ ते चरणः कृपया अनुकूलः अभीष्टदानपरः अस्तु इति योजना। कीदृशः—भासां निधिः कान्तीनामेकास्पदम्। अन्धकारेरिति। हरस्ये त्यर्थः। कदाचिल्लीलार्थं देव्या शिवस्य नयनपिधाने कृते सर्वतः प्रवृत्ताचमससम्भू तोऽसुरः कश्चिदन्धको नाम। स च देव्या स्वकृतनेत्रपिधानप्रवृत्ततमस्समुद्भूत इति पुत्रत्वेन परिगृहीतः। एवम्भूतस्यापि तस्य तामसस्वाभाव्यात् द्रोग्धुमेव मनिरासीत्। ततश्च त्रैलोक्यं तेनापहृतम्। अम्बायै द्रोहोपि कृतः। ततो भगवता भैरवेण महायुद्धे निगृह्य शूलाग्रे प्रोतो ललाटाग्निना चिरं तापितः। अनेन स कृतप्राय श्चित्तोऽभूत्। देव्या प्रथमं पुत्रत्वेन गृहीत इति दयया स भगवता गणाधिपत्ये स्थापित इत्येतावन्मात्रेणान्धकारिरित्युच्यते। इयं कथा वामनपुराणे उपाख्याता, पाद्मादौ च। लोहिततनुः रक्तवर्णः। सौम्यः सोम इव सौम्यः शान्तादित्वाच्, ततः प्रज्ञाद्यण्। सोमवत्तापहरो, मनोहरश्चेत्यर्थः। गुरुः सर्वोत्कृष्टः। ब्रह्मविद्या प्रदाता इति वा। कलयन् उत्पादयन्। गतौ मन्दः मन्दगामी। इद्धतमश्शिखी प्रवृ द्धाज्ञानदाहकः। अत्र क्रमेण सूर्यचन्द्रभौमबुधगुरुशुक्रशनैश्चरराहुकेतवः श्लेषभङ्ग्या निबद्धाः। अतश्चरणे तदभेदप्रतीत्या चरणानुकूल्ये नवग्रहानुकूल्यमपि सिद्धमिति सूच्यते ॥ ७ ॥

भवत्या इति॥ भवत्याः पादाभ्यां पराभूतैरिति योजना। वनभुवि अरण्यप्रदेशे, जलान्तरे इति च, पद्मानां जलेष्ववस्थितेः। 'पयः कीलालममृतं जीवनं भुवनं वनम्' इत्यमरः। किसलयादीनां वने स्वाभाविकी स्थितिः पादपराभूति

विलासी स्वर्गङ्गे तव चरणपद्मः शिवशिरो-
[illegible]
[illegible]
श्रितानां सर्वेषां प्रथयति हि नैशाकरदशाम् ॥ ९ ॥

[illegible]ारुण्यं कलिलक्ष्यविष्णुविशिखप्रद्योतनाग्रैश्वर-
श्रीकाशीधनुरुल्लसद्गुणलते याचे तवान्यादृशम् ।
यद्वस्त्वन्तरमन्तरेण सहसा त्वत्पादसेवारत-
स्वान्तानां घटयेदनन्यसुलभानर्थानभीष्टाधिकान् ॥ १० ॥

---

हेतुकतपस्त्वेनाध्यवस्यते । अत्र भूशब्दो विस्तारं द्योतयति । ततश्च बहूनां किसलयादीनां तपश्चरणसौकरी सूचिता । द्विजकुलपरीतैः द्विजाः पक्षिण एव ब्राह्मणाः तेषां कुलैः परीतैः ॥ ८ ॥

विलासी इति ॥ चरणपद्मः नैशाकरदशां शशाङ्कसादृश्यं प्रथयति विस्तारयतीति योजना । 'वा पुंसि पद्मं नलिनम्' इत्यमरः । अब्जद्वेषीति । पादविलासपक्षे तत्कान्त्यतिशायित्वात् तत्त्वम् । निशाकरपक्षे स्पष्टम् । तमः अज्ञानमन्धकारश्च । श्रितानां नयनकुमुदोल्लासनकर इति योजना । कुमुदानीव नयनानीत्युपमितसमासः । नैशाकरदशां निशाकरावस्थाम् । नैशाकरतादात्म्यमिति रूपकं वा । तदा नयनान्येव कुमुदानीति यथाश्रुतमेव ॥ ९ ॥

कारुण्यमिति ॥ कलीति । कलिरेव लक्ष्यः यस्य तथाविधः विष्णुरेव विशिखः शरः यस्य तथाविधं प्रद्योतनौ लोलार्ककेशवार्कौ अग्रे कोटी यस्य तथाविधञ्च यत् ऐश्वरम् ईश्वरपरिगृहीतं श्रीकाश्येव धनुः तत्र उल्लसद्गुणलते प्रकाशमान मौर्वीलते इत्यर्थः । तदुक्तम्—'लोलार्ककेशवौ कोटी गङ्गा ज्या नगरं धनुः । कलिर्लक्ष्यं शरो विष्णुः शिवो धन्वी पुनातु माम् ॥' इति, 'जाह्नवी ज्या जगन्माता' इति च । लोलार्कः केशवार्कश्च काशीस्थेषु द्वादशादित्येष्वन्यतमौ प्रसिद्धौ । सम्बुद्ध्या गङ्गायाः कलिनाशकत्वं सूच्यते । अन्यादृशत्वमेवोपपादयति—यदिति । यत् कारुण्यम् । वस्त्वन्तरमन्तरेण कारणान्तरापेक्षां विनैव । घटयेत् सम्पादयेत् । अनन्यसुलभान् त्वदितरभक्तैरसुलभान् । त्वदितरेभ्यः असुलभानिति वा अर्थः ॥ १० ॥

श्रीपादोदकनाम्नि विष्णुचरणप्रक्षालनात् पावने
तीर्थे स्नामि विमोचयाघनिचयात् कुल्यैश्च मित्रैरिमम्।
पादस्पर्शमहापराध इह मे त्रैलोक्यमातस्त्वया
धन्तव्यश्चरणाहतिर्निजशिशोर्मातुः प्रमोदाय हि ॥ ११ ॥

स्नातस्त्वय्युषसि प्रलिप्तभसितः स्थित्वाऽक्षधारी तटे
गायत्रीमनुसान्ध्यकर्म विधिवत् जप्त्वा सहस्राधिकम्।
त्वत्तीर्थैरभिषिच्य फालनयनं त्वय्येव माध्याह्निकं
कृत्वा श्रीमणिकर्णिके पुनरहं लप्स्ये कदा धन्यताम् ॥ १२ ॥

---

श्रीपादोदकनाम्नीति ॥ अत्र काशीखण्डवचनानि—'गङ्गावरणयोर्विष्णु सम्भेदे स्वच्छमानसः। प्रक्षाल्य पाणिचरणं सचैलं स्नातवानथ॥ तदा प्रभृति तत्तीर्थं पादोदकमितीरितम्। पादौ यदादौ शुभदौ क्षालितौ पीतवाससा॥ तत पादोदके तीर्थे ये स्नास्यन्ति हि मानवाः। तेषां विनश्यति क्षिप्रं पापं सप्त भवार्जितम् ॥' इति। पूर्वमस्य तीर्थस्य पञ्चनदसंज्ञा, पश्चात् पादोदकसंज्ञेति द्रष्टव्यम्। कुल्यैरित्यादि। मम कुलोद्भूतैः वयस्यैश्च साकमित्यर्थः। पादस्पर्शेत्यादि। वस्तुतो निरूप्यमाणे नायमपराधः, अपि तु प्रमोदस्थानमित्याह—निजेत्यादि॥ ११ ॥

स्नात इति ॥ 'प्रातः प्रातस्तु यत् स्नानं सञ्जाते वारुणोदये। प्राजापत्यसमं प्राहुस्तन्महापविघातकृत्॥ प्रातः स्नानं हरेत् पापमलक्ष्मीं ग्लानिमेव च ॥' इति काशीखण्डवचनादुषसीति। प्रलिप्तभसित इति। प्रातः काले लेपनस्य विहितत्वात्। तथाच जाबालिकी श्रुतिः—'मध्याह्नात् प्राग्जलैर्युक्तं तोयं तदनु वर्जयेत्' इति। स्मृतिश्च—'प्रातर्भूतिकरी भूतिरम्भोभिरभिमिश्रिता। अम्भोविरहिता सायं सेयमंहोविनाशिनी ॥' इति। 'उद्धूलनं त्रिपुण्ड्रञ्च श्रद्धया नाचरन्ति ये। तैस्समाचरितं सर्वं विपरीतं न चान्यथा॥ धार्यं त्रिपुण्ड्रं नियमञ्च भस्मना चावगुण्ठनम्। त्रिपुण्ड्रधारणं मुक्त्वा कर्माणि कुरुते तु यः ॥ तेनैवाचरितं सर्वं व्यर्थञ्चानर्थकारणम्। अन्यथा सर्वकर्माणि न फलन्ति कदाचन ॥ अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूलनं तथा। त्रिपुण्ड्रधारणं कृत्वा सन्ध्यावन्दनमाचरेत्॥' इत्यादिवचनैः, 'भस्मनैवोद्धूलनं तिर्यक् त्रिपुण्ड्रस्य च धारणम्। नैव प्रमदितव्यं वै प्रमादपि कदाचन ॥' इति वचनोपबृंहितया 'भूत्यै न प्रमदितव्यम्' इति तैत्तरी

यकश्रुत्या च भस्मधारणस्य सर्वकर्माङ्गत्वाच्चेति भावः। विस्तरस्तु स्मृतिमुक्ता फलादौ द्रष्टव्यः। भस्मनो महिमातिशयश्च 'को वेद भस्मसामर्थ्यं महादेवादृते परः। दुर्विभाव्यं यथा शम्भोर्माहात्म्यं भस्मनस्तथा॥' इत्यादिना महता प्रबन्धेन ब्रह्मोत्तरखण्डादौ प्रपञ्चितः। विस्तरभयान्नेह लिख्यते। स्थित्वेति। प्रातः काले स्थित्वैव गायत्रीजपस्य कर्त्तव्यत्वात्। तथाच छान्दोग्ये श्रूयते—'कस्मात् ब्राह्मणः सायमासीनः सन्ध्यामुपास्ते। कस्मात् प्रातस्तिष्ठन्। यः सायमासीनः सन्ध्यामुपास्ते, तया वीरस्थानं जयति। यः प्रातस्तिष्ठन्, तया स्वर्गं लोकं जयति' इति। शङ्खः स्मरति च—'पूर्वां सन्ध्यां जपेत्तिष्ठन्नासीनः पश्चिमां तथा' इति। अत्र स्मृत्यन्तरवचनान्यपि सुलभानि। अक्षधारी रुद्राक्षधारी। सर्वपापहर त्वात् गङ्गाप्रीतिकरत्वात्, सर्वकर्मातिशयसम्पादकत्वाच्च। तथाच श्रूयते—'अक्षाणां धारणात् पापं दिवारात्रिकृतं हरेत्' इति। अष्टवक्त्रन्तु रुद्राक्षमष्टमात्राधिदैवतम्। वस्व ष्टकप्रियश्चैव गङ्गाप्रीतिकरं तथा॥' इति, 'रुद्राक्षधारको भूत्वा यत्किञ्चित् कर्म वैदिकम्। कुर्वन् विप्रः सदा भक्त्या महदाप्नोति तत्फलम्' इति च। अधिकं देवीभागवतादौ द्रष्टव्यम्। गायत्रीमिति। प्रणवव्याहृतिसहितां गायत्रीमित्यर्थः, 'प्रणवाद्यास्तु सन्ध्यायां जपेद्व्याहृतिभिः सह' इति विश्वामित्रवचनात्। गायत्री त्यन्वर्थसंज्ञा। तदुक्तं भगवता व्यासेन—'प्रतिग्रहादन्नदोषात् पातकादुपपातकात्। गायत्री प्रोच्यते तस्मात् गायन्तं त्रायते यतः॥' इति। गायत्र्याः सर्वोत्कृष्टतया जप्यत्वं मनुः स्मरति—'एकाक्षरं परं ब्रह्म प्राणायामः परं तपः। सावित्र्या स्तु परं नास्ति मौनात् सत्यं विशिष्यते॥' इति। अस्य व्याख्या—एकाक्षरं प्रणवः। परं ब्रह्म परब्रह्मस्वरूपम्। प्राणायामः व्याहृतयः। परं तपः तप स्साधनभूताः। सावित्र्यास्तु परमुत्कृष्टं न किञ्चिदस्ति, तस्मात्तेषां जपः कार्य इत्यर्थः। मौनं समाधिः। तस्मात्सत्यं जपः विशिष्यते इति। यमोपि, 'गायत्रीञ्चैव वेदांश्च तुलयाऽतोलयत् प्रभुः। एकतश्चतुरो वेदान् साङ्गांश्च सपदक्रमान्॥ एक तश्चैव गायत्रीं तुल्यरूपा तु सा स्मृता।' इति। काशीखण्डेपि, 'न गायत्री समो मन्त्रो न काशीसदृशी पुरी। न विश्वेश्वरसमं लिङ्गं सत्यं सत्यं पुनः पुनः॥' इति। मणिकर्णिकायां गायत्रीजपस्य फलाधिक्यं तत्रैव स्मर्यते—'जप्त्वैकामपि गायत्रीं सम्प्राप्य मणिकर्णिकाम्। लभेदयुतगायत्रीजपनस्य फलं स्फुटम्॥'

इति, 'चतुर्णामपि वेदाना पुण्यमध्ययनाच्च यत्। तत् पुण्य जायते काश्या गायत्रीलक्षजाप्यत ॥' इति च। अनुम न यकर्म सन्ध्योपासनानन्तरम्। सन्ध्यो पासनस्य गङ्गाया फलाधिक्य स्मरति व्यास —'ग्याता तीर्थे दशगुणा सहस्र जाह्नवी जले' इति। नारदीयेपि, 'सामान्यस्थानतो देवी तत्र सन्ध्याद्युपासिता। पुण्य लक्षगुण कर्तुं समर्था द्विजपावनी॥' इति। विधिवत् इति। जपविधिमाह व्यास —'त्रिसन्ध्यन्तु जपेद्देवीं विच्छिन्नैव पदत्रयीम्। अविच्छिन्ना जपयस्तु रौरव नरक व्रजेत्॥' इति। विष्णुरपि, 'अच्छिन्नपादा गायत्री ब्रह्महत्या प्रयच्छति। छिन्नपादा तु गायत्री ब्रह्महत्या व्यपोहति॥ तस्मात् पादत्रय छित्वा जपयज्ञ समाचरेत्।' इति। स्मृतिरत्नावल्यामपि, 'अच्छिन्नपाद गायत्र्या जप कुर्वन्ति ये द्विजा। अधोमुखास्ते तिष्ठन्ति कल्पकोटिशतान्यपि॥' इति। 'त्रिविधा जप यज्ञ स्यान्मानसोपांशुभाषिक। परश्रवणयोग्यो यस्स भाषिक उदीरित॥ उपांशु रोष्ठस्पर्शादिमात्र स्वश्रुतिगोचर। यो जपस्त्वचलज्जिह्वादशनावरणा जप॥ मानस स समाख्यातो जपश्रुतिविचक्षणै। उच्चैर्जपाद्विशिष्टस्स्यादुपांशुर्दशभिर्गुणै॥ जिह्वाजप शतगुण सहस्र मानस स्मृत।' इति। अत्र व्याख्या—मानसेति। मानस, उपांशु, भाषिक। भाषिक वाचिक। स्पर्श स्पन्द। श्रुतिविचक्षणैर्वेदिकै। विशिष्ट अधिक इति। 'पर्वभिर्गणयेत्सख्या नाक्षमालादिभिर्नृप। गायत्र्या वेद मूलत्वाद्वेद पर्वसु गीयते॥' इति विष्णुरहस्यस्मृति। एतत्सर्व मनसिकृत्योक्त मिदम्। वस्तुतस्तु स्नानादिष्वपि यथायोगमस्यान्वय। स्नानादेरपि विधिवदेवानुष्ठे यत्वात्। जप्त्वेति। 'जकारो जन्मविच्छेद पकार पापनाशन। तस्मा ज्जप इति प्रोक्तो जन्मपापविनाशन॥' इति विष्णुरहस्ये जपपदार्थ उक्त। सहस्रा धिकमिति। 'सहस्रपरमा नित्य शतमध्या दशावराम्। सावित्रीं वै जपद्विद्वान् प्राङ्मुख प्रयत शुचि॥' इति व्यासवचनात्। अत्र चन्द्रिकाया व्यवस्था कृता—"दशावरामित्यापद्विषयमाशौचविषयञ्च, 'आपदाशौचयो काले तिष्ठन्नपि जपेद्दश इत्याश्वलायनवचनात्"। सहस्रपरमामिति। सहस्रकृत्व इति वचन वान प्रस्थादिविषयम्। शतमित्यनुदितहोमिगृहस्थब्रह्मचारिविषयम्। ब्रह्मचारिणोपि सन्ध्ययोरग्निकर्म चेति प्रागुदयादग्निकर्मस्मरणादिति। तथाच योगयाज्ञवल्क्य — 'ब्रह्मचार्याहिताग्निश्च शतमष्टोत्तर जपेत्। दशापत्सु जपेद्देवीमष्टाविंशति वाष्ट वा' इति। सहस्रकृत्वो गायत्रीजपस्य फल योगयाज्ञवल्क्येनैव स्मर्यते—'जप्त्वा

शबरपतिकुले यल्लिङ्गनिर्माल्यमांस-
स्खलितशकलभुक्त्या कुक्कुटो लब्धजन्मा।
निजनयनसरोजं प्राप्य जातिस्मरोऽगात्
परमपदमुपास्यं विश्वनाथं तमीडे ॥ १३ ॥

इति गङ्गातरङ्गिण्यां द्वाविंशस्तरङ्गः ॥

---

सहस्रं गायत्र्याः शुचिर्ब्रह्मवधाद्भवेत्।' इति। अष्टोत्तरसहस्रजपस्यैवाचारात् सहस्राधिकमित्युक्तम्। *स्वतोयैरभिषिच्येति। 'गङ्गोद्धृतेन तोयेन यो लिङ्गं स्नापयेत्* सकृत्। सर्वपापविनिर्मुक्तश्शिवसारूप्यमाप्नुयात्॥' इति। स्वर्च्येति। मणिकर्णिकायां माध्याह्निकस्य मुख्यत्वं स्मर्यते—'मध्याह्ने मणिकर्णिकास्नपनजं पुण्यं न वक्तुं क्षमः' इति। माध्याह्निकमिति। मध्याह्ने भवं माध्याह्निकं स्नानाचमनोपस्थानादिकम्। मध्याह्नकालश्च सार्धयामादूर्ध्वकाल.। तदुक्तं चन्द्रिकायाम्—'सार्धयामादूर्ध्वं मध्याह्नः, तत्र माध्याह्निकानन्तरं तर्पणं कुर्यात्, तच्च देवर्षिपितृतर्पणमिति' इति। काशीखण्डेपि, 'समासाद्य च मध्याह्नमियान्ति च नित्यशः। संस्नातुं सर्वतीर्थानि मुक्तिदां मणिकर्णिकाम्॥' इति, 'पापानि पापिनां हृत्वा महान्त्यपि बहून्यपि। काशीतीर्थानि मध्याह्ने *प्रायश्चित्तचिकीर्षया॥* पर्वस्वपर्वस्वपि वा नित्यं नियमवन्त्यहो। निर्मलानि भवन्त्येव विगाह्य मणिकर्णिकाम्॥' इत्यादि च। त्रिमूर्त्यादीनामपि स्नानार्थं तत्रागमनादिकं तत्रोक्तम्। विस्तरभयात्तन्न लिख्यते ॥ १२ ॥

शबरेति॥ शबरपतिकुले इत्यस्य लब्धजन्मेत्यत्र सम्बन्ध.। यल्लिङ्गेति। यस्य परमेश्वरस्य लिङ्गं गमकं ज्ञापकम्। शिश्नमिति यावत्। यद्वा, लीयन्ते सर्वाण्यस्मिन्निति लिङ्गं सर्वदृश्यलयाधिकरणम्। 'लयनाल्लिङ्गमुच्यते' इति। 'तल्लिङ्गं शङ्करः स्वयम्' इति च मलयाचलखण्डोक्ते.। तस्य निर्माल्यं वनेचरेणार्पणान्निर्माल्यभूतं यन्मांसं तस्मात् स्खलितस्य शकलस्य भुक्त्येत्यर्थः। कुदिति कूजन् कुट्टति भुवं तुण्डेनेति कुक्कुट. चरणायुध॰। जातिं प्राक्परिगृहीतनानादेहादिकं स्मरतीति जातिस्मर॰। परमपदं मुक्तिम्। पुरा शिवलिङ्गाराधकेन केनचिद्वनचरेण पालित. कश्चित् कुक्कुट॰ स्वामिभुक्तावशिष्टभगवन्निर्माल्यमासशकलं दैवादशित्वास्तन्महिम्ना शबरराजकुले तेन वनचरेण मारितो लब्धजन्मा

जातिस्मरः कण्णप्पधीरनामा प्रसिद्धो भक्तावतंसो भूत्वा कालहस्तीश्वराय स्वचक्षुः शरेणोत्पाटितं चक्रपाणिरिव समर्प्य मुक्तोऽभवदितीयं कथा शिवभक्तविलासादौ प्रसिद्धा अनेन क्रोडीकृता। तस्यैव वनेचरस्य पूजाक्रम 'मार्गावर्तितपादुका पशुपतेरङ्गस्य कूर्चायते गण्डूषाम्बुनिषेचनं पुररिपोर्दिव्याभिषेकायते। किञ्चिद्भक्षित मांसशेषकवलो नव्योपहारायते भक्तिः किन्न करोत्यहो वनचरो भक्तावतंसायते॥' इति भगवत्पादैः प्रदर्शितः। ननु शिवनिर्माल्यस्य चण्डमालाधिकारिकस्य 'चान्द्रायण शतं कार्यं शम्भोर्नैवेद्यभक्षणात्' इत्यादिनिषेधवचनैरभोज्यत्वात् कथ तद्भोजनकृतो महिमातिशय इति चेन्न, चण्डाधिकारिताविरहस्थले तस्यावश्यं भोज्यत्वात्। अत्र शिवपुराणवचनानि—'शृणुध्वं निर्णयं विप्राः शिवनैवेद्यभक्षणे। सालग्रामोद्भवे लिङ्गे रसलिङ्गे तथा द्विजाः॥ पाषाणे राजते स्वर्णे सुरसिद्धप्रतिष्ठिते। काश्मीरे स्फाटिके रत्ने ज्योतिर्लिङ्गेषु सर्वशः॥ चान्द्रायणसमं प्रोक्तं शिवनिर्माल्यभक्षणम्। चण्डाधिकारो नो यत्र भोक्तव्यं तच्च भक्तित.॥ बाणलिङ्गे च लौहे च सिद्ध लिङ्गे स्वयंभुवि। प्रतिमासु च सर्वासु न चण्डोऽधिकृतो भवेत्॥' इति। तत्रैव ज्योतिर्लिङ्गानि परिगणितानि। 'सौराष्ट्रे सोमनाथश्च श्रीशैले मल्लिकार्जुनः। उज्ज यिन्यां महाकालः ओंकारे चामरेश्वरः॥ केदारो हिमवत्पृष्ठे डाकिन्यां भीमशङ्करः। वाराणस्याञ्च विश्वेशस्त्र्यम्बको गौतमीतटे॥ वैद्यनाथश्चिताभूमौ नागेशो दारका वने। सेतुबन्धे च रामेशो घूस्मेशश्च शिवालये॥ अवतारद्वादशकमेतच्छम्भोः परात्मनः।' इति। यद्यपि काचिद्भेकी ओङ्कारेश्वरनिर्माल्याक्षतभक्षणान्न काश्यां मृता, किन्त्वन्यत्र मृता गृध्रमुखी भूत्वा पुनर्जनिमलभत। तदुक्तं काशी खण्डे—'एका भेकी मुने तत्र चरन्ती लिङ्गसन्निधौ। प्रदक्षिणं सदा कुर्वन्निर्मा ल्याक्षतभक्षिणी॥ सा तत्र मृत्युं न प्राप शिवनिर्माल्यभक्षणात्। क्षेत्रादन्यत्र मरणं जातं तस्यास्तदेनसा॥' इति, 'वरं विषमपि प्राश्यं शिवस्वं नैव भक्षयेत्। विषमेकाकिनं हन्ति शिवस्वं पुत्रपौत्रकम्॥ शिवस्वपरिपुष्टाङ्गा स्पर्शनीया न साधुभिः। तेन कर्मविपाकेन तत्रस्ते रौरवौकसः॥ कश्चित् काकः समालोक्य मण्डूकीं तामितस्ततः। चोद्यमानामादाय चञ्च्वा क्षेत्राद्बहिर्गतः॥ वर्षाम्भसि तेन सा क्षिप्ता काकेन क्षेत्रवाह्यतः। अथ सा फाल्गुतो भेकी मनोरे क्षेत्रमतमे॥ प्रदक्षिणीकरणतो लिङ्गस्य स्पर्शनादपि। पुण्यापुण्यवती जाता कन्या पुष्परदी

गृहे॥ शुभावयवसंस्थाना शुभलक्षणलक्षिता। परं गृध्रमुखी जाता निर्माल्याद्यन्न भक्षणात्॥' इति च, तथापि 'बाणलिङ्गे स्वयम्भूते प्राणलिङ्गे हृदि स्थिते। अत्र कोटिगुणं पुण्यं शम्भोर्नैवेद्यभक्षणात्॥' इत्यादिवचनात्, 'रुद्रेणात्तमश्नन्ति रुद्रेण पीतं पिबन्ति रुद्रेण घ्रात जिघ्रन्ति' इति जाबालश्रुते, 'त्रिगुप्सातमश्नीयात् यदि पाप्मन् शिवानर्पितं भुङ्क्ष्व तदेनो भुङ्क्ष्व मलं भुङ्क्ष्व कृमिं भुङ्क्ष्व अघं भुङ्क्ष्व अधो गच्छ गच्छ' इति कठश्रुतेश्च स्वयम्भूलिङ्गस्य ओङ्कारेश्वरस्य नैवेद्यभक्षणादनन्तमेव पुण्यम्। अस्या श्रुतेरयमर्थ —त्रिगु तिस्र· गाव. चक्षूंषि यस्य स त्रिणेत्र. तेन प्सातं भक्षितम् अश्नीयात्। हे पाप्मन् शिवानर्पितं यदि भुङ्क्ष्व अश्नीया तदा एन पातकम्। अघम् उपपातकम्। तच्छिवानर्पितभोजने भवतीति। तथाचास्या उपबृंहणं पाद्मे—'असमर्प्यौदनं शम्भो· भुङ्क्ते खादति पाति चेत्। श्वमांसमस्थि मूत्रञ्च भुङ्क्ते खादति पाति च॥' इति। अपिच, ब्राह्मणैशिवप्रसाद एव भोक्तव्य, नान्यदेवताप्रसाद·, 'शम्भोर्निर्माल्यकं शुद्धं भुञ्जीयात् सर्वतो द्विज·। अन्यदेवस्य निर्माल्यं भुक्त्वा चान्द्रायणं चरेत्' इति शैवे स्मरणात्। परन्तु 'लोभान्न धारयेच्छम्भो निर्माल्यं न च भक्षयेत्' इत्यादिवचनैर्निषिद्धात् लोभाद्भक्षणादेवमेव संवृत्तमित्याशयेनेयमुक्तिरिति ध्येयम्। स्पष्टञ्चैतत्तद्व्याख्यायाम्। अपि च, शिवनिर्माल्यग्रहणे चण्डाधिकार एव प्रतिबन्ध, तद्विरहस्थले तस्य नाग्राह्यता। तदुक्तं मलयाचलखण्डे—'बाणे रत्नमये रसेन्द्रकलिते स्वायम्भुवे स्फाटिके चण्डेशाधिकृतिर्न तत्र कलिता नैवेह निर्माल्यता। चण्डेशोऽस्ति हि यत्र तत्र हि भवेन्निर्माल्यमावेदितं भोज्यं नैव तु वैदिकैर्द्विजवरै. प्राणात्यये सङ्कटे॥' इति। ननु 'अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्। साळग्रामशिलासङ्गात् सर्वं याति पवित्रताम्॥' इत्यादिवचनात् साळग्रामयोगाभावे शिवनिर्माल्यस्य सर्वत्रैव निषेधात् कथं बाणलिङ्गादिनिर्माल्यस्याग्राह्यतेति चेन्न, अधिकारिभेदेन विरोधपरिहारात्। तथाहि शैवे जैमिनि.—'अनर्हम्मम नैवेद्यं पदाम्बु कुसुमं जलम्। इतीश्वरेण कथितमिति केचिन्महर्षय·॥ वदन्ति तत् कथं स्वामिन् यथार्थं कथय स्व मे। व्यास उवाच—देवदेवस्य वचसो विषयोऽयं हि जैमिने। ये वीरभद्रशपिताः शिवभक्तिपराङ्मुखा॥ शम्भोरन्यत्र देवेषु ये भक्ता येन दीक्षिता। तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्॥' इत्यनेन त्रिविधानामेषां शिवप्रसादग्रहणा

नर्दृत्यं प्रतिपादितम्। तदेवाग्राह्यमिति पूर्वग्रंथेनाम्नानात्, यैरेतैरपि यदा पञ्चायतन पूजादौ साळग्रामेण सह शिवपूजा क्रियते, तदा तैरपि ग्राह्यमिति साळग्रामे स्नुवरार्धेन बोध्यते इति विषयभेदान्न विरोधशङ्कापीति। तस्माल्लोभशून्येन श्रद्धा यता पूजकेन शुद्ध्यादिफलप्राप्तये चण्डांशातिरिक्तनैवेद्यादेर्ग्रहणं कार्यमिति सर्ववाक्या विरोधेनैव सिद्धमिति विपश्चितो विदाङ्कुर्वन्तु। विस्तरस्तु शिवार्चनाचन्द्रिका

गृहे॥ शुभावयवसम्थाना शुभलक्षणलक्षिता। पर गृध्रमुखी जाता निर्माल्यस्यान्नभक्षणात्॥' इति च, तथापि 'बाणलिङ्गे स्वयम्भूते प्राणलिङ्गे हृदि स्थिते। अत्र कोटिगुण पुण्य शम्भोर्नैवेद्यभक्षणात्॥' इत्यादिवचनात्, 'रुद्रेणात्तमश्नन्ति रुद्रेण पीत पिबन्ति रुद्रेण घ्रात जिघ्रन्ति' इति जाबालश्रुते, 'त्रिगुप्सात्तमश्नीयात् यदि पाप्मन् शिवानर्पित भुङ्क्ष्व तदेना भुङ्क्ष्व मल भुङ्क्ष्व कृमि भुङ्क्ष्व अघ भुङ्क्ष्व अधो गच्छ गच्छ' इति कठश्रुतेश्च स्वयम्भूलिङ्गस्य आङ्कारेश्वरस्य नैवेद्यभक्षणादनन्तमेव पुण्यम्। अस्या श्रुतेरयमर्थ — त्रिगु तिस्र गाव चक्षूषि यस्य स त्रिणेत्र तेन प्सात भक्षितम् अश्नीयात्। हे पाप्मन् शिवानर्पित यदि भुङ्क्ष्व अश्नीया तदा एन पातकम्। अघम् उपपातकम्। तच्छिवानर्पितभोजने भवतीति। तथाचास्या उपक्रमण पाद्मे—'असमर्प्योदन शम्भो भुङ्क्ते खादति पाति चेत्। श्वमासमस्थि मूत्रञ्च भुङ्क्ते खादति पाति च॥' इति। अपिच, ब्राह्मणैश्शिवप्रसाद एव भोक्तव्य, नान्यदेवताप्रसाद, 'शम्भोर्निर्माल्यक शुद्ध भुञ्जीयात् सर्वतो द्विज। अन्यदेवस्य निर्माल्य भुक्त्वा चान्द्रायण चरेत्' इति शैवे स्मरणात्। परन्तु 'लोभान्न धारयेच्छम्भो निर्माल्य न च भक्षयेत्' इत्यादिवचनैर्निषिद्धात् लोभाद्भक्षणादेवमेव सङ्गतमित्याशयेनेयमुक्तिरिति ध्येयम्। स्पष्टञ्चैतत्तद्व्याख्यायाम्। अपि च, शिवनिर्माल्यग्रहणे चण्डाधिकार एव प्रतिबन्ध, तद्विरहस्थले तस्य नाग्राह्यता। तदुक्त मलयाचलखण्डे—'बाणे रत्नमये रसेन्द्रकलिते स्वायम्भुवे स्फाटिके चण्डेशाधिकृतिर्न तत्र कलिता नैवेह निर्माल्यता। चण्डेशोऽस्ति हि यत्र तत्र हि भवेन्निर्माल्यमावेदित भोज्य नैव तु वैदिकैर्द्विजवरै प्राणात्यये सङ्कटे॥' इति। ननु 'अग्राह्य शिवनिर्माल्य पत्र पुष्प फल जलम्। साळग्रामशिलासङ्गात् सर्वं याति पवित्रताम्॥' इत्यादिवचनात् साळग्रामयोगाभावे शिवनिर्माल्यस्य सर्वत्रैव निषेधात् कथ बाणलिङ्गादिनिर्माल्यस्याग्राह्यतेति चेन्न, अधिकारिभेदेन विरोधपरिहारात्। तथाहि शैवे जैमिनि —'अनर्हम्मम नैवेद्य पदाम्बु कुसुम जलम्। इतीश्वरेण कथितमिति केचिन्महर्षय॥ वदन्ति तत् कथ स्वामिन् यथार्थं कथय त्व मे। व्यास उवाच—देवदेवस्य वचसो विषयोऽय हि जैमिने। ये वीरभद्रशपिता शिवभक्तिपराङ्मुखा॥ शम्भोरन्यत्र देवेषु ये भक्ता येन दीक्षिता। तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्॥' इत्यनेन त्रिविधानामेषा शिवप्रसादग्रहणा

नर्हत्वं प्रतिपादितम्। तदेवाग्राह्यमिति पूर्वविनाम्नानात्, यैरेतैरपि यदा पञ्चायतन पूजादौ साळग्रामेण सह शिवपूजा क्रियते, तदा तैरपि ग्राह्यमिति साळग्रामे स्पुतरार्थेन बोध्यते इति विषयभेदान्न विरोधशङ्कापीति। तस्माल्लोभशून्येन श्रद्धा वता पूजकेन शुद्ध्यादिफलप्राप्तये चण्डांशातिरिक्तनैवेद्यादेर्ग्रहणं कार्यमिति सर्ववाक्या विरोधेनैव सिद्धमिति विपश्चितो विदाङ्कुर्वन्तु। विस्तरस्तु शिवार्चनाचन्द्रिका पुरुषार्थचिन्तामण्यादौ द्रष्टव्यः। उपास्यमिति। परमपदप्राप्त्यर्थमिति शेष, जाबालोपनिषदि अविमुक्तोपासनस्य मुक्तिफलकत्वश्रवणात्। तथाहि—'तस्मादवि मुक्तं निषेवेत' इत्यविमुक्तोपासनं प्राणेपूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासौ अमृतीभवति' इति। तत्राविमुक्तोपासनं द्विविधम् आध्यात्मिकम् आधिभौतिकञ्च। तत्र भ्रुवोर्घ्राणस्य च यस्सन्धि., तस्मिन्नीश्वरोपासनमाध्यात्मिकम्। काश्यामविमुक्त क्षेत्रे परमेश्वरदर्शनम् आधिभौतिकमिति शास्त्रव्यवस्था। एवञ्च तदेतद्द्विविधो पासनाफलमपि तारकब्रह्मविद्योपदेशद्वारा मुक्तिरेवेति मुक्तिफलकोपासनाविषयत्वं विश्व नाथस्येति। केचित्तु हरिपूजाया एव फलं मुक्ति, न तु शिवपूजाया·, तस्या ऐश्वर्य ज्ञानादिमात्रफलकत्वात्। 'आरोग्यं भास्करादिच्छेद्‌च्छ्रियमिच्छेद्धुताशनात्। ईश्वरा ज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्॥ यद्द्वारे मत्तमातङ्गा वायुवेगास्तुरङ्गमा। पूर्णेन्दुवदना नार्यः शिवपूजाविधे. फलम्॥' इत्यादिस्मरणादित्याहु, तन्न, उक्तश्रुत्या 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवा·। तदा शिवमविज्ञाय दु.खस्यान्तो भवि ष्यति॥' इति श्वेताश्वतरमन्त्रेण 'सर्वोपनिषदामर्थश्शिव एव न चापर। एकमेव हि तज्ज्ञानं तदज्ञानस्य नाशनम्॥' इति वामनपुराणवचनोपबृंहितेन, 'शिवलिङ्गं त्रिसन्ध्य महरहरभ्यर्चयेत्। ध्यात्वा साम्बं मामेव' इत्यादिजाबालश्रुत्या, 'यस्तु पूजयते नित्यं लिङ्गं त्रिभुवनेश्वरम्। स सर्वमोक्षराज्यस्य क्षिप्रं भवति भाजनम्॥ विद्या रूपं धनं सौख्यं सत्कुलं रोगनाशनम्। स्वर्गो राज्यञ्च मोक्षश्च शिवपूजाविधेः फलम्॥ यस्य स्तुत्या लभ्यते सत्यलोको यस्यार्चातो मोक्षलक्ष्मीरदूरा।' इत्यादिवचनसहस्रेण च शिव पूजाया मोक्षफलकत्वावगमात्। यद्द्वारे इत्याद्युक्तवचनन्तु कामिना पूजाविषयमेव। परन्तु विधिवत्कृतया देवतान्तरपूजयैव शिवाराधनवाञ्छा जायते इति विष्ण्वादि पूजाप्यावश्यकी। उक्तञ्च श्रीसूतेन—'ओङ्कारस्य प्रसादेन विष्णोश्चैव प्रसादत.। रुद्राराधनवाञ्छा स्यात्तदाराधनतः पुनः॥ ज्ञानमानन्दमद्वैतं परं ब्रह्माधिगच्छति। प्रसादादेव रुद्रस्य ज्ञानं मोक्षैकसाधनम्॥' इति। विस्तरस्तु श्रुतिसूक्तिमालादौ द्रष्टव्यः ॥ १३ ॥

गृहे॥ शुभावयवसंस्थाना शुभलक्षणलक्षिता। परं गृध्रमुखी जाता निर्माल्यस्यैव भक्षणात्॥' इति च, तथापि 'बाणलिङ्गे स्वयम्भूते प्राणलिङ्गे हृदि स्थिते। अत्र कोटिगुणं पुण्यं शम्भोर्नैवेद्यभक्षणात्॥' इत्यादिवचनात्, 'रुद्रेणात्तमश्नन्ति रुद्रेण पीतं पिबन्ति रुद्रेण घ्रातं जिघ्रन्ति' इति जाबालश्रुतेः, 'त्रिगुप्सातमश्नीयात् यदि पाप्मन् शिवानर्पितं भुङ्क्ष्व तदेनो भुङ्क्ष्व मलं भुङ्क्ष्व कृमिं भुङ्क्ष्व अघं भुङ्क्ष्व अधो गच्छ गच्छ' इति कठश्रुतेश्च स्वयंभूलिङ्गस्य ओङ्कारेश्वरस्य नैवेद्यभक्षणादनन्तमेव पुण्यम्। अस्याः श्रुतेरयमर्थः—त्रिगुः तिस्रः गावः चक्षूंषि यस्य सः त्रिणेत्रः तेन प्सातं भक्षितम् अश्नीयात्। हे पाप्मन् शिवानर्पितं यदि भुङ्क्ष्व अश्नीयाः तदा एनः पातकम्। अघम् उपपातकम्। तच्छिवानर्पितभोजने भवतीति। तथाचास्याः उपबृंहणं पाद्मे—'असमर्प्योदनं शम्भोः भुङ्क्ते खादति पाति चेत्। श्वमांसमस्थि मूत्रञ्च भुङ्क्ते खादति पाति च॥' इति। अपिच, ब्राह्मणैः शिवप्रसाद एव भोक्तव्यः, नान्यदेवताप्रसादः, 'शम्भोर्निर्माल्यकं शुद्धं भुञ्जीयात् सर्वतो द्विजः। अन्यदेवस्य निर्माल्यं भुक्त्वा चान्द्रायणं चरेत्' इति शैवे स्मरणात्। परन्तु 'लोभान्न धारयेच्छम्भोः निर्माल्यं न च भक्षयेत्' इत्यादिवचनैर्निषिद्धात् लोभाद्भक्षणादेवमेव संवृत्तमित्याशयेनेयमुक्तिरिति ध्येयम्। स्पष्टश्चैतत्तद्व्याख्यायाम्। अपि च, शिवनिर्माल्यग्रहणे चण्डाधिकार एव प्रतिबन्धः, तद्विरहस्थले तस्य नाग्राह्यता। तदुक्तं मलयाचलखण्डे—'बाणे रत्नमये रसेन्द्रकलिते स्वायम्भुवे स्फाटिके चण्डेशाधिकृतिर्न तत्र कलिता नैवेह निर्माल्यता। चण्डेशोऽस्ति हि यत्र तत्र हि भवेन्निर्माल्यमावेदितं भोज्यं नैव तु वैदिकैर्द्विजवरैः प्राणात्यये सङ्कटे॥' इति। ननु 'अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्। साळग्रामशिलासङ्गात् सर्वं याति पवित्रताम्॥' इत्यादिवचनात् साळग्रामयोगाभावे शिवनिर्माल्यस्य सर्वत्रैव निषेधात् कथं बाणलिङ्गादिनिर्माल्यस्याग्राह्यतेति चेन्न, अधिकारिभेदेन विरोधपरिहारात्। तथाहि शैवे जैमिनिः—'अनर्हम्मम नैवेद्यं पदाम्बु कुसुमं जलम्। इतीश्वरेण कथितमिति केचिन्महर्षयः॥ वदन्ति तत् कथं स्वामिन् यथार्थं कथय त्व मे। व्यास उवाच—देवदेवस्य वचसो विषयोऽयं हि जैमिने। ये वीरभद्रशापिताः शिवभक्तिपराङ्मुखाः॥ शम्भोरन्यत्र देवेषु ये भक्ता येन दीक्षिताः। तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्॥' इत्यनेन त्रिविधानामेषां शिवप्रसादग्रहणा

नर्हत्वं प्रतिपादितम्। तदेवाग्राह्यमिति पूर्वविनाम्नानात्, यैरैतैरपि यदा पञ्चायतन पूजादौ सालग्रामेण सह शिवपूजा क्रियते, तदा तैरपि ग्राह्यमिति सालग्रामे स्पुत्तरार्धेन बोध्यते इति विषयभेदान्न विरोधशङ्कापीति। तस्माल्लोभशून्येन श्रद्धा वता पूजकेन शुद्धयादिफलप्राप्तये चण्डांशातिरिक्तनैवेद्यादेर्ग्रहणं कार्यमिति सर्ववाक्या विरोधेनैव सिद्धमिति विपश्चितो विदाङ्कुर्वन्तु। विस्तरस्तु शिवार्चनाचन्द्रिका पुरुषार्थचिन्तामण्यादौ द्रष्टव्य। उपास्यमिति। परमपदप्राप्त्यर्थमिति शेष, जाबालोपनिषदि अविमुक्तोपासनस्य मुक्तिफलकत्वश्रवणात्। तथाहि—'तस्मादवि मुक्तं निषेवेत' इत्यविमुक्तोपासनं प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासौ अमृतीभवति' इति। तत्राविमुक्तोपासनं द्विविधम् आध्यात्मिकम् आधिभौतिकञ्च। तत्र भ्रुवोर्घ्राणस्य च यस्सन्धि, तस्मिन्नीश्वरोपासनमाध्यात्मिकम्। काश्यामविमुक्त क्षेत्रे परमेश्वरदर्शनम् आधिभौतिकमिति शास्त्रव्यवस्था। एवञ्च तदेतद्द्विविधो पासनाफलमपि तारकब्रह्मविद्योपदेशद्वारा मुक्तिरेवेति मुक्तिफलकोपासनाविषयत्वं विश्व नाथस्येति। केचित्तु हरिपूजाया एव फलं मुक्ति, न तु शिवपूजाया, तस्या ऐश्वर्य ज्ञानादिमात्रफलकत्वात्। 'आरोग्यं भास्करादिच्छेद्‌च्छ्रियमिच्छेद्धुताशनात्। ईश्वरा ज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्॥ यद्द्वारे मत्तमातङ्गा वायुवेगास्तुरङ्गमा। पूर्णेन्दुवदना नार्य शिवपूजाविधे फलम्॥' इत्यादिस्मरणादित्याहु, तन्न, उक्तश्रुत्या 'यदा चर्मवदाकाश वेष्टयिष्यन्ति मानवा। तदा शिवमविज्ञाय दु खस्यान्तो भवि ष्यति॥' इति श्वेताश्वतरमन्त्रेण 'सर्वोपनिषदामर्थश्शिव एव न चापर। एकमेव हि तज्ज्ञानं तदज्ञानस्य नाशनम्॥' इति वामनपुराणवचनोपबृंहितेन, 'शिवलिङ्गं त्रिसन्ध्य महरहरभ्यर्चयेत्। ध्यात्वा साम्बं मामेव' इत्यादिजाबालश्रुत्या, 'यस्तु पूजयते नित्य लिङ्गं त्रिभुवनेश्वरम्। स सर्वमोक्षराज्यस्य क्षिप्रं भवति भाजनम्॥ विद्या रूपं धनं सौख्यं सत्कुलं रोगनाशनम्। स्वर्गो राज्यञ्च मोक्षश्च शिवपूजाविधे फलम्॥ यस्य स्तुत्या लभ्यते सत्यलोको यस्यार्चातो मोक्षलक्ष्मीरदूरा।' इत्यादिवचनसहस्रेण च शिव पूजाया मोक्षफलकत्वावगमात्। यद्द्वारे इत्याद्युक्तवचनन्तु कामिना पूजाविषयमेव। परन्तु विधिवत्कृतया देवतान्तरपूजयैव शिवाराधनवाञ्छा जायते इति विष्ण्वादि पूजाप्यावश्यकी। उक्तञ्च श्रीसूतेन—'ओङ्कारस्य प्रसादेन विष्णोश्चैव प्रसादत। रुद्राराधनवाञ्छा स्यात्तदाराधनत पुन॥ ज्ञानमानन्दमद्वैतं परं ब्रह्माधिगच्छति। प्रसादादेव रुद्रस्य ज्ञानं मोक्षैकसाधनम्॥' इति। विस्तरस्तु श्रुतिसूक्तिमालादौ द्रष्टव्य ॥ १३ ॥

## त्रयोविंशस्तरङ्गः ।

कलानिधिसमप्रभा कलितमारदारत्रपा
प्ररूढकरुणाधुनी प्रमथनाथसम्मोहिनी ।
शिवे मनसिजत्रयीशिखरगूढतत्त्वात्मिका
प्रसन्नवदनातिथिर्मम दृशोः कदा वा भवेः ॥ १

त्रैलोक्यमोहनमहौषधिमोषधीश-
भूपेन्दुकान्तदृषदैन्दवकान्तिकेळिम् ।
लावण्यवारिधिसुधामसमायुधैक-
जीवातुवल्लिमगजे भवतीमुपासे ॥ २

पुराणैराम्नायैरपि जयति निर्व्याजकथित-
प्रभावा तीरे ते पुरमथितुराहोपुरुषिका ।
सदा सेव्या मर्त्यैस्तनुपतनतो यत्र गिरिशः
प्रतिज्ञापाकीटं दिशति सहसा मुक्तिमगजे ॥ ३

---

कलानिधीति ॥ कलितेति । कलिता कृता मारदाराणां कामपत्न्य
रतेः त्रपा यया सा । रत्यतिशायिसौन्दर्यशालिनीत्यर्थः । मनसिजेति । मान्मथो
निषत्सारभूतेत्यर्थः । अतिथिरिति । दृशोरतिथिरिति सम्बन्धः । नयनगोच
इत्यर्थः । भवेः, त्वमित्याक्षिप्यते ॥ १

त्रैलोक्येति ॥ ओषधीशभूपः शिवः स एव इन्दुकान्तदृषत् चन्द्रकान्तशि
तस्याः ऐन्दवकान्तिकेळिं हर्षप्रदत्वात् कौमुदीविलासरूपाम् । लावण्येति । लाव
सागरसम्भूतसुधारूपिणीमित्यर्थः । लावण्यलक्षणमुक्तमधस्तात् । असमेति । असमाः
विषमेषुः तस्य एकां मुख्यां जीवातुवल्लिं जीवनौषधलतिकाम्, अत्यन्तकामोद्
कत्वात् ॥ २

पुराणैरिति ॥ आम्नायैः जाबालादिश्रुतिभिः । जयति प्रयागादिमु
स्थानेभ्योऽप्युत्कृष्टतया वर्तते । तेषां काशीप्रापणद्वारैव मुक्तिसाधनत्वादिति भावः

निर्व्याजेति। रुद्ररोदनादिवत् गुणवादत्वं विना कथिताः प्रभावा एकेन जन्मना मुक्तिप्रापकत्वादिरूपा यस्यास्सेत्यर्थः। तथाच पुराणादिभिरुपाख्याता यत्प्रभावाः पारमार्थिका एवेति भावः। तदुक्तं काशीखण्डे—'नार्थवादोऽयमुदितः स्तुतिवादो न वै मुने। सत्यं यथार्थवादोऽयं श्रद्धेयस्सद्भिरादरात्॥ उदाहरन्ति ये मूढाः कुतर्कबलदर्पिताः। काश्यां सर्वोऽर्थवादोऽयं ते विट्कीटा युगे युगे॥' इत्यादि। एकेन जन्मना मुक्तिप्राप्तिश्च—'एक एव प्रभावोऽस्ति क्षेत्रस्य परमेश्वरि। एकेन जन्मना देवि मोक्षं प्राप्नोत्यनुत्तमम्' इति मत्स्यपुराणवचनादिसिद्धा। क्षेत्रान्तरेषु न तथा मुक्तिप्राप्तिः। तथाच पाद्मवचनम्—'अन्यत्र योगज्ञानाभ्यां सन्यासा दथवाऽन्यतः। प्राप्यते तत् परं स्थानं सहस्रेणैव जन्मनाम्॥' इति। पुरमथितुराहोपुरुषिका पुरमथितुर्विश्वनाथस्य आहोपुरुषिका आत्मोत्कर्षाभिमानः। 'आहोपुरुषिका दर्पाद्या स्यात्सम्भावनात्मनि' इत्यमरः। अत्र तत्त्वेनाध्यवसिता श्रीकाशी। सदा सेव्येति। 'तस्मादविमुक्तमेव निषेवेत, अविमुक्तं न विमुञ्चेत्' इति श्रुत्या सर्वदा अविमुक्तसेवाविधानात्। सदा सेव्यत्वे हेतु—मर्त्यैरिति। मरणधर्मिभिरित्यर्थः। तथाच मरणकालस्य निर्णेतुमशक्यतया मुमुक्षुभिः काशी कदापि न परित्याज्या इति भावः। तदुक्तं काशीखण्डे—'अविमुक्तं न मोक्तव्यं सर्वथैव मुमुक्षुभिः। सापायां सम्पदं ज्ञात्वा सापायं कायमुच्चकैः॥ चपलाचपलश्चायुर्मत्वा काशीं समाश्रयेत्।' इति, 'कायं विज्ञाय सापायं स्मृत्वा गर्भस्य वेदनाम्। त्यक्त्वा राज्यमपि प्राज्यं सेव्या काशी निरन्तरम्॥' इति च। तनुपतनतः शरीरपातमात्रेण। तदुक्तम्—'वाराणस्यां ध्रुवा मुक्तिः शरीरत्यागमात्रतः' इति। अत्र शिवाहोपुरुषिकायां काश्याम्। प्रतिज्ञायेति। प्रतिज्ञा काशीखण्डे—'स्थिरा काश्यामिहैवैका प्रतिज्ञा हि मया कृता। अत्रैव मृतमात्राणां तिरश्चामपि देहिनाम्॥ भक्तानामप्यभक्तानां पुण्यपापात्मनामपि। मुक्तिं दास्यामि सर्वेषां भक्तानामेव सा वहिः॥' इति। सा वहिरिति। काश्या अन्यत्र मुक्तिरित्यर्थः। सहसेति॥ तत्क्षण एवेत्यर्थः, 'नचातो व्यवधानवन्ति' इत्यव्यवधानस्मरणात्। तथाच वचनानि गर्गसंहितायाम्—'विश्वेश्वरस्य देवस्य काशी नाम्ना महापुरी। यत्र पापी मृतः सद्यः परं मोक्षं प्रयास्यति॥' इति। काशीखण्डे च लिंगतमाध्याये, 'नास्तीह दुष्कृतकृतां सुकृतात्मनां वा काचिद्विशेषगतिरन्तकृतां हि काश्याम्।

चितं लिङ्गैस्तीर्थैर्विधिहरिमुखानामनुपमैः
स्वकीयाख्यैः प्रायः प्रतिपदमिदं ब्रह्मसदनम्।
विमुक्तिस्थानानां वरममभयं देवयजनं
श्रयेऽहं दुष्प्रापं तटभुवि तवामर्त्यतटिनि ॥ ४ ॥

---

बीजानि कर्मजनितानि यदूषरायां नाङ्कुरयन्ति हरदग्ज्वलितानि तेषाम्॥' इति। अत्रैवं व्याख्या—नन्वेतत् काश्यां कृतपापानां कालभैरवयातनाश्रवणेन विरुध्यते॥ न पापे प्रवृत्तिर्माभूदिति विभीषिकामात्रं तत्। भोगमात्रनाश्यानां प्रारब्धमहापातकानां सत्त्वात्कथमिदमिति न शङ्क्यम्, काश्याः प्रभावातिशयात्। तदुक्तं पाद्मे—'उपपातकिनश्चैव महापातकिनश्च ये। तेषां तत्क्षेत्रसामर्थ्यादघानि क्षयमाप्नुयुः॥' इतीति। वस्तुतस्तु, अत्र सहसेत्यस्य गर्गसंहितायां सद्य इत्यस्य च जन्मान्तर परिग्रहं विनैवेत्यर्थः। तत्र चाकृतपापानां तत्क्षणे मुक्तिः। कृतपापानान्तु काल भैरवयातनानन्तरम्। 'काश्यां कृतेन पापेन यातनामतिभीषणाम्। प्राप्य पश्चा द्विमुच्यन्ते क्षीणकल्मषशालिनः॥' इति पाद्मवचनादिति विशेषः ॥ ३ ॥

चितमिति॥ चितं व्याप्तम्। विधिहरिमुखानां ब्रह्मकेशवप्रभृतीनाम्। तैः प्रतिष्ठितैर्निर्मितैश्चेत्यर्थः। अनुपमैः अत्युत्कृष्टैः। स्वकीयाख्यैः स्वकीया स्वसम्बन्धिनी आख्या येषां तैः। तथाचादिकेशवब्रह्मेशध्रुवेश्वरादिसंज्ञितैर्लिङ्गैः, विष्णुपादोदकध्रुवकुण्डादिसंज्ञितैस्तीर्थैश्च व्याप्तमित्यर्थः। अतथाभूतानामपि केषाञ्चि त्तेषां तत्र सत्त्वात् प्राय इति। प्रतिपदं पदे पदे। तदुक्तं काशीखण्डे—'तिलान्तरापि नो भूमिः काश्यां लिङ्गं विना क्वचित्।', 'काश्यां लिङ्गान्यनेकानि मुने सन्ति पदे पदे', 'प्रसङ्गतो मयैतानि तीर्थानि कथितानि ते। भूमौ तिलान्तरायां यत्तत्र तीर्थान्यनेकशः' 'तीर्थानि सन्ति भूयांसि काश्यामत्र पदे पदे' इत्यादि। ब्रह्मसदनं ब्रह्म लोकः। ब्रह्मोपदेशमोक्षप्राप्त्यादिसादृश्यनिबन्धनोऽयं काश्यास्तत्त्वेन व्यपदेशः। यथा 'अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम्' इत्यादिजाबालश्रुतौ। साम्यनिबन्धनत्वञ्च स्मर्यते—'अभ्यस्य ब्रह्मसदनं श्रुत्या तात्पर्ययुक्तया। सर्वस्य बोध्यते जन्तोर्मुक्तिरेकेन जन्मना॥ तद्ब्रह्मलोकवाक्येन ब्रह्मलोकगता जनाः। यथा सर्वे विमुच्यन्ते तथैवात्रापि जन्तवः॥ तत्र ब्रह्मोपदेष्टा स्यादत्र साक्षान्महेश्वरः। स तस्यापि पर माचार्यो यो ब्रह्माणमिति श्रुतेः॥' इति। विमुक्तिस्थानानां परमं साक्षान्मुक्ति

माधनत्वादत्युत्कृष्टम्। तदुक्तं काशीखण्डे—'काशी काञ्ची च मायाख्या त्वयोध्या द्वारवत्यपि। मथुराऽवन्तिका चैताः सप्त पुर्योऽत्र मोक्षदाः॥ श्रीशैलो मोक्षदस्तस्य केदारोपि ततोऽधिकः। श्रीशैलाच्चापि केदारात् प्रयागं मोक्षदं परम्॥ प्रयागादपि तीर्थाग्र्यादविमुक्तं विशिष्यते। यथाऽविमुक्ते निर्वाणं न तथान्येष्वसंशयम्॥ अन्यानि मुक्तिक्षेत्राणि काशीप्राप्तिकराणि च।' इति, 'कियन्ति सन्ति नो भूम्यां मोक्षक्षेत्राणि षण्मुख। परं मन्येऽविमुक्तस्य कोट्यंशोपि न तेष्वहो।' इति च। अभयं न विद्यते भयं यत्र तत्। तदुक्तं काशीखण्डे—'न यत्र काश्यां कलिकालजं भयं न यत्र काश्यां मरणात् पुनर्भवः। न यत्र काश्या कलुषोद्भवं भयं कथं विभो सा नयनातिथिर्भवेत्॥' इति। अत्र व्याख्या—हे विभो कथं सा काशी नयनातिथिर्नेत्रविषयः स्यात्। कीदृशी—यस्यां कलिकालजं भयं नास्ति, कलेस्तत्राप्रवेशात्, प्रवेशे वा तस्याकिञ्चित्करत्वात्। न च तर्हीदानीं कथं तत्र कलिधर्मा दृश्यन्त इति वाच्यम्, तेषां रुद्ररूपाणां काश्येकनिवासिनां प्रारब्धसत्त्वात्। न यत्र काश्यां मरणात् पुनर्भवः, भवः जन्म, मरणाव्यवहितसमये तत्त्वज्ञानेन कैवल्यप्राप्तेः। न यत्र काश्यां कलुषोद्भवं भयम्, पापस्यात्रानुत्पादात्। तथाच स्मर्यते—'ऊषरा पुण्यपापानां धन्या वाराणसी पुरी' इति। लैङ्गे च, 'नाविमुक्ते नरः कश्चिन्नरकं याति किल्बिषी। ईश्वरानुगृहीता हि सर्वे यान्ति परां गतिम्॥' इति। नच कालभैरवयातनाशास्त्रविरोधः, तस्याः पश्चाद्भावित्वात्। पातभयराहित्याद्वा अभयत्वम्, 'काश्यां पाताद्भयन्नास्ति' इति स्मरणादिति। देवयजनं सर्वदेवा यत्र इज्यन्ते पूज्यन्ते तत्। सर्वदेवानां स्वांशेनात्र निवासादिति भावः। यद्वा, सर्वे देवा यत्र विश्वेश्वरं यजन्ति पूजयन्ति तत्। दुष्प्रापमिति। ईश्वरानुग्रहमात्रेण प्राप्यत्वात्। तदुक्तं काशीखण्डे—'न तत्पुण्यैर्न तद्दानैर्न तपोभिर्न तज्जपैः। न लभ्यं विविधैर्यज्ञैर्लभ्यमैशादनुग्रहात्॥ ईश्वरानुग्रहादेव काशीवासस्सुदुर्लभः। सुलभः स्यान्मुने नूनं न वै सुकृतकोटिभिः॥' इति। अत्र, तत् क्षेत्रमिति व्याख्या॥ ४॥

आविर्भूतः पुरारेर्मुनिसदसि रुपी वर्पिणं पद्मयोने-
रात्मानं सावलेपं सपदि विवदतो देवि शीर्षं नखेः
छित्वा तीर्थे त्वदीये दिशि दिशि विचरन् ब्रह्महत्यानु.....
स्नातो मुक्तः कपालादपि यमवदितो राजते कालराजः ॥ ५ ॥

---

गङ्गाया माहात्म्यातिशयमाविष्कुर्वन् कालभैरव स्तौति—आविर्भूत इति ॥ पुरारेर्महेश्वरस्य । अनेन गर्वासहत्व द्योत्यते । मुनिसदसि मेरुशृङ्गे 'किमेक तत्त्वम व्ययम्' इति पितामह पृष्टवतामृषीणा सदसि। रुप कोपात्। आविर्भूत इत्यने नान्वय । रोषस्य हेतु दर्शयन् कालभैरवाविर्भावप्रयोजन दर्शयति—वर्पिणमित्यादि । आत्मानं वर्पिणं श्रेष्ठं सावलेपं सगर्वं विवदत यज्ञमूर्तिना नारायणेन सह महेशमाया मोहितत्वाद्वाद कुर्वत पद्मयोनेरिति सम्बन्ध । तदुक्तं ब्रह्माण्डपुराणे—'स मायया महेशस्य मोहितो लोकसम्भव । अविज्ञाय परं भावमात्मान प्राह वर्पिणम् ॥' इति। सपदीति छेदनक्रियाविशेषणम्। शीर्षं पञ्चमं शिर , 'यदङ्गमपराध्नोति कार्यं तस्यैव शासनम्' इति न्यायात्। नखेन वामकनिष्ठिकाङ्गुलिनखाग्रेण। तीर्थे इति। स्नात इत्यनेनान्वेति। दिशि दिशीति। प्रतितीर्थं प्रतिलोक प्रतिक्षेत्रमित्यर्थ । विचरन् कापालिकव्रतमास्थितो भिक्षामादाय पर्यटन्। विचरणस्य निमित्तमाह—ब्रह्महत्यानुयात इति। ब्रह्महत्यया भगवत्सृष्टया कन्यारूपिण्या करालमूर्त्या ब्रह्म हत्यया अनुयात इत्यर्थ । तथाच तन्मोचनार्थं पर्यटनमिति भाव । वस्तुतस्तु लोकशिक्षार्थं भगवद्वचनात् पर्यटनमिति बोध्यम्। स्नात इति। वैकुण्ठपर्यन्त पर्यटताप्यलब्धमोचनेनानेन तत काशीमागत्य प्रपद्योपायमापृष्टस्यादिकेशवसज्ञस्य परमेश्वरस्य वचनादिति बोध्यम्। स्नातो मुक्त इत्यनेन स्नानाव्यवधान स्नानेतर नैरपेक्ष्यञ्च मोचनस्य लभ्यते। कपालात् शिरोविदलनसमये हस्ते दृढतरलग्नात् ब्रह्मण कपालात्। अत एवास्य तीर्थस्य कपालमोचनसंज्ञेति बोध्यम्। अपि शब्देन ब्रह्महत्यापरिग्रह । ब्रह्महत्यानिवृत्तिस्तु काशीप्रवेशमात्रेणेति ध्येयम्। यमव दिति। यम इव पापाना शास्तेत्यर्थ, काश्या कृतपापाना कालभैरवस्यैव दण्डनकर्तृत्वात्। इत इह काश्याम्। राजते काशीक्षेत्रसर्वाधिपत्येन वर्तते। कालराज कालवद्राजत इति कालराज । तदुक्तम्—'कालवद्राजते साक्षात् कालराजस्ततो भवान्' इति। तथाच त्वत्तीर्थस्नानेनैव कालराजस्यैतावान् प्राभव इति

शिष्यैः काशीमशापां निरवधिविभवामेत्य भिक्षामलब्ध्वा-
क्रुद्धं हा शप्तवन्तं सुरधुनि विविधं भक्तमातृप्ति दत्वा।
व्यासं या शैवशापग्लपितमथ मुहुः प्रार्थिताऽऽश्वास्य किञ्चि-
त्तत्क्षेत्रात् प्राहिणोच्चे तटभुवि सकृपां नौमि तामन्नपूर्णाम् ॥ ६ ॥

तिष्ठन् सीमासु सप्तस्वपि नगरमिदं मुक्तिलक्ष्मीनिकेतं
षट्पञ्चाशत्स्वरूपैस्तटगतमभितः पाति शम्भोर्घनं यः।
ईशो येनान्धकादीनमरधुनि हतान् दृष्टिबाणैरहिंसीत्
ढुंढिं तं त्वत्प्रणूतं मुहुरखिलजगत्सूत्रधारं प्रणौमि ॥ ७ ॥

---

भावः। यमवद्राजत इत्युक्त्या कालराजपदव्युत्पत्तिः सूचिता। कालभैरवस्यायमुत्प विप्रकारः काशीखण्डे एकत्रिंशाध्याये सविस्तरमुपवर्णित ॥ ५ ॥

शिष्यैरिति॥ सहार्थे तृतीया। अशापामिति। अत्र दत्तोपि शापः न प्रभवतीत्यर्थः। निरवधिविभवामिति। अनेन भिक्षानवाप्तिर्भगवदाज्ञया देवी कृतनिषेधादेवेति सूचितम्। क्रुद्धमिति। प्रथमदिने पर्यटनेनालाभः सोढ, पर दिनेप्यलाभे क्रोधो जात इति भावः। शप्तवन्तमिति। शापप्रकारश्च काशीखण्डे— 'मा भूत्त्रैपूरुषी विद्या मा भूत्त्रैपूरुषं धनम्। मा भूत्त्रैपूरुषी मुक्तिः काशी व्यासः शपन्निति॥' इति। भक्तमातृप्ति दत्वेति। पुनः पुनरप्यटित्वा अलब्धभिक्षाय श्रान्ताय शिष्यैः सार्धमाश्रमं प्रति प्रतिनिवृत्ताय व्यासाय मध्ये मार्गे प्राकृतस्त्रीरूपिण्या गृहद्वारि निषण्णया देव्या अतिथित्वेनाहूय यथेष्टं भिक्षा दत्तेति पौराणिकी कथा। शैवशापेति। तत्प्रकारश्च तत्रैव, 'अद्य प्रभृति न क्षेत्रे मदीये शापवर्जिते। आवस क्रोधन मुने न वासे योग्यताऽत्र ते॥ इदानीमेव निर्गच्छ बहिः क्षेत्रा दितो भव। त्वद्विधानां न योग्यं मे क्षेत्रं मोक्षैकसाधनम्॥' इति। मुहुः प्रार्थिता शापनिवृत्त्यर्थं व्यासेन पुनः पुनः प्रार्थिता। आश्वास्येति। प्रत्यष्टमि प्रतिचतुर्दशि च काशीप्रवेशनादेशेन शापसङ्कोचं कृत्वा किञ्चित् आश्वास्येत्यर्थः। तटभुवीति। तीरस्थितामित्यर्थः। तथाच गङ्गाया माहात्म्यातिशय सूचितः। इयं कथा काशीखण्डे पञ्चनवतितमाध्याये उपवर्णिता ॥ ६ ॥

तिष्ठन्निति॥ सीमासु आवरणेषु। इदं नगरं श्रीकाशीम्। षट्पञ्चाश त्स्वरूपैरिति। सप्तस्वावरणेषु प्रत्येकं नामरूपादिभेदैरष्टावष्टाविति षट्पञ्चाशत्स्व

यस्याः पानीयपानादलभत परमं ज्ञानमीशो निजेन
प्रोत्खाताया हि लिङ्गस्नपनकुतुकिना दिव्यतोयेन यस्याः।
सिक्तेऽस्मिन् सर्वतीर्थस्नपनजमगजे पुण्यमाप्नोति मर्त्यः
सेयं ज्ञानद्रवास्मिन् जयति तव तटे मुक्तिदा ज्ञानवापी ॥ ८ ॥

रूपैरित्यर्थः। धनमिति। अत्यन्तं प्रेमास्पदत्वात् धनत्वारोपः। ईश इत्यादि। येन ढुंढिना। दृष्टिबाणैः क्रोधदर्शनबाणैः हतान् हतप्रायानेव अन्धकादीन् ईशः अहिंसीदित्यन्वयः। तथाच काशीखण्डे ढुंढिं प्रति शिवस्य वचनम्—'त्वद्दुष्टदृष्टि विशिखैर्निहतान् निहन्मि। दैत्यान् पुरान्धकजलन्धरमुख्यकांश्च॥' इति। ढुंढिं तदाख्यं गणेशम्। तन्नामनिरुक्तिरपि तत्रैव—'अन्वेषणे ढुंढिरयं प्रथितोऽस्ति धातुः सर्वार्थ ढुंढिततया तव ढुंढिनाम' इति। अत्रेयं व्याख्या—ढुंढिनाम निर्वक्ति—अन्वेषणे ढुंढिरिति। अयं ढुंढिरिति धातुः क्रियाप्रतिपादकः लोके अन्वेषणे प्रथितः प्रसिद्धः अस्ति। अतः भक्तानां सर्वार्थढुंढिततया सर्वस्यार्थस्य ढुंढितं ढुंढनं यस्मात् स ढुंढितः। तारकादित्वादितच्। तस्य भावः सर्वार्थढुंढितता तया सर्वार्थालोचकतया धर्मार्थकाममोक्षान्वेष्टृतया इत्यर्थः। यद्वा, साधारण्येन सर्वेषां सर्वार्थालोचकतया तव ढुंढिनाम। इदनुबन्धत्वान्नुमागम इति। तत्प्रणूतम् ईशस्तुतम्। अखिलजगत्सूत्रधारम् अस्य स्थावरजङ्गमात्मकस्थूलप्रपञ्चस्य धारको यः सूत्रात्मा हिरण्यगर्भो वाय्वात्मा तं धारयतीति तथा, तमित्यर्थ इति। तटगमि त्यनेन गङ्गाया माहात्म्यं सूचितम् ॥ ७ ॥

यस्या इति॥ परमं ज्ञानमिति। तदुक्तं काशीखण्डे—'ईशानो जटिलो रुद्रस्तत् प्राश्य परमोदकम्। अवाप्तवान् परं ज्ञानं येन निर्वृतिमाप्तवान्॥' इति। निजेन आत्मना। लिङ्गेत्यादि। लिङ्गस्नपनकुतिकिना निजेन प्रोत्खाताया इत्यन्वयः। तदुक्तं तत्रैव—'प्रविश्य क्षेत्रमेतत्स ईशानो जटिलस्तदा। लसत्त्रि शूलविमलरश्मिजालसमाकुलः॥ आलुलोके महालिङ्गं वैकुण्ठपरमेष्ठिनोः। महाह महमिकायां प्रादुरास यदादितः॥' इत्युपक्रम्य 'अस्येशानस्य तल्लिङ्गं दृष्ट्वेच्छेत्य भवत्तदा। स्नपयामि महल्लिङ्गं कलशैरशीतलैर्जलैः॥ चखान च त्रिशूलेन दक्षि णाशोपकण्ठतः। कुण्डं प्रचण्डवेगेन रुद्रो रौद्रवपुर्धरः॥' इति। हीति प्रसिद्धौ। सर्वतीर्थेत्यादि। तदुक्तं तत्रैव—'ज्ञानोदतीर्थपानीयैर्लिङ्गं यः स्नपयेत्सुधीः। सर्व

या चक्रेण मुरारिणा विरचिता यस्यां शिरश्चालनात्
स्थाणोः कर्णमणिः पपात तपसामृद्धीक्षणानन्दिनः।
तीर्थैः पापविमोचनार्थमखिलैर्नित्यं शिवे सेविता
सेयं श्रीमणिकर्णिकोत्तमतमा जागर्ति तीरे तव ॥ ९ ॥

सम्भ्रान्त्युद्भ्रान्तिनामप्रबलसहचररताचक्रैतत्तटस्थान्
दुष्टान् निष्कास्य दूरं सततमवति यः मज्जनानन्ददाता।
सारूप्याधानदक्षं चिरनिचिततपस्साधितेशप्रसादं
यक्षेशं काशिरक्षानिरतमविरतं नौमि तं दण्डपाणिम् ॥ १० ॥

---

तीर्थोदकैस्तेन ध्रुवं संस्नापितं भवेत्' इति। ज्ञानद्रवेति। तथाच तत्रैव विश्वेश्वरवचनम्—'शिवं ज्ञानमिति ब्रूयुः शिवशब्दार्थचिन्तकाः। तच्च ज्ञानं द्रवीभूतमिह मे महिमोदयात्॥ अतो ज्ञानोदनामैतत्तीर्थं त्रैलोक्यविश्रुतम्।' इति, 'ज्ञानरूपोऽहमेवात्र द्रवमूर्तिं विधाय च। जाड्यविध्वंसनं कुर्यां कुर्यां ज्ञानोपदेशनम्॥' इति च ॥ ८ ॥

येति॥ मणिकर्णिकासंज्ञानिमित्तमाह—यस्यामित्यादिना। शिरश्चालने हेतुं दर्शयति—तपसामित्यादि। तपसां विष्णुना चरितानां पञ्चाशत्सहस्रवार्षिकाणां तपसाम्। उत्तमतमेति। 'अहं स्नाम्यत्र सततमुमया सह पर्वसु। ब्रह्मणा विष्णुना सार्धं महेन्द्रादिसुरर्षिभिः॥ सत्यं सत्यं पुनः सत्यं सत्यपूर्वमिदं वचः। मणिकर्णीसमं तीर्थं नास्ति ब्रह्माण्डगोळके॥ सर्वतीर्थावगाहाच्च यत् पुण्यं स्यान्नृणामिह। तत् पुण्यं कोटिगुणितं मणिकर्ण्येकमज्जनात्॥' इत्यादिवचनात्। विस्तरस्तु काशीखण्डे द्रष्टव्यः ॥ ९ ॥

सम्भ्रान्तीति॥ सम्यक् भ्रान्तिर्यस्मात्स सम्भ्रान्तिः। उत्कृष्टा भ्रान्तिर्यस्मात्स उद्भ्रान्तिः। तौ दुष्टनिष्कासनाय दण्डपाणेः सहचरौ प्रसिद्धौ। अन्नदातेति। तथाच काशीखण्डे दण्डपाणिं प्रति महेश्वरवचनम्—'त्वमन्नदः काशिनिवासिनां सदा' इत्यादि। सारूप्याधानदक्षं काशयामन्तकाले भक्तानां शिवसारूप्योचितनेपथ्यविधानचतुरम्। तथाच तत्रैव भगवद्वचनम्—'त्वमन्त्यभूषां कुरु काशिवासिनां गळे मुनीलां भुजगेन्द्रकङ्कणान्' इत्यादि। यक्षेशमिति। पूर्ण

अत्रागत्येशवाक्यात् प्रचुरतरपुरीभूतिदत्तायताक्षः
संपूज्यैशानलिङ्गं विरतमथ दिवोदासमुद्वास्य मायी।
यः श्रीमान् बिन्दुतीर्थे तव लसति शिवे मुक्तिदो माधवाख्या
नामार्धेनाग्निबिन्दोर्विशदयति युता यं श्रये श्रेयसे तम् ॥ ११ ॥

गौरीशाज्ञानुसारं पुरमथनपुरं प्राप्य तत्तादृशश्री-
लास्ये लोलः किलास्मिन्नधितटमयि ते योऽनुमेनेऽधिवासम्।
तत्तद्भक्तानुकम्पाभरपरिकलितद्वादशात्मानमेन-
श्शान्त्यै वन्दे तमुज्जृम्भितनिखिलतमःखण्डनं चण्डभानुम् ॥ १२ ॥

---

भद्रसुतो हरिकेशो नाम यक्षश्रेष्ठस्तमित्यर्थः। चिरकालचरितेन घोरेण तपसा भगवन्तमाराध्य तत्प्रसादेन काशीपालनरूपं भगवत्कैङ्कर्यमवाप्तवानितीयं कथा काशीखण्डे द्वात्रिंशाध्याये समुपवर्णिता ॥ १० ॥

बिन्दुमाधवमनुसन्धत्ते—अत्रेति॥ अत्र काश्याम्। आगत्य मन्दराद्रेः। ईशवाक्यात् ईशस्य मन्दराचलनिवासिनः परमेश्वरस्य वाक्यात् 'तथा त्वमपि मा कार्षीर्यथा प्राक् प्रस्थितैः कृतम्' इत्येवं रूपात्। भूतिदत्तेति। अनेन आयतयोरक्ष्णोस्साफल्यं निरतिशयपुरविभूतिदर्शनेनैव जातमिति सूचितम्। विरतं वैराग्ययुक्तम्। दिवोदासं तदाख्यं काशीपालं राजानम्। उद्वास्य अन्यथा परमेश्वरस्य देवानाञ्च काश्यां दुष्प्रवेशत्वादिति भावः। मायी मायया सौगतरूपधारी। श्रीमान् परिव्राजिकारूपधारिण्या लक्ष्म्या सहितः। मायी श्रीमांश्च सन् उद्वास्येति सम्बन्धः। कथान्तरं सूचयति—माधवाख्येत्यादि। माधवाख्या अग्निबिन्दोः नामार्धेन नामैकदेशेन बिन्दुशब्देन युता सती यं विशदयति बोधयतीत्यन्वयः। तं बिन्दुमाधवम्। यच्छब्दयोर्द्वयोः प्रतिशब्दोऽयम्। अग्निबिन्दुर्नाम कश्चिन्महर्षिश्चिरं काश्यां तपश्चचार। ततस्तस्य वरप्रदानार्थमाविर्भूतेन विष्णुना वरं पृष्टोऽसौ 'मदाख्यार्धसहितनिजनाम्ना स्थिरमत्रैव निवस, एतदेव मदभिमतो वरः' इत्युक्तवान्। तदनुसारेण भगवान् बिन्दुमाधवाख्यस्सन् तत्रैव बिन्दुतीर्थमध्युवास। कथेयं काशीखण्डे सुस्पष्टा ॥ ११ ॥

गौरीशाज्ञेति॥ आज्ञास्वरूपञ्च काशीखण्डे षट्चत्वारिंशाध्याये—'सप्ताश्व त्वरितो याहि पुरीं वाराणसी शुभाम्। यत्रास्ति स दिवोदासो धर्ममूर्तिर्महीं

निशितदशशतारं सूर्यकोटिप्रभं यो
नयनसरसिजार्चासुप्रसन्नो रथाङ्गम्।
दितिजहननलीलं शार्ङ्गिणे कालरूपं
व्यतरदतिकृपालुस्तं भजे काशिकेशम् ॥ १३ ॥

इति गङ्गातरङ्गिण्यां त्रयोविंशस्तरः ॥

---

पतिः॥ तस्य धर्मविरोधेन यथा तत्क्षेत्रमुद्वसेत्। तथा कुरुष्व भो क्षिप्रं माव मंस्थाश्च तं नृपम्॥' इत्यादि। उद्वसेत् उच्छिन्नं भवेदिति तद्व्याख्या। लोल इति। लोलत्वादेवास्य लोलार्कसंज्ञेति स्मर्यते तत्रैव। 'तस्यार्कस्य मनो लोलं यदासीत् काशिदर्शने। अतो लोलार्क इत्याख्या काश्यां जाता विवस्वत॥' इति। द्वादशात्मानमिति। द्वादशरूपमित्यर्थः। एषां नामानि च तत्रैवेत्थं दर्शितानि—'लोलार्क उत्तरार्कश्च साम्बादित्यस्तथैव च। चतुर्थो द्रुपदादित्यो मयूखादित्य एव च॥ खखोल्कश्चारुणादित्यो वृद्धकेशवसंज्ञकौ॥ दशमो विमलादित्यो गङ्गादित्यस्तथैव च। द्वादशश्च यमादित्यः काशीपुर्यां घटोद्भव॥ तमोधिकेभ्यो दुष्टेभ्यः क्षेत्रं रक्षन्त्यमी सदा।' इति। तमोधिकेभ्यः आत्यन्तिकतामसेभ्य इति तद्व्याख्या ॥ १२ ॥

निशितेति॥ नयनेत्यादि। नयनसरसिजार्चया स्वचक्षुषा कमलसहस्रं पूरयित्वा विहितया अर्चयेत्यर्थः। सुप्रसन्नः नियमपरिपालनेन सम्प्रीतः। रथाङ्गं सुदर्शनम्। दितिजहननलीलम् असुरनिग्रह एव लीला क्रीडा यस्य तम्। कालरूपमिति। उक्तञ्च भगवत्पादैः—'आहुर्यस्य स्वरूपं क्षणमुखमखिलं सूरयः कालमेतं ध्वान्तस्यैकान्तमन्तं यदपि च परमं सर्वधाम्नाञ्च धाम। चक्रं तच्चक्रपाणेर्दितिजतनुगलद्रक्तधाराक्तधारम्' इत्यादि। व्यतरदिति। अत्रेयं विष्णुपुराणादिस्पष्टा कथा विज्ञेया। एकदा देवेन्द्रः स्वबिरुदावलीभिः कैलासं गतः। तत्र द्वास्थवेषं हरं प्रत्यजानन् समयं पृष्ट्वा तेन धिक्कृतः शक्रो भिया पपात॥ ततः क्रुद्धस्य हरस्य ललाटाक्षिस्फुलिङ्गपरिणतो जलन्धरासुरो हरदत्तवरदर्पितस्सन् लोकानपीडयत्। तमायुधाद्यप्रधर्षं जिघांसुभिरमरैरभ्यर्थितो हरस्सिद्धवेषधरः पृथिव्यां चक्राकारं पादाङ्गुष्ठेन लिखित्वा बलदिदृक्षयेव 'इदमुद्धर' इत्युक्तस्तथा तदुद्धारमात्रेण सोऽसुरो

वन्दे: त्रिपुरारिगरनगरीमेतां शिवे पावनीं
देवीदेहसमुत्थिताभिरभितः संरक्षितां शक्तिभिः ।
ये नामारिरमन्ति गर्भरमनैर्भीता निरस्याखिलं
मृत्यु मित्रमिव प्रतीक्ष्य कतिनस्त्वद्भूषितां मुक्तिदाम् ॥ १ ॥

स्थ । नयन कमलनिरमाराधन कृतवते हरये ददौ । पुनर्दक्षयागे तच्च हरिणा प्रयुक्तं वीरभद्रमालान्तरे कवलितम् । पुन कालान्तरे एकस्य कमलस्य न्यूनियनकमलार्पणनमद्भीतेन मुकुन्देन स्वनेत्रमुपदीकृत्य प्रसन्नात् परमेश्वरात् लब्धमित्यर्थः । लिङ्गपुराणे, 'एवमुक्त्वा ददौ चक्र सूर्यायुतसमप्रभम् । नेत्र च नेत्रा जगता प्रभोर्नं पद्मसन्निभम् ॥ तदा लोकास्तु त प्राहु पद्माक्ष इति सुव्रता । दत्त्वा नयन चक्र विष्णवे नीललोहित ॥ पस्पर्श च कराभ्या वै सुशुभाभ्यामुवाच ह इति । ब्रह्माण्डपुराणेच, 'चक्र जलन्धरवधाय शिवेन पूर्वं यन्निर्मितं सवि. कोटिसमानकान्ति' इति । तत्रैवोत्तरभागे हयग्रीवागस्त्यसवादे, 'शरैरजेयमालोक्य वीरभद्र जनार्दन । यत्प्राक्षिपत्सहस्रार चक्र लोकभयङ्करम् ॥' इति च । तत्रैव विष्णु प्रार्थनम्—'वीरभद्र महाभाग स्थाने तव पराक्रम । वज्रादपि महाभीम गिरि कोटिसभेदनम् ॥ दुर्धर्षमपि मच्चक्र यत्त्वयाऽऽलिङ्गित हठात् । तस्मादद्य शिवद्रोहकारिण जहि दुर्धियम् ॥ कालान्तरे महेशस्य कृत्वा च बहुधा तप । आप्स्याम्यहं मच्चक्र त्वद्गुरो परमेश्वरात्' इति । उक्तञ्च दीक्षितचरणै — 'नेत्रेण रौति शाक दशशतकमलैर्विष्णुना पूजितत्वात्तस्मै चक्रप्रदानादपि च पशुपति सर्वदेवप्रद ' इति, 'नेत्राम्भोजसमर्पणेन हरये तुष्टो रथाङ्ग ददौ' इति, 'स्वनेत्र नयतो हि यस्य चरणाम्बुजाग्रसम्पादिता रेखा काचन हेतिराजपदवी प्राप्ता अतिक्षुता । तथा दैत्यभिदा तपोभिरुपदीकृत्य स्वक लोचनम्' इति च ॥ १३ ॥

वन्द इति ॥ अभित सरक्षिता शक्तिभिरिति । तथाच काशीखण्डे— 'ततोऽभगवती देवी स्वशरीरसमुद्भवा । शक्तीरुत्पादयामास शतशोऽथ सहस्रश ॥' इति, 'ता काशीं परिरक्षन्ति चतुर्दिक्षूद्यतायुधा ' इति च । मित्रमिव प्रतीक्ष्येति ।

संख्यातीतानि यानि त्रिदिवबलिपुरीभूतलस्थैरनेकै-
लिङ्गानि स्थापितानि स्मरहरनगरे यानि तीर्थानि चास्मिन् ।
स्मृत्या प्राग्जन्मकोटीकृतदुरितचयोन्मूलविध्वंसकेभ्य-
स्तेभ्यो लोकोत्तरेभ्यः प्रणतिमुपगतस्सर्वदा सर्वदेभ्यः ॥ २ ॥

---

कृतकृत्यत्वादिति भावः । तदुक्तमभियुक्तैः—'कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रिय मिवातिथिम् । प्रायेण कृतकृत्यत्वान्मृत्योरुद्विजते जनः ॥' यद्वा, काशीमरणस्य सद्यो मुक्तिफलकत्वेन नितरां काम्यत्वादिति भावः । ननु काश्यां मरणसामान्यस्यैव मुक्तिफलकत्वे उद्बन्धनादिना स्वयं मरणाश्रयणस्यैव युक्तत्वात् किमर्थं कालप्रतीक्षा, नच दुर्मरणदोषः शङ्क्यः, 'सूच्यग्रमात्रमपि नास्ति ममास्पदेऽस्मिन् स्थानं सुरेश्वरि मृतस्य न यत्र मुक्तिः । भूमौ जले वियति वाऽशुचि मध्यतो वा सर्पाग्निदस्यु पविभिर्निहतस्य जन्तोः ॥' इति पाद्मोक्त्या दुर्मरणस्याप्यत्र मुक्तिफलकत्वावग मेन निर्दोषत्वादिति चेन्न, 'कालेनोपरता यान्ति शिवसायुज्यमुत्तमम्' इति मात्स्य वचनस्य, 'त्यक्तासुरत्र स्वयमेव काले मामेव भक्तः प्रविशेद्विशङ्कः' इति सन त्कुमारवचनस्य चानुरोधेनात्महत्याव्यतिरिक्तदुर्मरणस्यैवातात्मिप्रेतत्वात् । काले नेत्यस्य स्वरसतः उपरमे एवान्वयात् । प्रायोपवेशनाग्निप्रवेशयोस्तु वचनान्तरबलाद्दोषा भावः । तदुक्तं मात्स्ये—'अग्निप्रवेशं ये कुर्युरविमुक्ते विधानतः । प्रविशन्ति मुखं ते मे निस्सन्दिग्धं वरानने ॥' 'तथा कुर्वन्त्यनशनं ये तु मद्भक्ताः कृत निश्चयाः । न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥' इति । काशीखण्डेपि, 'विना त्मघातमीशान त्यक्त्वा प्रायोपवेशनम् । नैश्रेयस्याः श्रियो हेतुस्तदस्तु जगदीश्वर ॥' इति । प्रायोपवेशनं त्यक्त्वा आत्मघातं विनेति सम्बन्धः । स्पष्टञ्चैतत्त्रिस्थली सेतौ ॥ १ ॥

संख्येति ॥ लिङ्गानीति । लिङ्गशब्दार्थनिरुक्तिरेवं पाद्मे—'लिङ्गं लिङ्गशरी रस्य विश्लेषं गमयेत् परम् । तेन लिङ्गमिति ख्यातमपवर्गैकसाधनम् ॥' इति । स्मृत्या स्मृतिमात्रेण । उन्मूलविध्वंसकेभ्यः उन्मूलं मूलरहितं यथा तथा विध्वंस केभ्यः । सवासनं नाशकेभ्यः इति यावत् । सर्वदेभ्यः निखिलाभीष्टप्रदातृभ्यः ॥ २ ॥

सङ्गाद्विशेषयति यत् किल धूतपापा
सूर्यात्मजा च वरणा च सरस्वती च।
तीर्थेऽत्र पञ्चनदनाम्नि कदा नु भूयः
स्नायामि केशवनुते तव दिव्यगङ्गे ॥ ३ ॥

भूयोऽसिसम्भेददशाश्वमेधपादोदकाभ्येत्य कदाऽत्र युष्मान्।
पञ्चोत्तमान् पञ्चनदाश्रयेयं गाङ्गानहं श्रीमणिकर्णि हृष्टः ॥ ४ ॥

काशीसारं सकलकलुषोन्मूलनं मोहगाढ-
ध्वान्तच्छेदि त्रिपुररिपुणा मुक्तिलक्ष्म्याप्यमुक्तम्।
अन्तर्गेहं तव करुणया किन्न भूयोऽविलम्बं
ज्योतीरूपं जननि जननोच्छित्तये संश्रयिष्ये ॥ ५ ॥

---

सङ्गादिति ॥ सङ्गात् स्वसङ्गात्। विशेषयति सर्वातिगं करोति। यत् पञ्चनदतीर्थम्। किलेति पुराणप्रसिद्धौ। पञ्चनदनाम्नि पञ्चानां नदीनां समाहारः पञ्चनदं तन्नाम्नि। नद्यश्च परिगणिताश्चत्वार. गङ्गा च। तदुक्तम्—'वरणा धूतपापा च पुण्यतोया सरस्वती। गङ्गा च यमुना चैव पञ्चनद्योऽत्र कीर्तिताः ॥' इति। अस्यैव नामान्तरं विष्णुपादोदकमिति। अस्य तीर्थस्य उत्पत्त्यादिप्रकारः काशीखण्डे एकोनषष्टितमाध्याये सम्यगुपवर्णितः। केशवनुते आदिकेशवश्लाघिते इति तीर्थविशेषणम्। श्लाघा च तत्रैव—'अगण्या अपि वैकुण्ठ गुणा विगणिता मया। क्व क्षीर नीरधौ सन्ति तावन्तो निर्मला गुणाः ॥ यावन्तो विजयन्तेऽत्र काश्यां पञ्चनदे ह्रदे।' इत्यादिरूपा ॥ ३ ॥

भूय इति ॥ भूयः कदा अत्राभ्येत्य युष्मानाश्रयेयमिति सम्बन्धः। असिसम्भेदेत्यादि। एतानि पञ्च गङ्गासम्बन्धीनि महातीर्थानि प्रसिद्धानि ॥ ४ ॥

काशीति ॥ सकलेति। अन्तर्गेहकृतपापव्यतिरिक्तसकलपापनिर्मूलनमित्यर्थः। 'अन्यक्षेत्रे कृतं पापं पुण्यक्षेत्रे विनश्यति' इति प्रक्रम्योक्तं ब्रह्मवैवर्ते—'वाराणस्यां कृतं पापमन्तर्गेहे विनश्यति। अन्तर्गेहे कृतं पापं वज्रलेपो भविष्यति ॥' इति ॥ ५ ॥

देवा हि सन्ति पथि तीर्थगणाश्च तेषां
सेवानुबन्धि शिवलिङ्गचयाश्रितागाः ।
काश्याः प्रदक्षिणमनन्तफलप्रदं मे
किं साधयेन्न करुणा तव विश्वमातः ॥ ६ ॥

भक्त्यापगागळदुदारभवचरित्र-
गीतामृतानि ननु कर्णरसायनानि ।
कामं निपीय तटमेतदपेततापं
भूयः कदा पुनरहं स्थिरधीः श्रयिष्ये ॥ ७ ॥

सद्भिर्विमुक्तगाले प्राप्तुं ब्रह्मोपदेशमीशानात् ।
तीरे तव कृपयाऽस्मिन्नस्मत्प्राणाः प्रयान्तु भद्रेण ॥ ८ ॥

भूयो भूधरपृष्ठघट्टनघनाघोषाट्टहासा महा-
गर्तावर्तसहस्रवक्त्रविसरत्फेनोग्रदंष्ट्रावली ।
अश्वन्मत्स्यसमाश्रिता परिचलद्वेणी तरङ्गच्छटा-
चञ्चत्खड्गलताऽम्ब संसृतिपिशाचोच्चाटनी जृम्भसे ॥ ९ ॥

---

देवा इति ॥ पथि प्रदक्षिणमार्गे । सेवानुबन्धीति प्रदक्षिणविशेषणम् । काश्याः पञ्चकोश्याः । अनन्तफलप्रदमिति । प्रदक्षिणमन्तर्गेहकृतपापस्याप्यपनोदकं भवतीति बोध्यम् । तदुक्तं ब्रह्मवैवर्ते—'वज्रलेपच्छिदं ह्येतत् पञ्चकोशप्रदक्षिणम्' इति ॥ ६ ॥

भक्त्येति ॥ भक्तिरेवापगा तस्या गळदित्यर्थः । नन्वित्यामन्त्रणे । कर्णरसायनानीति । कर्णसन्तर्पणानीत्यर्थः । भक्त्यापगागळदिति कर्णरसायनानीति च विशेषणाभ्यां गीतामृतस्य प्रसिद्धामृताद्व्यतिरेक उक्तः ॥ ७ ॥

सद्भिरिति ॥ विमुक्तगाले अस्मिन् तीरे इति योजना । भद्रेण सुखेन । रोगादिकृतभूरिक्लेशं विना इति यावत् ॥ ८ ॥

भूय इति ॥ भूधरेति । भूधरपृष्ठे यत् घट्टनम् आस्फालनं तज्जन्य घनाघोष एवाट्टहासो यस्याः सा । महेति । महागर्तेषु ये आवर्ताः जलभ्रमाः त एव सहस्रवक्त्राणि तेभ्यः विसरन्ती बहिःस्फुरन्ती फेनोग्रदंष्ट्रावली यस्यास्तथा

मज्जन्मज्जदनेकलोकविविधव्यापारजातध्वनि-
प्रोन्मीलच्छ्रुतिमोहनं चलशिरस्तीरद्रुमश्लाघितम् ।
मातस्तावकतुङ्गवीचिनिनदं त्वत्तीर्थनिर्मज्जना-
न्मुक्तानामनुमोदगानमिव किं श्रोष्यामि हृष्यामि च ॥ १० ॥

कारुण्यं तावकीनं जयति धरणिभृत्पुत्रि येनार्द्रिता त्वं
त्यक्त्वा धाम स्वमुच्चं विगणितबहुदीर्घाध्वसञ्चारखेदा ।
मन्दस्मेराब्जवक्त्रा विविधगतिमहारोधमुद्धूय भूय-
स्तापं निर्वापयन्ती परिचलसि जगज्जीवनं साधयन्ती ॥ ११ ॥

इच्छन्ती भूचराघप्रशममिह नभोमार्गतोऽभ्यापतन्ती
गच्छन्ती कम्पयन्ती सुरतटिनि गभीरारवैर्दिग्विभागान् ।
व्याधूतोत्तुङ्गवीचीनिचयजयपटीमुत्क्षिपन्ती हरन्ती
रागाद्युग्रारिवर्गं मम मनसि वियद्वाहिनी व्याचकाधि ॥ १२ ॥

---

भूता । अञ्चदिति । अञ्चन्तं शोभमानं मत्स्यं समाश्रिता अधिष्ठिता, गङ्गाया मत्स्यवाहनत्वात् । अञ्चन्मत्स्यैः समाश्रिता इति च । परीति । परिचलन्ती वेणी प्रवाह एव इव च वेणी यस्यास्सा । अत्र विशेषणैः पिशाचसमुत्सारकं भीषणभीषणं रूपं प्रदर्शितम् ॥ ९ ॥

मज्जदिति ॥ विविधव्यापारेति । वस्त्रक्षालनादिनानाव्यापारैरित्यर्थः । ध्वनीति । ध्वनिभिः प्रोन्मीलन्त्या श्रुत्या मोहनम् । श्रुतिर्नाम स्वरारम्भावयवः शब्दविशेषः । तदुक्तम्—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा ॥' इति । हृष्यामीति गानश्रवणेन हृष्यामीत्यर्थः ॥ १० ॥

कारुण्यमिति ॥ धरणिभृत्पुत्रीति । हिमवत्पुत्रि, राजपुत्रीति चार्थः । आर्द्रिता द्रवीभूता, पक्षे आर्द्रचित्ता । धाम स्वं स्वकीयं स्थानम् । मन्देति । मन्दस्मेरं अब्जमेव वक्त्रम्, पक्षे अब्जमिव वक्त्रं यस्याः सेत्यर्थः । मन्दस्मेराब्जवक्त्रा सती उद्धूयेति सम्बन्धः । तथाच मार्गरोधमसारं मत्वा सोपहासमना इत्येव पुरोगतिरिति भावः । जीवनं जलम्, धान्यादिजीविका च ॥ ११ ॥

इच्छन्तीति ॥ भूचरेति । भूचराणां प्राणिनामघस्य पापस्य दुःख-
प्रशममित्यर्थः । दिग्विभागानिति । दिग्विभागान् कम्पयन्ती सती गच्छन्तीति

अम्बापराधमखिलं दयया क्षमस्व
संसारघोरतरसागरगाढमग्नम् ।
स्वर्लोकवाहिनि समुद्धर मामनन्य-
नाथं तवाङ्घ्रिकमलं शरणं गतोऽस्मि ॥ १३ ॥

आहृत्यान्यकवीश्वरैर्विरचिताः सूक्तीः सुधास्यन्दिनीः
कृत्वा वर्णपदादिभेदकलनैर्यत्नाद्विरूपाकृतीः ।
मातस्त्वत्पदपद्मयोरुपहरोम्यारोप्य चात्मीयतां
कारुण्यान्मम साहसं जडमतेरेतत्त्वया क्षम्यताम् ॥ १४ ॥

---

गेति। रागादय एव इव च उग्राः अरयस्तेषां वर्गम्। वियद्वाहिनीति। वाहिनीशब्दोऽत्र नद्यर्थकः। पक्षे सेनार्थकः। वियत्सेनेत्यर्थः। 'स्रवन्त्यामपि वाहिनी' इति, 'ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः' इति चामरः। व्यचकाधीति। 'चकासृ दीप्तौ' इति धातोः लोटि सिपि 'झल्भ्यः' इत्यादिना 'हेर्धि धि च' इति सकारलोपे चकाधि इति रूपम् ॥ १२ ॥

मज्जन्मज्जदनेकलोकविविधव्यापारजातध्वनि-
प्रोन्मीलच्छ्रुतिमोहनं चलशिरस्तीरद्रुमश्लाघितम् ।
मातस्तावकतुङ्गवीचिनिनदं त्वत्तीर्थनिमज्जना-
न्मुक्तानामनुमोदगानमिव किं श्रोष्यामि हृष्यामि च ॥ १० ॥

कारुण्यं तावकीनं जयति धरणिभृत्पुत्रि येनार्द्रिता त्वं
त्यक्त्वा धाम स्वमुच्चं विगणितबहुदीर्घाध्वसञ्चारखेदा ।
मन्दस्मेराब्जवक्त्रा विविधगतिमहारोधमुद्धूय भूय-
स्तापं निर्वापयन्ती परिचलसि जगज्जीवनं साधयन्ती ॥ ११ ॥

इच्छन्ती भूचराघप्रशममिह नभोमार्गतोऽभ्यापपन्ती
गच्छन्ती कम्पयन्ती सुरतटिनि गभीरारवैर्दिग्विभागान् ।
व्याधूतोत्तुङ्गवीचीनिचयजयपटीमुत्क्षिपन्ती हरन्ती
रागाद्युग्रारिवर्गं मम मनसि वियद्वाहिनी व्याचकाधि ॥ १२ ॥

---

भूता । अञ्चदिति । अञ्चन्तं शोभमानं मत्स्यं समाश्रिता अधिष्ठिता, गङ्गाया मत्स्यवाहनत्वात् । अञ्चन्मत्स्यैः समाश्रिता इति च । परीति । परिचलन्ती वेणी प्रवाह एव इव च वेणी यस्यास्सा । अत्र विशेषणैः पिशाचसमुत्सारकं भीषणभीषणं रूपं प्रदर्शितम् ॥ ९ ॥

मज्जदिति ॥ विविधव्यापारेति । वस्त्रक्षाळनादिनानाव्यापारेत्यर्थः । ध्वनीति । ध्वनिभिः प्रोन्मीलन्त्या श्रुत्या मोहनम् । श्रुतिर्नाम स्वरारम्भावयवः शब्दविशेषः । तदुक्तम्—'प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा ॥' इति । हृष्यामीति गानश्रवणेन हृष्यामीत्यर्थः ॥ १० ॥

कारुण्यमिति ॥ धरणिभृत्पुत्रीति । हिमवत्पुत्रि, राजपुत्रीति चार्थः । आर्द्रिता द्रवीभूता, पक्षे आर्द्रचित्ता । धाम स्वं स्वकीयं स्थानम् । मन्देति । मन्दस्मेरं अब्जमेव वक्त्रम्, पक्षे अब्जमिव वक्त्रं यस्याः सेत्यर्थः । मन्दस्मेराब्जवक्त्रा सती उद्धूयेति सम्बन्धः । तथाच मार्गरोधमसारं मत्वा सोपहासमनादृत्यैव पुरोगतिरिति भावः । जीवनं जलम्, धान्यादिजीविका च ॥ ११ ॥

इच्छन्तीति ॥ भूचरेति । भूचराणां प्राणिनामघस्य पापस्य दुःखस्य च प्रशममित्यर्थः । दिग्विभागानिति । दिग्विभागान् कम्पयन्ती सती गच्छन्तीति योजना

अम्बापराधमखिलं दयया क्षमस्व
संसारघोरतरसागरगाढमग्नम् ।
स्वर्लोकवाहिनि समुद्धर मामनन्य-
नाथं तवाङ्घ्रिकमलं शरणं गतोऽस्मि ॥ १३ ॥

आहृत्यान्यकवीश्वरैर्विरचिताः सूक्तीः सुधास्यन्दिनीः
कृत्वा वर्णपदादिभेदकलनैर्यत्नाद्विरूपाकृतीः ।
मातस्त्वत्पदपद्मयोरुपहरोम्यारोप्य चात्मीयतां
कारुण्यान्मम साहसं जडमतेरेतत्त्वया क्षम्यताम् ॥ १४ ॥

---

रागेति। रागादय एव इव च उग्राः अरयस्तेषां वर्गम्। वियद्वाहिनीति। वाहिनीशब्दोऽत्र नद्यर्थकः। पक्षे सेनार्थकः। वियत्सेनेत्यर्थः। 'स्रवन्त्यामपि वाहिनी' इति, 'ध्वजिनी वाहिनी सेना पृतनानीकिनी चमूः' इति चामरः। व्यचकाधीति। 'चकासृ दीप्तौ' इति धातोः लोटि सिपि 'श्नसोः' इत्यादिना 'हेर्धौ धि च' इति सकारलोपे चकाधि इति रूपम् ॥ १२ ॥

अम्बेति॥ घोरतरेति। यादोगणागाधत्वादिना महाभयङ्करेत्यर्थः। गाढेति। नितान्तेत्यर्थः ॥ १३ ॥

स्वकृतिं भगवत्यामर्पयन् क्षमां प्रार्थयते—आहृत्येति॥ आहृत्य इतस्ततः सम्पाद्य। अन्यकवीश्वरैः श्रीमदाचार्यपाददीक्षितजगन्नाथप्रभृतिभिर्महाकविभिः। सुधास्यन्दिनीरिति। गुणान्तराणामप्युपलक्षणम्। कृत्वेति। यत्नाद्विरूपाकृतीः कृत्वेति योजना। वर्णेति। वर्णानां तद्गतमात्राक्षराणां पदानां सुप्तिङन्तरूपाणाम्। आदिना अलङ्कारादिपरिग्रहः। भेदस्य व्यत्यासस्य कलनं करणं तत्स्थाने स्वयंकृतानां योजनं तैरित्यर्थः। यत्नात् प्रयत्नेन। वर्णादिभेदकलनमपि महाश्रमसाध्यमिति भावः। विरूपाकृतीरिति। तथापि विरूपीकरणमेव जातमिति भावः। आत्मीयतां स्वकर्तृकत्वम्। आरोप्य प्रकल्प्य। स्वकर्तृकत्वमभिमन्येत्यर्थः। परेषां तथा प्रतीतिमुत्पाद्येति यावत्। जडमतेरिति। स्वयं निर्माणे अशक्ततायां हेतुगर्भमिदम्। एतत् अपहरणादिरूपम्। अत्र अनवद्यवपुषां परकीयकन्यकानां वर्णविनिमयपादभञ्जनादिना विरूपीकरणरूपस्य वृत्तान्तस्य प्रतीत्या समासोक्तिः ॥ १४ ॥

नमोऽस्तु जगदम्ब ते पदसरोरुहे निश्चलं
मनस्तु शशिभास्वरे वपुषि लोचनेऽभ्यर्चने ।
करौ स्तुतिविधौ वचो विविधमत्कथासु श्रुती
प्रदक्षिणविधौ पदे परमितो न याचे मनाक् ॥ १५ ॥

अपजयमभिनीय श्रीधरान्नैजसेवा-
कलितविविधभूतेर्बाणसंग्रामभूमौ ।
व्यतनुत विशदां यः स्वीयभक्तानुकम्पां
भुवनकलनकेळिं विश्वनाथं तमीडे ॥ १६ ॥

इति गङ्गातरङ्गिण्यां द्वाविंशस्तरङ्गः ॥

---

नमोऽस्त्विति ॥ तुरेवार्थः सप्तम्यन्तैः सर्वैस्सम्बध्यते । लोचने इति । द्विवचनान्तेषु सर्वत्र स्तामिति वचनविपरिणामेन योजनीयम् । श्रुती श्रवणे । प्रदक्षिणविधाविति । 'वाचि स्तोत्रं हृदि ध्यानं करे चाञ्जलिरेव च । पदे चङ्क्रमणं चैव चतुरङ्गं प्रदक्षिणम् ॥' इत्युक्तलक्षणस्य प्रदक्षिणपदमुख्यार्थत्वेपि चङ्क्रमणमात्रमत्र विवक्षितम् । स्तोत्रादीनां पदान्तरेणैव लाभादिति ध्येयम् ॥ १५ ॥

अपजयमिति ॥ अभिनीयेति । शिवस्य न वस्तुत पराभूतिः, किन्तु औदासीन्यावलम्बनमेवेति भावः । नन्वत्र औदासीन्येनावस्थानमयुक्तम्, शिवेन परमशाम्भवस्य बाणस्य पुत्रत्वेन परिगृह्य स्कन्दानुजोऽयमिति देव्यै समर्पितत्वात्, स्कान्देनानुजत्वेनोपलाळितत्वाच्चेति चेत्सत्यम्, तस्यासुरभावविलोपनार्थमेव भगवता इत्थमाचरितमिति बोध्यम् । पुरा किल बाणासुरः ऊष्मळदोस्सहस्रवीर्यदर्पितः कण्डूभरप्रशान्त्यर्थं युद्धमतितरामभ्यर्थयमानः शिवेन वरदानव्याजेन शप्तः । तदुक्तं हरिवंशे—'ततः प्रहस्य भगवानब्रवीद्वृषभध्वजः । भविता बाण युद्धं ते यदा तच्छृणु दानव ॥ ध्वजस्यास्य यदा भङ्गस्तव तात भविष्यति । स्वस्थाने स्थापितस्याथ तदा युद्धं भविष्यति ॥' इति । अत्र प्रहस्येत्युक्त्या, स्वगृहस्थापितमयूरध्वजपतनरूपदुर्निमित्तोद्गमनानन्तरं युद्धं भविष्यतीत्युक्त्या च भाविनि युद्धे तस्यावश्यं पराजयो भविष्यतीति सूचितम् । अत्रार्थे पुराणान्तरवचनान्यपि द्रष्टव्यानि । अपि च भक्तावतंसस्य विष्णोः स्वाधिकमहिमाविष्करणार्थमुचितमेवौदासीन्यं परमेश्वरस्य । रीतिमिमामेवानुससार भारतयुद्धे अनायुध एव पाण्डवजयान्तं युद्धं निर्वर्तयिष्या

मीति स्वप्रतिज्ञामपहाय 'त्वामायुधं ग्राहयिष्यामि' इति स्वभक्तस्य भीष्मस्य प्रतिज्ञां पालयन् भगवान् श्रीकृष्णोपि । तदुक्तं दीक्षितैः—'शैली च ते समुदिता शशिखण्डचूड भक्ते विभावयसि यद्भवतोऽधिकत्वम् । आदाय चक्रमभिदीय नदीतनूजं यमेव सोऽप्यनुससार यदुप्रवीरः ॥' इति । विविधभूतेरिति । 'कदाचित् समरं प्राप्य भविष्यसि ममाधिकः ।' इत्युक्तं द्रोणपर्वणि । हरिवंशे पारिजातहरण सामर्थ्यलाभार्थं शिवं प्रसादितवन्तं कृष्णं प्रति 'पुरा मैनाकमाश्रित्य तपस्त्वमकरो यदा । तदा मम वचः कृष्ण संस्मृत्य स्थैर्यमाप्नुहि ॥ अवध्यस्त्वमजय्यश्च मत्तश्शूरतरस्तथा । भवितासीत्यवोचं यत्तत्तथैव न चान्यथा ॥' इति । एव मादिवचनैसिद्धनानाविधमहिमाकरादित्यर्थः । भुवनेति । भुवनानां कलनं करणं ग्रसनञ्च केळिः लीला यस्य तथाभूतम् । अनेनापि पराजयामिनीतिमात्रमिति सूचितम् । विस्तरस्तु ब्रह्मतर्कस्तवव्याख्यायां द्रष्टव्यः ॥ १६ ॥

सम्भृत्य नानागमकाननान्तात् पुष्पाणि भक्त्या कलितो मयाऽयम् ।
टीकाप्रसूनाञ्जलिरम्ब भूयात्तवामितामोदविधानहेतुः ॥

इति गङ्गातरङ्गिणीटिप्पण्यां चतुर्विंशस्तरङ्गः



# विश्वनाथाष्टकम् ।

त्रिभुवनमखिलं यद्व्याप्तमित्यादरेण
प्रणमति शतरुद्री पावनी वेदसारः ।
अपि च बहुविधं यद्विश्वविश्वाधिपत्यं
प्रथयति भज चेतस्तं सदा काशिकेशम् ॥ १ ॥

त्रिभुवनमिति ॥ यद्व्याप्तं येन व्याप्तम् । अन्तर्यामिरूपेण उपादानरूपेण चेति भावः । इतीति । मत्वेति गम्यते । अत एवाप्रयोगः । आदरेण भक्ति श्रद्धायतिशयेन । अत एव द्वितीयाद्यनुवाकेषु प्रतिमन्त्रमादावन्ते च नमस्कारः कृतः । प्रणमति श्वपचादिप्रत्येकरूपेण सामान्यरूपेण च नमति । शतरुद्रीति । शतं रुद्राः प्रतिपाद्यत्वेनास्यामिति व्युत्पत्त्या शतरुद्रीयपरा । अत्र शतपदमानन्त्य परम्, 'शतमनन्तं भवति' इति श्रुतेः । 'शतं सहस्रमयुतमित्यनन्तस्य वाचकम्' इति निघण्टूक्तेश्च अनन्ताश्चेह रुद्राः प्रतिपाद्यन्ते, 'सहस्राणि सहस्रशो ये रुद्रा अधिभूम्याम्, ये चेमां रुद्रा अभितो दिक्षु श्रिताः सहस्रशः' इति श्रवणात् । पावनीति । 'यः शतरुद्रीयमधीते सोऽग्निपूतो भवति, कृत्याकृत्यात् पूतो भवति' इत्यादिश्रुतेः, 'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा । भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥' इति शातातपवचनात्, 'एकादशगुणान् वापि रुद्रानावृत्य धर्मवित् । महापापैरपि स्पृष्टो मुच्यते नात्र संशयः ॥' इत्यत्रिवचनात्, 'सुरापी स्वर्णहारी च रुद्रजापी जले स्थितः । सहस्र शीर्षजापी च मुच्यते सर्वकिल्बिषैः ॥' इति याज्ञवल्क्यवचनाच्च । इदमुपलक्षणं पुरुषार्थसिद्धेरपि, 'अथैनं ब्रह्मचारिण ऊचुः—किञ्जप्येनामृतत्वं ब्रूहीति । मोक्ष साधनजप्यप्रश्ने सहोवाच याज्ञवल्क्यः शतरुद्रीयेणेति इति, 'एतानि ह वा अमृतस्य नामधेयानि, एतैर्ह वा अमृतो भवति' इत्यादिश्रुत्या नानापुराणोपबृंहितया

मोक्षसाधनत्वसिद्धेः। 'वृक्षस्य मूलसेकेन शाखाः पुष्प्यन्ति वै यथा। शिवे रुद्रजपात् प्रीते प्रीता एवान्यदेवताः॥ अतो रुद्रजपादेव भुक्तिमुक्ती प्रसिद्धयतः॥' इति सूतसंहितोक्तरीत्या परमेश्वरं प्रीणयतः श्रीरुद्राध्यायिनः तदवयवेन्द्रादिप्रीति फलभूतस्वर्गादितुच्छफलापेक्षासत्त्वे तेषां फलानामहमहमिकया स्वत एव पुरोऽव स्थानस्य 'यद्यदिच्छन् जपेत्तत्तदाप्नोति हि न संशयः', 'तदेतत् पापक्षयार्थी व्याधि मोचनार्थी श्रीकामश्शान्तिकाम आयुष्काम आरोग्यकामश्च कुर्यात्, एतत् सर्व माप्नोति' इत्यादिवचनसिद्धत्वाच्च। वेदसार इति। सर्वेषां वेदानां सारः प्रधा नमित्यर्थः। अयं भावः—'सर्वोपनिषदां सारं रुद्राध्यायं च दत्तवान्। सर्वोप निषदां सारो रुद्राध्यायस्समर्थितः॥ भोगार्थिनो मुमुक्षोर्वा प्रायश्चित्तार्थिनोपि वा। रुद्रोपनिषदं मुक्त्वा गतिरन्या न विद्यते॥' इत्यादिपुराणवचनैरुपनिष त्सारत्वे सिद्धे सुतरां वेदसारत्वसिद्धिः। एवं कूर्मे, 'अध्यायं शतरुद्रीयं यजुषां सार मुत्तमम्। जपस्वानन्यचेतस्को मय्येवासक्तचेतसा॥ ब्रह्मचारी मिताहारो भस्म निष्ठः समाहितः। जपेदामरणाद्रुद्रं स याति परमां गतिम्॥' इति वसुमनसं राजर्षि प्रति परमेश्वरवचनम्। तत्र यजुषां सारमिति यजुस्सारत्वेनैव यजुर्वेदोत्तमत्वे सिद्धे पुनरुत्तमपदम् ऋग्वेदाद्यपेक्षयाप्युत्तमत्वलाभायेत्यर्थात् सर्ववेदोत्तमत्वसिद्धिः। एव मानुशासनिके पर्वणि, 'वेदे चास्य विदुः प्राज्ञाः शतरुद्रीयमुत्तमम्' इति वचनेन, 'वेदे चास्य समाम्नातं शतरुद्रीयमुत्तमम्' इति वचनेन, 'विद्यासु श्रुतिरुत्कृष्टा रुद्रैका दशिनी श्रुतौ' इति शिवागमरहस्यवचनेन, 'वेदसारेण देवेशं महान्तं समुपासते' इति शिवभक्तविलासवचनेन च कण्ठत एव श्रीरुद्रस्य वेदोत्तमत्वं प्रतिपादितमिति। बहुविधमिति। तथाच श्रूयते—'नमो हिरण्यबाहवे नमो भवस्य हेत्यै जगतां पतये नमः' इति च। अत्र भाष्यम्—इत्थं नमो हिरण्यबाहवे इत्यादिभिः पञ्चभिर्मन्त्रैः दिगादिकतिपयवस्त्वाधिपत्यदर्शनपूर्वकमीश्वरो नमस्कृतः, इदानीं प्रतिवस्त्वाधिपत्यपूर्वकनमस्कारस्याशक्यतया जगत्पतित्वेन तन्नमस्कर्तुं षष्ठो मन्त्रः प्रयुक्तः नमो भवस्येति। भवः संसारः तस्य छेदने हेतिः आयुधम्। संसार वृक्षस्य छेत्तेत्यर्थः। स्थावरजङ्गमानां लोकानां स्वामी जगतां पतिः तस्मै नम इति ॥ १ ॥

दितिजविजयदृप्तान् ग्राहयामास कृत्वा
दहनमपि समीरं कुण्ठशक्ती तृणेपि ।
निजबलममरान् यो यक्षरूपी मृडान्याः
सुविदितनिजतत्त्वं नौमि तं काशिकेशम् ॥ २ ॥

उदयति कृतवादाः स्वर्गिणः कौस्तुभादौ
कटुतरगरळे तु प्राद्रवद्दूरदूरम् ।
द्रुहिणमुखनुतो यो विष्टपे क्लिष्टचेष्टे
तदपिबदविशङ्कं नौमि तं विश्वनाथम् ॥ ३ ॥

---

तलवकारिणामुपनिषदि पुरा देवासुरयुद्धे स्वस्वमहिम्नैव जयो जात इति गर्विष्ठानां देवानां दर्पमपनेतुं तेषां पुरतो यक्षरूपेण शिवः प्रादुर्भूय निजस्वरूप जिज्ञासूनां देवानां प्रेरणया समीपमागतस्य सकलजगद्दहनसामर्थ्यमदावलिप्तस्याग्नेः पुरतस्तृणमेकं निधाय तावन्मात्रमपि दग्धुं तस्यासामर्थ्यम्, तथैव वायोस्त च्चालयितुमप्यशक्तिमापाद्य स्वयं तिरोदधे । ततः कोऽसौ यक्षरूपी दिव्यः पुरुष इति जिज्ञासया खिद्यतां देवानां पुरस्तात्तत्स्वरूपोपदिदिक्षया परब्रह्मविद्याधिदेवता भगवती हैमवती उमा स्वयमाविर्भूय 'परमेश्वर एव यक्षरूपेणाविरासीत्' इत्युपदिदेश । देवाश्च पारमेश्वरमेव तं जयमहिमानमन्वजानन्नित्युपाख्यानं श्रूयते । प्रपञ्चितं चैतद्ब्रह्मगीतायां चतुर्थाध्याये । तदेतत् संक्षेपतो निबध्नाति— दितिजेति ॥ मृडान्याः पार्वत्यास्सकाशात् । तदुपदेशादिति यावत् । सुविदितेति । सुविदितः देवैः सम्यक् ज्ञातः महिमा यस्य तम् । तथाच श्रूयते—'सा ब्रह्मेति होवाच, ब्रह्मणो वा एतद्विजये महीयध्वमिति । ततो हैव विदाञ्चकार ब्रह्मेति' इति । अत्रैवं व्याख्या— सा ब्रह्मेति होवाचेति । ब्रह्मैव यक्षरूपेण युष्मन्मोहशमनाय प्रादुर्भूतम्, अतो ब्रह्मसम्बन्धिनि विजये निमित्ते पूजां प्राप्नुवत । अस्माभिरेव विजयः कृत इति दुरभिमानस्त्यक्तव्य इत्यर्थः । ततो हैवेति । तदुपदेशादेव ब्रह्मेति ज्ञातवानिन्द्र इत्यर्थ इति ॥ २ ॥

उदयतीति ॥ उदयति आविर्भवति सति । कृतवादा इति । कृतः प्रक्रान्तः ममेदं ममेदमित्येवंरूपः परस्परकलहो यैस्तादृशा इत्यर्थः । कौस्तुभादाविस्यादि

गृहपतिनृपसूनुश्वेतगोपोपमन्यु
प्रभृतिषु परिदृष्टस्फीतभक्तानुकम्पम्।
हरिमुखनिजुधालीसेवितामस्त्युपास्य
चपलहृदय काश्यामाश्रयाकाशकेशम् ॥ ४ ॥

---

पदेन अप्सरोगणादिपरिग्रहः। विष्टपे इति। हरिमुखादिदेवसङ्घे इत्यर्थः। क्लिष्टचेष्ट इति। क्लिष्टा उन्मत्तापादुदुश्शका चेष्टा स्वस्ववृत्तयो यस्य तस्मिन्नित्यर्थः। तदुक्तं व्यासेन—'य क्षीराब्धेर्मन्दराघातजाता ज्वालामाली कालकूटोऽतिभीम। तं सोढु वा कोऽपरोऽभून्महेशाद्यत्कीलाभि कृष्णतामाप विष्णु ॥' इति ॥ ३ ॥

**गृहपतीति ॥** गृहपति तन्नामा विश्वानरनाम्न काशीमागत्य वर्षमेक परमेश्वरसदृशपुत्रकामनया वीरेश्वरलिङ्गसेवा कृतवत कस्यचित् ब्राह्मणस्य तद्वरप्रभावेण शुचिष्मत्या जात एक पुत्र। श्रीनारदमुखादवगतासन्नमृत्यु स बाल परमेश्वरमाराध्य मृत्योर्मोचन हविर्भोक्तृत्वदिक्पालकत्वादिकं चावापेत्युपाख्यायते काशीखण्डे एकादशाध्याये। अयमेव गृहपतिर्वैश्वानर साक्षादग्नि। नृपसूनु भद्रसेननामककाशीराजस्य सुधर्मनामा पुत्र। द्वादशवयस्कस्यास्य राजकुमारस्य मृत्यु निवारणकथा ब्रह्मोत्तरखण्डे सविस्तरं प्रपञ्चिता। श्वेतो नाम शिलादनामकमुने मृत्युञ्जयसुतकामनया चिरकाल विहिततपसा प्रसन्नात् परमेश्वराल्लब्ध पुत्र। तदुक्त काशीखण्डे—'मृत्युञ्जय सुत लेभे शिलादोऽप्यनपत्यवान्' इति। अस्यैव श्वेतकेतुरिति नामान्तरम्। अयमेव नन्दीति प्रसिद्ध परमशाम्भव। अय काशीमागत्य चिरकाल परमेश्वरमारराध। तदन्तरे कालागतेन यमेन पाशबद्धं पूजाव्यग्रं त लिङ्गादाविर्भूय विश्वनाथो ररक्षेति लैङ्गे उपाख्यायते। परमेश्वरो निजाराधनरत श्वेत स्वपुर नेतुमागत यमं वामपादेन निहत्य तस्मै चिरञ्जीवित्व गाणपत्यादिक च ददाविति कथा सारेऽपि स्पष्टा। श्वेतपरित्राणाय भगवान् वामपादेन यम निहतवानिति यो वाम पादेन जघान कालम्' इति शरभश्रुत्याप्यवगम्यते। गोप श्रीकरनामा कश्चिद्गोपिकासूनु। य कश्चन पाषाणखण्ड संस्थाप्य तत्र शिवपूजा कलयत भोजनार्थं पुन पुनराह्वानेप्यनागमनात् कुपितया निजमात्रा पूजोपकरणस्य विनाशनात् खिद्यत पञ्चहायनस्यास्य शिवभक्तस्योपाख्यायिका ब्रह्मोत्तरखण्डाद्विज्ञेया। उपमन्युरिति तस्य

अभयवरकुठारान् बिभ्रतं पाणिपद्मै-
मृगमपि नळिनस्थं पञ्चवक्त्रं त्रिनेत्रम् ।
शशिधरमतिदीप्तं व्याघ्रचर्मान्तरीयं
स्फटिकरुचिमुपासे काशिकेशं प्रसन्नम् ॥ ५ ॥

कथेत्थं निगुंफिता दीक्षितचरणैः—'क्षीरं स्वादु निपीय मातुलगृहाद्गत्वा स्वकीयं गृहं क्षीरालाभवशेन खिन्नमनसे घोरं तपः कुर्वते । कारुण्यादुपमन्यवे निरवधिं क्षीराम्बुधिं दत्तवानार्तत्राणपरायणस्स भगवान् गङ्गाधरो मे गतिः ॥' इति । काशीखण्डेपि, 'क्षीरार्णवाधिपतितामुपमन्युरवाप्तवान्' इति । 'उपमन्योर्महादेवः क्षीरार्णवमुपानयत्' इति ब्रह्माण्डपुराणेपि । प्रभृतिपदेन विरिञ्चिनगरस्थस्य शिवपूजकवर्गान्तर्गतस्य कस्यचिद्ब्राह्मणस्य बालकः परिगृह्यते । उक्तञ्च दीक्षितेन्द्रैरेव—'बालं शैवकुलोद्भवं परिहसत्स्वज्ञातिपक्षाकुलं खिद्यन्तं निजमूर्ध्नि पुष्पनिचयं दातुं समुद्यत्करम् । दृष्ट्वा नम्रशिरा विरिञ्चिनगरे पूजां तदीयां वहन्नार्तत्राणपरायणस्स भगवान् गङ्गाधरो मे गतिः ॥' इति । हरीति । हरिमुखविबुधाळीसेवितः यः अगस्तिः अगस्त्यमुनिः, 'अगस्तिः स्यादगस्त्यश्च' इति द्विरूपकोशात् । तेन उपास्यमित्यर्थः । अनेन शिवस्य निखिलदेवोपास्यत्वेनोत्कर्षः प्रोक्तः । रामायणे अगस्त्याश्रमाभ्याशे लक्ष्मणं प्रति श्रीरामचन्द्रेण शिवं विना सर्वदेवानामगस्त्योपासकत्वमुक्तम् । रामलक्ष्मणयोराश्रमप्रवेशानन्तरं शिवव्यतिरिक्तविष्ण्वादिनिखिलदेवानां तत्र स्थानविशेषाः कविना उक्ताः, न तु शिवस्य । तदुक्तं दीक्षितेन्द्रैः—'रामायणे हि कलशभवाश्रमस्था देवादयोपि तमुपासत इत्युदीर्य । स्थानानि चात्र मधुजिन्मघवन्मुखानां तस्याश्रमे निगदितानि न ते कपर्दिन् ॥' इति । ततश्चागस्त्योपासनार्थमागत्य तत्र स्थितेभ्योऽन्यदेवेभ्यः शिवोपासकस्यागस्त्यस्योत्कर्षः सिद्ध्यतीति सुतरां तदुपास्यस्य शिवस्येति बोध्यम् । आकाशकेशमिति । गङ्गाधारणसमये आकाशवद्विशालः जटावलयरूपः केशो यस्य तम् । शिवमित्यर्थः ॥ ४ ॥

पञ्चाक्षरमन्त्रमूर्तिसदाशिवरूपेण विश्वनाथमनुसन्धत्ते—अभयेति ॥ यद्यप्यत्र ध्येयस्य सदाशिवस्य दशैव भुजाः, तथापि जपकाले चतुर्भुजत्वेनैव ध्येयत्वम् । तदुक्तं कामिके—'जपकाले तु मन्त्रस्य ध्येयो देवश्चतुर्भुजः । वराभयपरश्वेण लसत्करसरोरुहः' इति । मृगमिति । अयं मृगः देवदारुवनस्थमुनिकृताभिचारा

दुरपन्नः। यथोक्तं स्कान्दे—'ततो मृगस्समुत्थाय शीघ्रमागच्छदम्बरात्। सर्वान् ज्ञानविहीनांस्तान् मृगतुल्यानिव ब्रुवन्॥, आदाय वामहस्तेन, दधारेशश्च निश्चलम्।' इति। मन्त्रशास्त्रे तु मृगोऽयं वेदस्वरूप इति प्रसिद्धम्। यथोक्तं मृत्युञ्जय ध्याने—'स्वकरकलितमुद्रापाशवेदाक्षमालम्' इति। अत्र वेदो मृगः, ग्रन्थान्तरे 'मुद्रापाशमृगाक्षसूत्रविलसत्पाणि हिमांशुप्रभम्' इति समानप्रकरणे स्पष्टतया तदभिधानात्। पञ्चवक्त्रमिति। प्रदक्षिणं कुर्वत्यास्तिलोत्तमाया दिदृक्षया चतसृषु दिक्षूत्पादितानि, चत्वारि मुखानि प्रागवस्थितमूर्ध्वमुखमेकमित्याहत्य पञ्चवक्त्राणि ईशान तत्पुरुषाघोरवामदेवसद्योजाताख्यानि। तथा चोमामहेश्वरसंवादे तिलोत्तमाया उत्पत्ति प्रकारमुक्त्वा महेश्वरवचनम्—'तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये। ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा॥ दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः। लोककार्यकरं नित्यं पश्चिमं मे मुखं प्रिये॥ वेदानधीते सततमद्भुतञ्चोत्तरं मुखम्। एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि॥' इति। विस्तरस्तु शिवतत्त्वरहस्ये द्रष्टव्यः। 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्' इति श्रुत्या सहस्रवक्त्रत्वेपि जपकाले पञ्चवक्त्रत्वेन ध्येयमिति पूर्ववत् सङ्गतिः। त्रिणेत्रमिति। त्रीणि सोमसूर्याग्निरूपाणि नेत्राणि यस्य तम्, 'स्फुटितनळिनसंस्थं चन्द्रवह्न्यर्कनेत्रम्' इति शिवागमस्मरणात्। अतिदीप्तमिति। विविधालङ्कारादिभिरुज्ज्वलमित्यर्थः। व्याघ्र चर्मान्तरीयमिति। दारुकावनस्थमुनिकृताभिचारोत्पन्नव्याघ्रस्य चर्म अन्तरीयं वस्त्रविशेषः यस्य तं तथा। यथोक्तं स्कान्दे—'ततो व्याघ्रो महान् क्रुद्ध आजगाम नखायुधः। तेषामृषीणां मर्मस्थः कोपोऽयं निर्गतो यथा॥ तञ्चादाय त्वचं भित्वा तदा चर्माम्बरोऽभवत्। शुशुभे चर्मणा तेन नानावर्णयुतेन च॥' इति। उपासे ध्यायामि। ध्येयता च बोध्यते—'तत्पुरुषाय विद्महे, महादेवाय धीमहि, तन्नो रुद्रः प्रचोदयात्' इति। अत्र भाष्यम्—अथ 'बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः' इत्यागमप्रसिद्धमूर्तिधरं महेशं प्रार्थयते। सर्वत्र गायत्रीमन्त्रेषु बहुळं लिङ्गादिव्यत्ययः। तत्पुरुषाय तम् आगमसिद्धं पुरुषाकारं महादेवं जानीमो ध्यायेम। तत् तस्मिन् ध्याने अस्मान् रुद्रः प्रेरयतु इति ॥ ५ ॥

कमलभवमुखानामंशिनं तुल्यभूम्नां
विविधजनिनिदानं काशिकेशं स्वतन्त्रम्।
अजनुपमुपगत्य स्वान्त रुद्रं विशङ्कं
कटुकलिकलुषौघाङ्गीतिभारं जहीहि ॥ ६ ॥

कमलेति ॥ अंशिनमिति। त्रिमूर्त्यपेक्षया उत्कृष्टमित्यर्थः। मैत्रेयोपनिषदि श्रूयते—'अथ यो ह खलु वावास्य राजसोऽशः, असौ स योऽयं ब्रह्मा। अथ यो ह खलु वा वास्य तामसोंशः, असौ स योऽयं रुद्रः। अथ यो ह खलु वा वाऽस्य सात्त्विकोऽशः, असौ स योऽयं विष्णुः' इति। अनया श्रुत्या परस्य रुद्रादिसंज्ञितस्य रजोगुणाद्युपहिता अंशभेदा ब्रह्मादय इति स्फुटतरमभिहितम्। ननूक्तश्रुत्या अंशवाचकत्वेन संप्रतिपन्नस्य रुद्रपदस्य अंशिनि उपाधिभेदभिन्ने परतत्त्वे कथमिह प्रयोग इति चेन्न, शिवशम्भुरुद्रेशानमहेश्वरमहादेवादिशब्दानामथर्वशिरश्शाखादिदृष्टप्रयोगनिर्वचनाभ्याम् तत्पदवाच्यत्वस्य अंशिन्यभ्युपगन्तव्यत्वात्। नच अथर्वशिखाप्रतिपाद्यो गुणिरुद्र एवेति शङ्क्यम्, तत्र तद्विभूतिषु ब्रह्मनारायणयोरिव गुणिरुद्रस्यापि पाठात्। नच तत्र विभूतिमध्याम्नातरुद्रशब्दो गुणिरुद्रांशभूतरुद्रान्तरपरोऽस्त्विति वाच्यम्, ब्रह्मविष्णुसान्निध्याम्नातरुद्रशब्दस्य संहर्तृमूलरुद्रपरत्वौचित्यात्, 'यत् प्राये श्रूयते यच्च तत्ताद्दगवगम्यते' इति न्यायात्। अपि च यादृशं रूपं यानि च नामानि परशिवस्य, तदेव रूपं तान्येव च नामानि गुणिरुद्रस्य। तदुक्तं सूतसंहितायाम्—तप्तायःपिण्डवद्विप्रा रुद्रमूर्तिः परस्य तु। मूर्त्यतुल्या मूर्तिभ्यो लक्षणैर्मुनिसत्तमाः॥ परतत्त्वस्य नामानि प्रत्यासत्त्या मुनीश्वराः। त्रिमूर्तीनां तु रुद्रस्य चाभिधानानि सुव्रताः॥' इति। शिवपुराणेपि संहाररुद्रमाहात्म्यमस्तुत्योक्तम्—'स एव भगवानीशस्तेजोराशिर्निरामयः। अनादिनिधनो धाता भूतसङ्कोचको विभुः॥ परमैश्वर्यसंयुक्तः परमेश्वरभावितः। तच्छक्त्याधिष्ठितः शश्वच्चिह्नैरपि निहितः॥ तन्नामनामा तद्रूपस्तत्कार्यकरणे क्षमः। तत्तुल्यव्यवहारश्च तदाज्ञापरिपालकः॥' इत्यादि। दीक्षितेन्द्रैरपि, 'त्वदौपम्यं नामाकृतिचरितवेषप्रभृतिभिस्त्वदीयप्रत्यासत्त्यतिशयकृतमस्य भगवन्' इति परमशिवसंहाररुद्रयोर्नामाद्यैक्यमुक्तम्। तुल्येति। उक्तञ्च कालिदासेन—'एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम्। विष्णोर्हरस्तस्य हरिः कदाचि

द्वेधास्तयोस्तावपि , धातुराद्यौ' इति। ब्रह्मविष्णुरुद्राणामन्योन्यतुल्यत्वं कौर्मेप्युक्तम्—'क्वचिद्ब्रह्मा क्वचिद्रुद्रः क्वचिद्विष्णुः प्रशस्यते। नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन॥' इति। तेषां परस्परोत्कर्षापकर्षविवादे महान् दोषोप्यस्ति। तथा चोक्तं वायुसंहितायाम्—'अयं परस्त्वयमेति संरम्भाभिनिवेशिनः। यातुधाना भवन्त्येव पिशाचाश्च न संशयः॥' इति। कर्मविपाकशास्त्रेपि, 'ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः। साधयेदुदरव्याधियुक्तो भवति मानवः॥' इति। विविध जनीति। जनीनां वैविध्यं च पूर्वापरीभावादिभेदेन। तदुक्तं शिवपुराणे वायु संहितायाम्—'त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात्' इत्युपक्रम्य 'तपसा तोषयित्वा तं पितरं परमेश्वरम्। ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत्। कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णुजगन्मयः। विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत् पुनः॥ नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः। एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः॥ परस्परस्माज्जायन्ते परस्परजयैषिणः। तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः। प्रभावः कथ्यते तेषां परस्परसमुद्भवात्॥' इति। निदानं साक्षात् कारणमित्यर्थः। काशिकेशमिति। कलेः काश्यामप्रवेशेन, प्रवेशे वा तस्याकिञ्चित्करत्वेन भीतेरनवकाशादिति भावः। तदुक्तम्—'ततो हि काशी कलिकालवर्जिता' इति। अपि च, 'कलौ विश्वेश्वरो देवः कलौ वाराणसी पुरी। कलौ भागीरथी गङ्गा' इति। स्वतन्त्रं कर्माद्यवश्यम्। अजनुषं न विद्यते जनुः जननं यस्य तम्। तथाचाथर्वोपनिषदि श्रूयते—'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते, सर्वाणि चेन्द्रियाणि सह भूतैः। न कारणम्' इति। स्मर्यते च, 'अजो नित्यः शाश्वतोऽयं पुराणः' इति। अथ मूर्तित्रयोत्तीर्णस्य परमेश्वरस्य उमासहायत्वादिविशिष्टविग्रहत्वश्रवणात् कथं जननशून्यत्वम्, विग्रहपरिग्रहस्यैव जन्यर्थत्वादिति चेदत्र केचित्—तादृशविग्रहस्य नित्यत्वाद्युपगमान्न परमेश्वरस्याजनिमत्त्वविरोधः। उमार्धविग्रहस्यापि पार्वतीकृतं यदष्टोत्तरस्तोत्रपठनम् तज्जन्यत्वे पुरुषवीर्यकणोत्पन्नशरीरराहित्यस्यैवात्र जन्यर्थतया न विरोधः, 'अप्राकृतशरीरं तमतिमन्मथरूपिणम्। घृतरीतिघनीभूतसच्चिदानन्दविग्रहम्॥' इति शिवपुराणवचनेन, 'नास्त्यस्य देहे रुधिरं न मांसं नास्थि किञ्चन। प्रतिबिम्बमिवाकाशे शक्रचापमिवाम्बरे॥ ज्योतिर्मयतया सिद्धमिदं सादाशिवं वपुः॥' इति शिवागमवचनेन च परम

अनुचितविषये न क्रूरता यस्य दृष्टा
क्वचिदपि कृपया यो बोधसौख्ये ददाति।
व्रज-शरणमनिद्रामोहशोकादिकं तं
हृदय हरनगर्यां शुद्धसत्त्वस्वरूपम् ॥ ७ ॥

शिवशरीरस्याप्राकृतत्वप्रतिपादनात्। रामकृष्णादिवैष्णवशरीराणां दशरथवसुदेवादि पुरुषवीर्योत्पन्नत्वान्नैतादृशत्वम्। नच 'सर्वे नित्याश्शाश्वताश्च देहास्तस्य महात्मनः' इत्यादिवचनेन वैष्णवशरीरस्य नित्यत्वप्रतिपादनात् कथमिदमिति शङ्क्यम्, तादृशवचनानां मूलभूतपरमेश्वराभेददृष्ट्या स्तवनपरतया नेयत्वात्। दृश्यन्ते चैवं जातीयानि स्तवनमात्रपराणि वचनानि। यथा शिवपुराणे संहाररुद्रमाहात्म्यं प्रस्तुत्य, 'स एव भगवानीशस्तेजोराशिर्निरामयः। अनादिनिधनो धाता भूत सङ्कोचको विभुः' इत्यादीनि। कट्विति। दुष्प्रधर्षेत्यर्थः ॥ ६ ॥

अनुचितेति॥ न दृष्टेति। ननु त्रिपुरादिजगद्द्रोहिणां वधमूलस्य क्रौर्यस्योचितविषयत्वेपि ब्रह्मपञ्चमशिरोदलनादिमूलं तदनुचितविषयमेवेति चेदुच्यते—निग्रहस्तावद्द्विविधः, अनुग्रहोद्देश्यकः, तदनुद्देश्यकश्च। आद्योपि त्रिविधः, निग्राह्यानुग्रहोद्देश्यकः तदितरानुग्रहोद्देश्यकः, उभयानुग्रहोद्देश्यकश्च। तत्राद्यः सदाचारानुवर्तनार्थः पुत्रशिष्यादिनिग्रहः। स तु गुण एव। द्वितीयो यद्यपितरानुग्रहोद्देश्यकश्चेन्न दोषः। यथा मृगयया व्याघ्रादिवधः। चोरवध उभयानुग्रहार्थः। अतः पुत्रादिनिग्रहवद्ब्रह्मादिनिग्रहोप्युचितविषय एव। तथाचोक्तं शिवपुराणे—'ये पुनर्निग्रहाः केचिद्ब्रह्मादिषु निदर्शिताः। तेपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना॥' इत्युपक्रम्य 'सर्वोपि निग्रहो लोके न च विद्वेषपूर्वकः। न हि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षयेत्॥' इति। बोधसौख्ये ददातीति। जाबालोपनिषदि, 'रुद्रस्तारकं ब्रह्म व्याचष्टे, येनासावमृतीभूत्वा मोक्षीभवति' इत्यविमुक्तोपासनया प्रसन्नस्य शिवस्योपासनावसानकालेषु संसारतारकप्रणवार्थभूतपरब्रह्म विद्याप्रदत्वं श्रूयते। तस्याश्च विद्यायाः फलं जीवन्मुक्तिसुखरूपं परममुक्तिसुखरूपञ्च क्रमप्राप्यममृतीभवनमोक्षीभवनशब्दाभ्यामभिधीयते। जीवन्मुक्तिसुखञ्च निरतिशयानन्दरूपब्रह्मावगत्या तत्प्रयुक्ततुच्छविषयसुखवैतृष्ण्येन चोद्भवन्मुक्तिसुखरूपमेव। यदाहुः—'यच्च काममुखं लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते

वदति यमखिलानां दैवतं दैवतानां
पतिमपि च पतीनामीश्वरश्चेश्वराणाम् ।
स्फुटमनुदयवाणी शाश्वतं पाशुपत्यं
श्रयति च हरपुर्यां तं भजे वीतरागम् ॥ ८ ॥

---

नार्हतः षोडशीं कलाम्' इत्यादि। इदमेव शिवस्य ज्ञानप्रदत्वम्। 'स नो देवः शुभया स्मृत्या संयुनक्तु' इति तैत्तरीयोपनिषदि, 'स नो बुद्ध्या शुभया संयुनक्तु' इति श्वेताश्वतरोपनिषदि च तत्प्रार्थनाद्वारा प्रतिपाद्यते। तत्र शुभत्वं जीवन्मुक्तिपरममुक्तिसुखप्रदत्वमेव, जाबालश्रुत्यैकार्थ्यात्। अनेन शिवस्य 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः' इति श्वेताश्वतरश्रुतिसिद्धं तामसत्वविरोधिसत्त्व प्रवर्तकत्वलक्षणं सात्त्विकत्वमुक्तम्, 'सत्त्वात् सुखं च ज्ञानञ्च' इति ज्ञानसुखयोः सत्त्वाधीनत्वस्मृतेः। अनिर्द्देश्यादि। अनेन तमसाभिभूतिर्निरस्ता। तं विश्वनाथम्। शुद्धसत्त्व स्वरूपमिति। केवलसत्त्वगुणात्मकम्। 'सत्त्वं देवा हरादयः' इति वासिष्ठरामायणे देवतिर्यङ्मनुष्यादिषु सत्त्वादिगुणविभागे शिवस्य प्राधान्येन सत्त्वमयत्वमुक्तम्। अपि च, सत्त्वं मायागतं सत्त्वं स्वरूपं शरीरं यस्य तमित्यर्थः। तथाच सूतसंहिता वचनम्—'यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणः। संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः॥ तथा यस्य तमः साक्षाच्छरीरं सात्त्विको गुणः। पालनाय त्रिमूर्तीनां स विष्णुस्स्यान्न चापरः॥' इति। विस्तरस्त्वत्र ब्रह्मतर्कस्तव व्याख्यायां द्रष्टव्यः ॥ ७ ॥

वदतीति॥ अनुदयवाणी नित्यवाणी श्रुतिः वदतीति योजना। दैवतानां जगदाराधनीयानाम्। पतीनां जगत्पालकानाम्। ईश्वराणां जगन्नियन्तॄणाम्। अत्र सर्वत्रापि अखिलानामिति विशेषणं योज्यम्। 'तमीश्वराणां परमं महेश्वरं तं दैवतानां परमं च दैवतम्। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥' इति श्वेताश्वतरोपनिषन्मन्त्रार्थोऽत्रानुसंहितः। एतेन भगवतः शाश्वतपाशुपत्य श्रयणोपपत्तिर्दर्शिता। शाश्वतं पाशुपत्यमिति। पाशुपत्यं हि सर्वान् जीवान् प्रत्याधिपत्यरूपं सर्वेश्वरत्वमेव। 'आत्मानः पशवः प्रोक्ताः सर्वे संसारवर्तिनः। तेषां पतित्वाद्देवेशः शिवः पशुपतिः स्मृतः॥' इति शैवलैङ्गादिपुराणोद्घोषात् स्वापे

क्षया उत्कृष्टादेव वरादानं लोके दृष्टम्। तथाच 'तमीश्वराणाम्' इत्यादिश्रुत्या सर्वोत्कृष्टस्य परमेश्वरस्य वरदातुः कस्यचिदभावात् पाशुपत्यमवश्यं नित्यमेवाङ्गी कार्यमिति भावः। ननु तर्हि 'सोऽब्रवीद्वरं वृणा, अहमेव पशुपतिरसानि' इति पाशुपत्यवरणश्रुतेः का गतिरिति चेदुच्यते—अनयैव श्रुत्या भगवतः पाशुपत्यस्य नित्यत्वमवगम्यते, अस्य तिवाक्यस्य प्रवृत्तेः पूर्वमेव पाशुपत्यवरवरणेन भाव्यम्, 'सोऽब्रवीत्' इति भूतार्थान्यथानुपपत्तेः। अतो यत्र यत्र अनादिकालप्रवृत्तेषु पूर्वपूर्व कल्पेषु इदं वाक्यं पठ्यते, ततस्ततः पूर्वसिद्धेन पाशुपत्येन भाव्यमित्यस्मादेव वाक्यात् पाशुपत्यमनादीति सिद्ध्यति। स्मर्यते च पाशुपत्यस्य नित्यत्वं लिङ्ग पुराणे—'स्वतःसिद्धं पाशुपत्यं युष्माकं पशुतापि च। तदत्र दर्शयाम्यद्य पण बन्धविनोदतः॥' इति। इत्थञ्च यथानित्यसिद्धतत्तद्देवताकर्मसम्बन्धप्रख्यापनद्वारा तत्तत्सन्निधिश्रुतो वरवरणार्थवादः कर्मप्रशंसैव। एवमयमपि नित्यसिद्धपशुपतिभाव प्रख्यापनद्वारा कर्मप्रशंसारूपोऽर्थवादः 'प्रजापतिरात्मनो वपामुत्खिदत्' इति वाक्य वदसन्तमेवार्थमभिदधातीति गुणवाद एवाङ्गीकरणीयः। एवमेवार्थवादतामङ्गीकृत्यैव 'त इषुं समस्कुर्वताग्निमनीकं सोमं शल्यं विष्णुं तेजनम्' इति त्रिपुरसंहारोपकरण तया रुद्रशेषभूताया इषोरवयवतां देवैस्तदिच्छयैव नीतत्वेन श्रुतस्य विष्णोरुत्य न्तापकर्षः समापतन्नपि परिहरणीय इति। श्रयतीति। यमित्यनुपज्यते। वीतराग मिति। अनेन निरतिशयस्वात्मानन्दनित्यास्वादप्रयुक्तनिरीहतयापि भगवतः पाशु पत्यवरणासम्भवः सूचितः। नित्यतृप्तत्वस्याप्युपलक्षणमिदम्। शिवशास्त्रेष्वाम्नायते च, 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभो र्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥ ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे।' इति। विस्तरस्तु श्रुतिसूक्तिमालादौ द्रष्टव्यः ॥ ८ ॥

इति विश्वनाथाष्टकं सव्याख्यानं

सम्पूर्णम् ॥

# शुद्धपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ७ | भर्व्ये | भर्त्यै |
| ५ | १३ | भुवनानि | भूतानि |
| ८ | १ | यिक | यीक |
| ,, | १२ | भिषजं | भिषजां |
| ,, | २२ | तामिति | तेति |
| ९ | २ | रज· पदे | रजपदे |
| १५ | १८ | देरुप | देरप्युप |
| १७ | १३ | त्वेता | त्वेना |
| २१ | ४ | रक्षति | रक्षन्ति |
| २२ | १२ | नन्य | नान्य |
| २३ | २३ | णवा | णखा |
| २४ | ६ | णव: | णख: |
| ,, | १४ | श्रेष्ट | श्रेष्टे |
| ,, | १९ | संख्याक | संख्याका |
| २३ | १ | क्रम | त्क्रम |
| ,, | १० | देक | देर्क |
| ४२ | १८ | न्वङ्ग | त्वङ्ग |
| ४३ | १२ | वांसू | पांसू |
| ४४ | १५ | श्यान्त्य | श्यन्त्य |
| ४७ | | श्लोकौ पूर्वापरव्यत्ययेन पठनीयौ | |
| ५१ | १७ | जमि | जैमि |
| ५१ | २७ | वेत्य | वेत्य |
| ५२ | २३ | तीत्य | ति तदित्य |
| ५३ | २४ | भरां | धारां |
| ५४ | १५ | याघ | याध्य |
| ,, | ,, | क्षम् | क्षः |
| ५५ | २८ | शानां | शानं |
| ५८ | ९ | पुंसा | इति पुंसा |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५९ | २० | पार्वती | पार्वति |
| ६० | १९ | स्सर्वे | स्सर्वै |
| ६४ | ७ | यम्मात् दालं तोर्थं | यस्मादाकामतो धाम् |
| ,, | १३ | व्यामा | व्याचभा |
| ,, | १५ | मेदज | स्वेदज |
| ,, | २४ | एक | ऐक |
| ६६ | १० | तोवि | तोऽवि |
| ,, | २४ | स्थानत् | स्थानात् |
| ६९ | १७ | सावपि मे | सावपि |
| ,, | १८ | ष्विधि | ष्विति |
| ७० | १७ | श्रयणा | श्रयणासम्भवा |
| ,, | २३ | पदास | पादस |
| ७४ | १५ | परम् | परमम् |
| ७५ | १४ | त्वाना | त्वानं |
| ७७ | १९ | धम | धम |
| ७८ | २ | सुपुम | सुपम |
| ,, | १४ | दुर्लभाम् | दुर्लभत्वेन प्रसिद्धाम् |
| ,, | २४ | तीति | सीति |
| ८३ | २१ | परत्व | परत्वा |
| ८४ | ५ | मक्षर | मनक्षरं |
| २० | १२ | वीर्य. | वीर्ये |
| ,, | २४ | वाम्य | वास्या |
| ९१ | ११ | गर्भकालम्य | यद्वा, गर्भकालस्य |
| ९५ | १५ | र्वत्या | र्वर्त्या |
| ९६ | २२ | रजात | रजात |
| ९९ | १४ | भूते इत्य | भूतेत्य |
| ,, | २३ | मंदर्येऽ | मंदर्थे |
| १०३ | ५. | किन्तु | किन्न |
| ,, | १९ | पादा· | पादोक्ते |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १०३ | २३ | किन्वि | किन्ने |
| १०६ | २ | कजि | कति |
| १०७ | १५ | रजाः | रजा |
| १०८ | १८ | र्य्यावा | र्य्याभावा |
| ११३ | १५ | रिता | रितं |
| ११८ | ६ | पीतः | पीतं |
| १२१ | २१ | नारदः | नारद |
| १२३ | १६ | मनुक्तं | मनुयक्तं |
| १२५ | ७ | वाराण | वारण |
| १२६ | २४ | तो वु | तोऽवु |
| १३२ | १७ | द्दर्शती | दगती |
| ” | १२ | जनसः | जनासः |
| १३४ | १६ | स्वात्मन्त्र् | स्वातमन्त्र |
| ” | २२ | स्वात्मन्त्र् | स्वातमन्त्र |
| १३५ | १३ | बन्ध | बद्ध |
| ” | १६ | बन्धा | बद्धा |
| ” | १८ | स्यो विद्या | स्योऽविद्या |
| १३८ | २ | भिन्नो | भिनो |
| १३९ | १५ | ताव्दे | ताब्धे |
| १४० | ८ | मिश्र | मिश्रे |
| १४५ | १२ | शेदुपदेष्टा | शेद्रष्टा |
| १५० | २४ | मार्थे | मर्थ |
| १५१ | २५ | गिनि | मिति |
| ” | २६ | राज | रज |
| १५३ | २४ | नमष्कु | नमस्कु |
| १५५ | २४ | मुत्वोन्म् | उन्म् |
| १६३ | २६ | यन | यनः |
| १६६ | ११ | मर्थ्ये | मर्त्ये |
| १७६ | २३ | तयोर्भगवती | तनो दयावती |

पृष्ठम् १०४ पङ्क्तिः २५, उपमा इत्यनन्तरं, क्रमिकामित्यनेन तरङ्गाणां सातत्यं द्योत्यते। तेन निरोधनस्य तथात्वमित्यपि योजनीयम्॥

पृष्ठम् १०९ पङ्क्तिः ७, भवतीत्यनन्तरं, तथाच भरतः—'वज्रिण्या मुद्रया शक्रं पद्मिन्या दर्शयेद्विधिम्। शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रया॥' इतीत्यपि योजनीयम्॥

पृष्ठम् १०९ पङ्क्ति. १८, श्रुतिः इत्यनन्तरं, यद्यप्येवं सति 'ब्रह्मणे नमो अस्त्वग्नये' इत्याद्योषध्यादिनमसां, तद्वत् 'श्वभ्यः श्वपतिभ्यश्च वो नमः' इत्यादिनिकृष्टनमसां च श्रुतिबोधितानां नमस्कारानर्हत्वाद्व्यर्थत्वापत्तिः, तथापि अष्टमूर्तेर्भगवतोऽधिष्ठानतया सर्वस्यास्य जगतः सामान्यतो विशेषतश्च नमस्यताव्यप देशो भक्तियोगप्रयुक्त एव। तथाच सर्वेषां नमसामीश्वरताप्रयुक्तविषया, तत्सन्निक र्षताप्रयुक्तविषया वा अवसानभूमित्वं परमेश्वरस्यैव। उक्तञ्च हरदत्ताचार्यैः—'द्वेधा नमो विमृशतः प्रतिभाति लोके वेदेषु वा विषमलोचन नान्यरूपम्। यत्तन्नम स्त्वयि तदीश्वरताप्रयुक्तं त्वत्सन्निकर्षविहितं यदनीश्वरेषु॥' इति। अधिकं तु श्रुतिसूक्तिमालायां द्रष्टव्यम् इत्यपि योजनीयम्॥

पृष्ठम् ११० पङ्क्तिः १३, सूच्यते इत्यनन्तरं, भजे इति। भज सेवा याम्। सेवा चात्र पूजादानहोमादयो विंशाक्षरमनुनैव कार्या। तथाचोक्तं काशी खण्डे—'नमः शिवायै प्रथमं नारायण्यै पदं ततः। दशहरायै पदमिति गङ्गायै मन्त्र एव हि॥ स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनुः। पूजा दानं जपो होमोऽनेनैव मनुना स्मृतः॥' इतीत्यपि योजनीयम्॥

पृष्ठम् ११० पङ्क्तिः १४, पतन्तीत्यनन्तरं, तथा वा पाठः इत्यपि योजनीयम्॥

पृष्ठम् १३१ पङ्क्तिः ११, भाव इत्यनन्तरं, जागर्तीति। अत इति दोषः इत्यपि योजनीयम्॥

पृष्ठम् १३५ पङ्क्तिः २२, इति वा इत्यनन्तरं, चक्रपाणिरित्यादावपि व्यधिकरणो बहुव्रीहिः। पदानतासङ्गे पदानताः असङ्गाः विरक्ता यस्यास्तथा भूते इत्यपि योजनीयम्॥

पृष्ठम् १४३ पङ्क्तिः २२, लीय इति इत्यनन्तरं, 'विभाषा कदा कर्ह्योः' इति भविष्यति लट् इत्यपि योजनीयम्॥

| टम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १७६ | २३ | द्रवा | द्रवा |
| १७९ | २५ | रन्ता | रन्ती |
| १८१ | १२ | झद्वय | हुझद्वय |

## विश्वनाथाष्टकम् ।

| | | | |
|---|---|---|---|
| ३ | ६ | प्राद्रवद् | प्राद्रवन् |
| ३ | १८ | मृढा | मृडा |
| ,, | १९ | महिमा | निजतत्त्वं |
| ७ | ६ | वामा | वावा |
| ,, | १८ | मूर्त्यतुल्या | मूर्त्या तुल्या |
| ८ | ४ | वर | पर |
| ,, | ५ | ब्रह्म | यो ब्रह्म |
| ,, | १० | रुद्रविष्णु | रुद्रविष्णू |
| ११ | ५ | निवाक्य | श्रुतिवाक्य |

# अनुबन्धः।

पृष्टम् ५ पङ्क्तिः १३, तथाच श्रुतिः इत्यनन्तरं, 'पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि' इति। अत्र भाष्यम्—अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्त्तीनि प्राणिजातानि पादः चतुर्थोंऽशः। अस्य पुरुषस्य अवशिष्टं त्रिपात् स्वरूपममृतं विनाशरहितं सत् दिवि द्योतमानात्मके स्वप्रकाशस्वरूपे। व्यवतिष्ठत इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तम्' इत्याम्नातस्य तस्य परब्रह्मणः इयत्ताया अभावात् पादचतुष्टयं निरूपयितुमशक्यम्, तथापि जगदिदं परब्रह्मस्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वव्यपदेश· इति इति योजनीयम्॥

पृष्टम् १३ पङ्क्तिः १०, भजनीयमित्यनन्तरं, स्फुरदित्यनेन देवस्य इत्यस्य सवितुः इत्यत्रान्वय इति सूचितम् इत्यपि योजनीयम्॥

पृष्टम् १० पङ्क्तिः १८, रञ्जितामित्यर्थ इत्यनन्तरं, विशेषणाभ्यां दर्शने औत्सुक्यं सूच्यते इत्यपि योजनीयम्॥

पृष्टम् ३८ पंङ्क्तिः २२, काशीविशेषणम् इत्यनन्तरम्, इति तद्व्याख्या इत्यपि योजनीयम्॥

पृष्टम् ६० पङ्क्ति· २१, काश्यामित्यनन्तरं, गङ्गास्नानपूर्वकम् इत्यपि योजनीयम्॥

पृष्टम् ९४ पङ्क्तिः १४, अपराधिनम् इत्यनन्तरं, श्रुतिस्मृत्योर्गङ्गाया आज्ञात्व कथनं वक्ष्यमाणपञ्चरूपतया अभेदमाश्रित्येति बोध्यम् इत्यपि योजनीयम्॥

पुष्टम् ९४ पङ्क्तिः २३, इत्यर्थ इत्यनन्तरं, रजनीशब्द इकारान्तोप्यस्तीति शब्दकल्पद्रुमे स्पष्टम् इत्यपि योजनीयम्॥

पुष्टम् ९४ पङ्क्तिः २४, प्रसिद्धमित्यनन्तरं, तथाच शाकुन्तले—'सरसिजमनुविद्धं शैवलेनापि रम्यम्' इति इत्यपि योजनीयम्॥

पुष्टम् ९५ पङ्क्तिः १८, सुचिरम् इत्यतः पूर्वं, मुनिवर्यैरिति। मुनिवर्यैरपीत्यर्थ इत्यपि योजनीयम्॥

पुटम् १०४ पङ्क्ति. २५, उपमा इत्यनन्तरं, क्रमिकानित्यनेन तरङ्गाणां सातत्यं द्योत्यते। तेन निरोधनस्य तथात्वमित्यपि योजनीयम् ॥

पुटम् १०९ पङ्क्तिः ७, भवतीत्यनन्तरं, तथाच भरत·—'वज्रिण्या मुद्रया शक्रं पद्मिन्या दर्शयेद्विधिम्। शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रया ॥' इतीत्यपि योजनीयम् ॥

पुटम् १०९ पङ्क्तिः १८, श्रुतिः इत्यनन्तरं, यद्यप्येवं सति 'ब्रह्मणे नमो अस्त्वग्नये' इत्याद्योषध्यादिनमसां, तद्वत् 'श्वभ्य. श्वपतिभ्यश्च वो नमः' इत्यादिनिकृष्टनमसा च श्रुतिबोधितानां नमस्कारानर्हत्वाद्व्यर्थत्वापत्तिः, तथापि अष्टमूर्तेर्भगवतोऽधिष्ठानतया सर्वस्यास्य जगतः सामान्यतो विशेषतश्च नमस्यताव्यपदेशो भक्तियोगप्रयुक्त एव। तथाच सर्वेषां नमसामीश्वरताप्रयुक्तविषया, तत्सन्निकर्षताप्रयुक्तविषया वा अवसानभूमित्वं परमेश्वरस्यैव। उक्तञ्च हरदत्ताचार्यैः—'द्वेधा नमो विमृशतः प्रतिभाति लोके वेदेषु वा विषमलोचन नान्यरूपम्। यत्तन्नमस्त्वयि तदीश्वरताप्रयुक्तं त्वत्सन्निकर्षविहितं यदनीश्वरेषु ॥' इति। अधिकं तु श्रुतिसूक्तिमालायां द्रष्टव्यम् इत्यपि योजनीयम् ॥

पुटम् ११० पङ्क्ति· १३, सूच्यते इत्यनन्तरं, भजे·इति। भज.सेवायाम्। सेवा चात्र पूजादानहोमादयो विंशाक्षरमनुनैव कार्या। तथाचोक्तं काशीखण्डे—'नमः शिवायै प्रथमं नारायण्यै पदं ततः। दशहरायै पदमिति गङ्गायै मन्त्र एव हि ॥ स्वाहान्तः प्रणवादिश्च भवेद्विंशाक्षरो मनु·। पूजा दानं जपो होमोऽनेनैव मनुना स्मृतः ॥' इतीत्यपि योजनीयम् ॥

पुटम् ११० पङ्क्तिः १४, पतन्तीत्यनन्तरं, तथा वा पाठः इत्यपि योजनीयम् ॥

पुटम् १३१ पङ्क्ति· ११, भाव इत्यनन्तरं, जागर्मीति। अत इति शेषः इत्यपि योजनीयम् ॥

पुटम् १३५ पङ्क्तिः २२, इति वा इत्यनन्तरं, चक्रपाणिरित्यादावपि व्यधिकरणो बहुव्रीहिः। पदानतासङ्गे पदानताः असङ्गाः विरक्ता यस्यास्तथाभूते इत्यपि योजनीयम् ॥

पुटम् १४३ पङ्क्तिः २२, लीय इति इत्यनन्तरं, 'विभाषा कदा कर्ह्योः' इति भविष्यति लृट् इत्यपि योजनीयम् ॥

पुटम् १६७ पङ्क्तिः २३, मुक्तिरित्यर्थः इत्यनन्तरम्, अनन्यसाध्या मुक्तिरत्र तृणवल्लभ्यत इत्युक्तं शिवोत्कर्षमञ्जर्याम्। तत्र हि, 'यद्दत्तुं कृतलोम एव परमं धाम स्वभक्तान् पुरा काकुत्स्थोप्यतिसन्दधे स भुवनान्यन्यानि सृष्ट्वा तदा। आवेधो मशकं तदेव तृणवद्दत्तेऽविमुक्ते तु यः स स्वामी मम दैवतं तदितरो नाम्नापि नाम्नायते ॥' इति इत्यपि योजनीयम्॥

पुटम् १७७ श्लोकः २, श्लोकोऽयमेवं पठनीयः—

संख्यातीतानि यानि त्रिपुरहरहरिश्रीमृडानीस्वरूपे
लिङ्गानि स्थापितानि त्रिभुवननिलयैर्यानि तीर्थानि गङ्गे।
काश्यां स्मृत्यैव नानाजनिकृतदुरितव्यूहविध्वंसकेभ्य-
स्तेभ्यो लोकोत्तरेभ्यः प्रणतिमहमितः सर्वदा सर्वदेभ्यः ॥ इति।

अस्य व्याख्या—संख्येति॥ त्रिपुरेत्यादि। गङ्गे इत्यस्य विशेषणमेतत्। गङ्गायाः शिवाद्यभेदात् पञ्चरूपत्वं नारदीये उक्तम्। यथा—'यथा शिवस्तथा विष्णुर्यथा विष्णुस्तथाह्युमा। उमा यथा तथा गङ्गा चात्र भेदो न विद्यते॥ विष्णुरुद्रान्तरं यश्च गङ्गागौर्यन्तरं तथा। लक्ष्मीगौर्यन्तरं यश्च प्रब्रूते मूढधीस्तु सः॥' इति। लिङ्गानीति। लिङ्गशब्दार्थनिरुक्तिरेवं पाद्मे—'लिङ्गं लिङ्गशरीरस्य विश्लेषं गमयेत् परम्। तेन लिङ्गमिति ख्यातमपवर्गैकसाधनम्॥' इति। स्मृत्या स्मृतिमात्रेण। विध्वंसकेभ्यः विशेषेण सवासनं नाशकेभ्यः। सर्वदेभ्यः निखिलाभीष्टप्रदातृभ्यः इति॥

पुटम् १७९ पङ्क्तिः, २३ भूय इति इत्यनन्तरं, भूयः पुनः। अस्य घट्टने त्यनेन सम्बन्ध. इत्यपि योजनीयम्॥

## विश्वनाथाष्टकम्।

पुटम् १ पङ्क्तिः १४, श्रुतेरित्यनन्तरम्, अत्र कृत्याकृत्यादिति। कृत्यस्य अकृत्यात् अकरणादित्यर्थः। इदञ्च अकृत्यस्य करणादित्यस्याप्युपलक्षणं बोध्यमित्यपि योजनीयम्॥

पुटम् ६ पङ्क्तिः २२, महेशः इत्यनन्तरम्, 'सर्वालङ्कारयुक्तः सरसिज निलयो व्याघ्रचर्माम्बवासाः। ध्येयो मुक्तापरागामृतरसकलितादिप्रभः पञ्चवक्त्रस्त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलातुङ्गमौलिः॥' इत्यपि योजनीयम्॥

